| கல்யாணப் பெயர் | புராணம் |
|---|---|
| 33. மாத்ரீ கல்யாணம் | மஹாபாரதம் I-122 |
| 34. மாதவீ ,, | மஹாபாரதம் V-120 |
| 35. மீனாக்ஷீ ,, | ஹாலாஸ்ய மாஹாத்மியம் 9 |
| 36. மோஹினீ-ருக்மாங்கத ,, | பிருஹந் நாரதீயம் II-13 |
| 37. ராதா கல்யாணம் | A. தேவீ பாகவதம் IX-50<br>B. நாரதீயம் II-58-59<br>C. பிரும்மவைவர்தம் IV-15 |
| 38. ருக்மிணீ ,, | A. விஷ்ணுபுராணம் V-26<br>B பாகவதம் X-54<br>C. ஹரிவம்சம் II-59<br>D. பிரும்ஹ புராணம் 199<br>E. பிரும்ஹ வைவர்தம் IV-109 |
| 39. ரேவதீ ,, | A. பாகவதம் V-52<br>B. பிரும்ஹ புராணம் 7<br>C. பிரும்ஹவைவர்தம் IV-106<br>D. ஹரிவம்சம் II-58 |
| 40. லக்ஷ்மீ ,, | A. பாகவதம் VIII-8<br>B. விஷ்ணு புராணம் I-8-9<br>C. ஸ்காந்த புராணம் I-11 |
| 41. லலிதா ,, | பிரும்ஹாண்டபுராணம் II/12-15 |
| 42. லோபாமுத்ரா ,, | A. மஹாபாரதம் III/94-95<br>B. ஸ்காந்தம்-காசீ கண்டம் 25<br>C. துலாகாவேரீ மாஹாத்மியம்24 |
| 43. வல்லீ ,, | ஸ்காந்தம்-சங்கரஸம்ஹிதை V/3-5 |
| 44. விஷ்டி-விச்வருப ,, | பிராம்ஹ புராணம் 165 |
| 45. வைசாலினீ ,, | மார்க்கண்டேய புராணம் 122-124 |
| 46. சகுந்தலா ,, | மஹாபாரதம் I/88-94 |
| 47. சர்மிஷ்டா ,, | A. மஹாபாரதம் I-63-76<br>B. பாகவதம் IX-18<br>C. மத்ஸ்ய புராணம் 27-32 |
| 48. சசி கலா ,, | தேவீ பாகவதம் III/18-22 |
| 49. சாந்தா ,, | A. மஹாபாரதம் III-114<br>B. பாகவதம் IX-23<br>C. ஹரிவம்சம் I-31 |
| 50. ஸத்திய பாமா ,, | A. பாகவதம் X-56<br>B. விஷ்ணு புராணம் IV-13<br>C. பிராம்ம புராணம் 16<br>D. ஹரிவம்சம் I-38 |

| கல்யாணப் பெயர் | | புராணம் |
|---|---|---|
| 51. ஸத்தியவதீ | கல்யாணம் | மஹாபாரதம் XIII-7 |
| 52. ஸாவித்ரீ | ,, | A. மஹாபாரதம் III-294-296<br>B. மத்ஸ்ய புராணம் 208-214<br>C. பிரும்மவைவர்தம் II-23-24 |
| 53. ஸீதா | ,, | வால்மீகி ராமாயணம் I-73 |
| 54. ஸீமந்தினீ | ,, | ஸ்காந்தம்-ப்ராம்ஹகண்டம் III-3-8- |
| 55. ஸுகன்யா | ,, | A. பாகவதம் IX-3<br>B. தேவீபாகவதம் VII-3-5<br>C. மஹாபாரதம் III-123-126<br>,, I-1 |
| 56. ஸுநீதா | ,, | பத்மபுராணம் II.32-35 |
| 57. ஸுபத்ரா | ,, | A. மஹாபாரதம் I-62<br>B. பாகவதம் X-86<br>C. துலாகாவேரி மாஹாத்ம்யம் 20 |
| 58. ஸ்வாஹாதேவீ | ,, | A. மஹாபாரதம் III-231<br>B. தேவீபாகவதம் IX-43<br>C. பிரும்மவைவர்தம் II-40 |

இக்கல்யாணங்களிலிருந்து 27 கல்யாணங்கள் இப்புத்தகத்தில் தொகுக்கப்பட்டிருக்கின்றன. நக்ஷத்திரங்கள் 27 ஆனதால் அந்த எண்ணையே தொகுப்பதற்கும் அடிப்படையாக எடுத்துக்கொண்டோம். ஆக பாராயணம் செய்யும்போது அவரவர்கட்கு பிடித்தமான ஒரு கல்யாணப் பகுதியிலிருந்து ஏதாவது ஒரு நல்ல நக்ஷத்திர தினத்திலிருந்து ஆரம்பித்து அடுத்த அந்த நக்ஷத்திரம் வருவதற்குள் ஒரு தடவைப் படித்து முடிக்கலாம்.

ஒரே கல்யாணப் பகுதி பார்வதீ, உமா, கௌரீ என்று மூன்று பெயருடன் மூன்று புராணங்களிலிருந்து தொகுக்கப் பட்டிருக்கிறது. இவைகளில் கௌரீகல்யாணம் என்றுதான் கல்யாணங்களில் பாடக்கேட்கிறோம். ஆக கௌரீ கல்யாணம் என்ற பகுதியே போதுமானது என நினைத்து மற்றவையை விட்டிருக்கலாம். ஆனால் அச்சான பிறகு இவ்வெண்ணம் உண்டானதால் அவ்விரண்டையும் விடமுடியாமல் சேர்க்க நேர்ந்தது.

இதில் பல Index சேர்த்துள்ளேன். இப்புத்தகத்திலுள்ள பழமொழிகள் தனிப்பட்டு தொகுக்கப்பட்டன. துளஸீ காமாக்ஷீ, ஸந்தியா முதலான தேவதைகளின் பெயர்கட்கு பொருள் பல புராணங்களில் விளக்கப்பட்டிருக்கின்றன. அவைகளும் தனியாக சேர்க்கப்பட்டன.

கல்யாண மஞ்ஜரீ என இப்புத்தகத்திற்கு பெயர் வைக்கப் பட்டது. சாதாரணமாக "கல்யாணம்" என்ற ஸம்ஸ்கிருத சொல் நம் தமிழ் நாட்டில் "விவாஹம்" என்ற பொருளில் வழங்கப் படுகிறது. ஆனால் ஸம்ஸ்கிருத பாஷையில் कल्याण என்ற சொல் லிற்கு சற்று விரிவாகவே பொருள் கிடைக்கிறது.

" शिवं भद्रं कल्याणं मङ्गलं शुभम् " என்று அமர கோசத்திலிருக்கிறது.

कल्याणम् என்ற சொல்லுக்கு कल्ये=प्रातः अण्यते=शब्द्यते (காலையில் சொல்லத்தக்கது)என்ற பொருள் தான் பகுதி விகுதியினால் அறியப்படுகிறது. தமிழ் "லெக்ஸிகோனி"லும் கல்யாணம் என்ற சொல்லுக்கு விவாஹம் என்ற பொருளைக் கண்டேன். ஆகவே இப் புத்தகம் விவாஹங்களின் தொகுப்பாகவும் காலையில் பாராயணம் செய்வதினால் நற்பயன் ஏற்படுவது திண்ணம் என்பதற்காகவும், ஏற் பட்டதனால் "கல்யாண மஞ்ஜரீ" என்ற பெயர் தற்செயலாக நன்கு அமைந்ததாகவே நினைக்கின்றேன். மேலும் இப்புத்தகத்தில் பல நல்ல ஸ்தோத்திரங்கள் தொகுத்து கடைசியில் வெளியிடப்பட்டன. அவைகளில் சங்கர பகவத்பாதாள் அவர்களாலியற்றப்பட்டவையும் புராணங்களிலிருந்து எடுக்கப்பட்டவையுமான சுலோகங்கள் உள்ளன. அவைகளை பாராயணத்திற்கு முன்னால் தியான சுலோக மாகவும் பாராயணத்திற்குப்பின் பிரார்த்தனை சுலோகமாகவும் படிக்கலாம்.

இப்பணியைச் செய்ய எனக்கு வாய்ப்பளித்தது எனது அறிவு வளர்ச்சிக்கு பெரும் உதவியாகியது. இப்பெரும் உதவியை அளித்த ஸ்ரீ M. A. ராஜகோபாலய்யர் அவர்கட்கு எனது நன்றியை தெரி வித்துக் கொள்கிறேன். இத்தொகுப்பில் என்னையுமறியாமல் ஏதாவது பிழைகள் ஏற்பட்டிருந்தால் அதை மன்னிக்கும் படியும் இப்புத்தகத்தை யாவரும் படித்து ஸர்வமங்களத்தையும், அடையும் படி எல்லாம் வல்ல இறைவனை வேண்டுகிறேன்.

PRESIDENCY COLLEGE
MADRAS - 5
20th April 1962.

R. THANGASWAMI.

॥ श्रीः ॥

शुभं अस्तु

# * श्री गणेशकल्याणम् *

( शिवपुराणात् उद्धृतम् )

नारद उवाच—

गणेशस्य श्रुता तात सम्यग्जनिरनुत्तमा ।
चरित्रमपि दिव्यं वै सुपराक्रमभूषितम् ॥ १

ततः किमभवत् तात तत्वं वद सुरेश्वर ।
शिवाशिवयशस्फीत महानन्दप्रदायकम् ॥ २

ब्रह्मोवाच—

साधु पृष्टं मुनिश्रेष्ठ भवता करुणात्मना ।
श्रूयतां दत्तकर्णं हि वक्ष्येऽहं ऋषिसत्तम ॥ ३

शिवा शिवश्च विप्रेन्द्र द्वयोश्च सुतयोः परम् ।
दर्शं दर्शं च तल्लीलां महत्प्रेम समावहत् ॥ ४

पित्रोर्लालयतो स्तत्र सुखं चाति व्यवर्द्धत ।
सदा प्रीत्या मुदा चातिखेलनं चक्रतुस्सुतौ ॥ ५

तावेव तनयौ तत्र मातापित्रो र्मुनीश्वर ।
महाभक्त्या सदा युक्तौ परिचर्यां प्रचक्रतुः ॥ ६

षण्मुखे च गणेशे च पित्रोस्तदधिकं सदा ।
स्नेहो व्यवर्द्धत महान् शुक्लपक्षे यथा शशी ॥ ७

कदाचित्तौ स्थितौ तत्र रहसि प्रेमसंयुतौ ।
शिवा शिवश्च देवर्षे सुविचारपरायणौ ॥ ८

शिवाशिवावूचतुः—

विवाहयोग्यौ संजातौ सुताविति च तावुभौ ।
विवाहश्च कथं कार्यः पुत्रयोरुभयोः शुभम् ॥ ९
षण्मुखश्च प्रियतमः गणेशश्च तथैव च ।
इति चिन्तासमुद्विग्नौ लीलानन्दौ बभूवतुः ॥ १०
स्वपित्रोर्मतमाज्ञाय तौ सुतावपि संस्पृहौ ।
तदिच्छया विवाहार्थं बभूवतुरथो मुने ॥ ११
अहं च परिणेष्यामि ह्यहं चैव पुनः पुनः ।
परस्परं च नित्यं वै विवादे तत्परावुभौ ॥ १२
श्रुत्वा तद्वचनं तौ च दंपती जगतां प्रभू ।
लौकिकाचारमाश्रित्य विस्मयं परमं गतौ ॥ १३
किं कर्तव्यं कथं कार्यो विवाहविधिरेतयोः ।
इति निश्चित्य ताभ्यां वै युक्तिश्च रचिताद्भुता ॥ १४
कदाचित्समये स्थित्वा समाहूय स्वपुत्रकौ ।
कथयामासतुस्तत्र पुत्रयोः पितरौ तदा ॥ १५

शिवाशिवावूचतुः—

अस्माकं नियमः पूर्वं कृतश्च सुखदो हि वाम् ।
श्रूयतां सुसुतो प्रीत्या कथयावो यथार्थकम् ॥ १६
समौ द्वावपि सत्पुत्रौ विशेषो नात्र लभ्यते ।
तस्मात्पणः कृतः शन्दः पुत्रयोरुभयोरपि ॥ १७

यश्चैव पृथिवीं सर्वां क्रान्त्वा पूर्वमुपाव्रजेत् ।
तस्यैव प्रथमं कार्यो विवाहश्शुभलक्षणः ॥ १८

ब्रह्मोवाच—

तयोरेवं वचःश्रुत्वा शरजन्मा महाबलः ।
जगाम मन्दिरात्तूर्णं पृथिवीक्रमणाय वै ॥ १९
गणनाथश्च तत्रैव संस्थितो बुद्धिसत्तमः ।
सुबुद्ध्या संविचार्येति चित्त एव पुनः पुनः ॥ २०
किं कर्तव्यं क्व गन्तव्यं लङ्घितुं नैव शक्यते ।
क्रोशमात्रगतः स्याद्धि गम्यते न मया पुनः ॥ २१
किं पुनः पृथिवीमेतां क्रान्त्वा चोपार्जितं सुखम् ।
विचार्येति गणेशस्तु यच्चकार शृणुष्व तत् ॥ २२
स्नानं कृत्वा यथान्यायं समागत्य स्वयं गृहम् ।
उवाच पितरं तत्र मातरं पुनरेव सः ॥ २३
आसने स्थापिते ह्यत्र पूजार्थं भवतो रिह ।
भवन्तौ संस्थितौ तातौ पूर्यतां मे मनोरथः ॥ २४

ब्रह्मोवाच—

इति श्रुत्वा वचस्तस्य पार्वतीपरमेश्वरौ ।
अस्थातामासने तत्र तत्पूजाग्रहणाय वै ॥ २५
तेनाथ पूजितौ तौ च प्रक्रान्तौ च पुनः पुनः ।
एवं च कृतवान् सप्त प्रणामास्तु तथैव सः ॥ २६

बद्धाञ्जलिरथोवाच गणेशो बुद्धिसागरः ।
स्तुत्वा बहुविधस्तात पितरौ प्रेमविह्वलौ ॥ २७

गणेश उवाच—

भो मातर्भो पितः त्वं च शृणु मे परमं वचः ।
शीघ्रं चैवात्र कर्तव्यो विवाहश्शोभनो मम ॥ २८

ब्रह्मोवाच—

इत्येवं वचनं श्रुत्वा गणेशस्य महात्मनः ।
महाबुद्धिनिधिं तं तौ पितरावूचतुस्तदा ॥ २९

शिवाशिवावूचतुः—

प्रक्रामेत भवान्सम्यक् पृथिवीं च सकाननाम् ।
कुमारो गतवान् तत्र त्वं गच्छ पुर आव्रज ॥ ३०

ब्रह्मोवाच—

इत्येवं वचनं श्रुत्वा पित्रोर्गणपतिर्द्रुतम् ।
उवाच नियतस्तत्र वचनं क्रोधसंयुतः ॥ ३१

गणेशउवाच—

भो मात र्भो पितः धर्मरूपौ प्राज्ञौ युवां मतौ ।
धर्मतः श्रूयतां सम्यक् वचनं मम सत्तमौ ॥ ३२
मया तु पृथिवी क्रान्ता सप्तवारं पुनः पुनः ।
एवं कथं ब्रुवाते वै पुनश्च पितराविह ॥ ३३

ब्रह्मोवाच—

तद्वचस्तु तदा श्रुत्वा लौकिकीं गतिमाश्रितौ ।
महालीलाकरौ तत्र पितरावूचतुश्च तम् ॥ ३४

पितरावूचतुः—

कदा क्रान्ता त्वया पुत्र पृथिवी सुमहत्तरा ।
ससद्वीपा समुद्रान्ता महद्भिर्गहनैर्युता ॥ ३५

ब्रह्मोवाच—

तयोरेवं वचः श्रुत्वा शिवाशङ्करयोर्मुने ।
महाबुद्धिनिधिः पुत्रो गणेशो वाक्यमब्रवीत् । ३६

गणेश उवाच—

भवतोः पूजनं कृत्वा शिवाशङ्करयोरहम् ।
स्वबुद्ध्या हि समुद्रान्तपृथ्वीकृतपरिक्रमः ॥ ३७
इत्येवं वचनं वेदे शास्त्रे वा धर्मसञ्चये ।
वर्तते किं च तत्तथ्यं न हि किं तथ्यमेव वा ॥ ३८
पित्रोश्च पूजनं कृत्वा प्रक्रान्ति च करोति यः ।
तस्य वै पृथिवीजन्यफलं भवति निश्चितम् ॥ ३९
अपहाय गृहे यो वै पितरौ तीर्थमाव्रजेत् ।
तस्य पापं तथा प्रोक्तं हनने च तयोर्यथा । ४०
पुत्रस्य च महत्तीर्थं पित्रोश्चरणपङ्कजम् ।
अन्यतीर्थं तु दूरे वै गत्वा संप्राप्यते पुनः ॥ ४१
इदं सन्निहितं तीर्थं सुलभं धर्मसाधनम् ।
पुत्रस्य च स्त्रियश्चैव तीर्थं गेहे सुशोभनम् ॥ ४२
इति शास्त्राणि वेदाश्च भाषन्ते यन्निरन्तरम् ।
भवद्भ्यां तत्प्रकर्तव्यं असत्यं पुनरेव च ॥ ४३

2

भवदीयं त्विदं रूपं असत्यं च भवेदिह ।
तदा वेदोप्यसत्यो वै भवेदिति न संशयः ॥ ४४
शीघ्रं च भवितव्यो मे विवाहः क्रियतां शुभः ।
अथवा वेदशास्त्रं च व्यलीकं कथ्यतामिति ॥ ४५
द्वयोः श्रेष्ठतमं मध्ये यत्स्यात्सम्यग्विचार्य तत् ।
कर्तव्यं च प्रयत्नेन पितरौ धर्मरूपिणौ ॥ ४६

ब्रह्मोवाच—

इत्युक्त्वा पार्वतीपुत्रः स गणेशः प्रहृष्टधीः ।
विरराम महाज्ञानी तदा बुद्धिमतां वरः ॥ ४७
तौ दम्पती च विश्वेशौ पार्वतीशङ्करौ तदा ।
इति श्रुत्वा वचस्तस्य विस्मयं परमं गतौ ॥ ४८
ततः शिवा शिवश्चैव पुत्रं बुद्धिविचक्षणम् ।
संप्रशस्योचतुः प्रीत्या तौ यथार्थप्रभाषिणम् ॥ ४९

शिवाशिवावूचतुः—

पुत्र ते विमला बुद्धिः समुत्पन्ना महात्मनः ।
त्वयोक्तं यद्वचश्चैव तत्तथैव च नान्यथा ॥ ५०
समुत्पन्ने च दुःखे च यस्य बुद्धिर्विशिष्यते ।
तस्य दुःखं विनश्येत सूर्ये दृष्टे यथा तमः ॥ ५१
वेदशास्त्रपुराणेषु बालकस्य यथोदितम् ।
त्वया कृतं तु तत्सर्वं धर्मस्य परिपालनम् ॥ ५२

द्वे भार्ये सिद्धिबुद्धी तदनुसहचरे ऋद्धिवृद्धी गुणाढ्ये

द्वौ पुत्रौ लक्ष्यलाभौ सकलगुणमयौ मण्डपे कल्पवृक्षः ।

गेहे यस्य प्रभुत्वं परं अमृतसमं मोदकाखण्डमिश्रं

भूयात् भूतैः गणेशः सकलगुणकरानन्दकारी कुटुम्बः ॥

सम्यक् कृतं त्वया यच्च तत्केनाऽपि भवेदिह ।
आवाभ्यां मानितं तच्च नान्यथा क्रियतेऽधुना ॥ ५३

इत्युक्त्वा तौ समाश्वस्य गणेशं बुद्धिसागरम् ।
विवाहकरणे चास्य मतिं चक्रतुरुत्तमाम् ॥ ५४

ब्रह्मोवाच—

एतस्मिन्नन्तरे तत्र विश्वरूपः प्रजापतिः ।
तदुद्योगं सुविचार्य सुखमाप प्रसन्नधीः ॥ ५५

विश्वरूपप्रजेशस्य दिव्यरूपे सुते उभे ।
सिद्धिर्बुद्धिरिति ख्याते शुभे सर्वाङ्गशोभने ॥ ५६

ताभ्यां चैव गणेशस्य गिरिजा शङ्करप्रभू ।
महोत्सवं विवाहं च कारयामासतुः मुदा ॥ ५७

संतुष्टाः देवताः सर्वाः तद्विवाहे समागमन् ।
यथा चैव शिवस्यैव गिरिजायाः मनोरथः ॥ ५८

तथा च विश्वकर्माऽसौ विवाहं कृतवांस्तथा ।
तथा च ऋषयो देवाः लेभिरे परमां मुदम् ॥ ५९

गणेशोऽपि तदा ताभ्यां सुखं चैवातिचिन्तकम्
प्राप्तवांश्च मुने तत्तु वर्णितुं नैव शक्यते ॥ ६०

कियता चैव कालेन गणेशस्य महात्मनः ।
द्वयोः पत्न्योश्च द्वौ दिव्यौ तस्य पुत्रौ बभूवतुः ॥ ६१

सिद्धेर्गणेशपत्न्यास्तु क्षेमनामा सुतोऽभवत् ।
बुद्धेर्लाभाभिधः पुत्रो ह्यासीत्परमशोभनः ॥ ६२

इत्थं विहारै रुचिरैः कौमारैर्भक्तवत्सला ।
जहाववस्थां कौमारीं स्वेच्छाधृतनराकृतिः ॥ ८

बाल्यं व्यतीत्य स्म प्राप्य किञ्चिद्यौवनतां सती ।
अतीव तपसाङ्गेन सर्वाङ्गेषु मनोहरा ॥ ९

दक्षस्तां वीक्ष्य लोकेशः प्रोद्भिन्नान्तर्वयस्थिताम् ।
चिन्तयामास भर्गाय कथं दास्य इमां सुताम् ॥ १०

अथ सापि स्वयं भर्गं प्राप्तुमैच्छत्तदान्वहम् ।
पितुर्मनोगतिं ज्ञात्वा मातुर्निकटमागता ॥ ११

पप्रच्छाज्ञां तपोहेतोश्शङ्करस्य विशालधीः ।
मातुश्शिवाऽथ वीरिण्यास्सा सखी परमेश्वरी ॥ १२

ततस्सती महेशानं पतिं प्राप्तुं दृढव्रता ।
सा तमाराधयामास गृहे मातुरनुज्ञया ॥ १३

आश्विने मासि नन्दायां तिथावानर्च भक्तितः ।
गुडौदनैस्सलवणैः हरं नत्वा निनाय तम् ॥ १४

कार्तिकस्य चतुर्दश्यां अपूपैः पायसैरपि ।
समाकीर्णैस्समाराध्य सस्मार परमेश्वरम् ॥ १५

मार्गशीर्षेऽसिताष्टम्यां सतिलैस्सयवौदनैः ।
पूजयित्वा हरं कीलैः निनाय दिवसान् सती ॥ १६

पौषे तु शुक्लसप्तम्यां कृत्वा जागरणं निशि ।
अपूजयच्छिवं प्रातः कृशरान्नेन सा सती ॥ १७

माघे तु पौर्णमास्यां सा कृत्वा जागरणं निशि ।
आर्द्रवस्त्रा नदीतीरे अकरोच्छङ्करपूजनम् ॥ १८
तपस्यासितभूतायां कृत्वा जागरणं निशि ।
विशेषतस्समानर्च शैलूषैस्सर्वयामसु ॥ १९
चैत्रे शुक्लचतुर्दश्यां पलाशैर्दमनैश्शिवम् ।
अपूजयत् दिवं रात्रिं संस्मरन्ती निनाय तम् ॥ २०
राधशुक्लतृतीयायां तिलाहारयवौदनैः ।
पूजयित्वा सती रुद्रं नव्यैर्मासं निनाय तम् ॥ २१
ज्येष्ठस्य पूर्णिमायां वै रात्रौ संपूज्य शङ्करम् ।
वसनैर्बृहतीपुष्पैः निराहारा निनाय तम् ॥ २२
आषाढस्य चतुर्दश्यां शुक्लायां कृष्णवाससा ।
बृहतीकुसुमैः पूजा रुद्रस्याकारि वै तथा ॥ २३
श्रावणस्य सिताष्टम्यां चतुर्दश्यां च सा शिवम् ।
यज्ञोपवीतैर्वासोभिः पवित्रैरप्यपूजयत् ॥ २४
भाद्रे कृष्णत्रयोदश्यां पुष्पैर्नानाविधैः फलैः ।
संपूज्य च चतुर्दश्यां चकार जलभोजनम् ॥ २५
नानाविधैः फलैः पुष्पैः सस्यैस्तत्कालसंभवैः ।
चक्रे सुनियताहारा जपन्मासे शिवार्चनम् ॥ २६
सर्वमासे सर्वदिने शिवार्चनरता सती ।
दृढव्रताऽभवद्देवी स्वेच्छाधृतनराकृतिः ॥ २७

इत्थं नन्दाव्रतं कृत्स्नं समाप्य सुसमाहिता ।
दध्यौ शिवं सती प्रेम्णा निश्चलाभूदनन्यधीः ॥ २८

एतस्मिन्नन्तरे देवाः मुनयश्चाखिला मुने ।
विष्णुं मां च पुरस्कृत्य ययुर्द्रष्टुं सतीतपः ॥ २९

दृष्टाऽगत्य सती देवैः मूर्ता सिद्धिरिवापरा ।
शिवध्यानमहामग्ना सिद्धावस्थां गता तदा ॥ ३०

चक्रुस्सर्वे सुरास्तस्यै मुदा साञ्जलयो नतिम् ।
मुनयश्च नतस्कन्धा विष्ण्वाद्याः प्रीतमानसाः ॥ ३१

अथ सर्वे सुप्रसन्नाः विष्ण्वाद्याश्च सुरर्षयः ।
प्रशशंसुस्तपस्तस्याः सत्यास्तस्मात्सविस्मयाः ॥ ३२

ततः प्रणम्य तां देवीं पुनस्ते मुनयस्सुराः ।
जग्मुर्गिरिवरं सद्यः कैलासं शिववल्लभम् ॥ ३३

सावित्रीसहितश्चाहं सह लक्ष्म्या मुदान्वितः ।
वासुदेवोऽपि भगवान् जगामाथ हरान्तिकम् ॥ ३४

गत्वा तत्र प्रभुं दृष्ट्वा सुप्रणम्य सुसंभ्रमाः ।
तुष्टुवुर्विविधैस्तोत्रैः करौ बद्ध्वा त्रिनम्रकाः ॥ ३५

देवाः ऊचुः—

नमो भगवते तुभ्यं यत एतच्चराचरम् ।
पुरुषाय महेशाय परेशाय महात्मने ॥ ३६

आदिबीजाय सर्वेषां चिद्रूपाय पराय च ।
ब्रह्मणे निर्विकाराय प्रकृतेः पुरुषाय च ॥ ३७

य इदं प्रतिपच्येदं येनेदं विचकास्ति हि ।
यस्मादिदं यतश्चेदं त्वं यस्येदं च यत्नतः ॥ ३८

योऽस्मात्परस्माच्च परो निर्विकारो महाप्रभुः ।
ईक्षते यस्त्वात्मानीदं तं नता स्म स्वयंभुवम् ॥ ३९

अविद्धदृक् परस्साक्षी सर्वात्मानेकरूपधृक् ।
आत्मभूतः परं ब्रह्म तपन्तं शरणं गताः ॥ ४०

न चास्य देवाः ऋषयः सिद्धाश्च न विदुः पदम् ।
कः पुनर्जन्तुरपरो ज्ञातुमर्हति वेरितुम् ॥ ४१

दिदृक्षवो यस्य पदं मुक्तसंगाः सुसाधवः ।
चरन्ति सुगतिर्नस्त्वं सलोकव्रतमव्रणम् ॥ ४२

मज्जन्मादिविकाराः नो विद्यन्ते केऽपि दुःखदाः ।
तथाऽपि मायया त्वं हि गृह्णासि कृपया च तान् ॥ ४३

तस्मै नमः परेशाय तुभ्यमाश्चर्यकर्मणे ।
नमो गिरां विदूराय ब्रह्मणे परमात्मने ॥ ४४

अरूपायोरुरूपाय परायानन्तशक्तये ।
त्रिलोकपतये सर्वसाक्षिणे सर्वगाय च ॥ ४५

नम आत्मप्रदीपाय निर्वाणसुखसंपदे ।
ज्ञानात्मने नमस्तेऽस्तु व्यापकायेश्वराय च ॥ ४६

नैष्कर्म्येण सुलभ्याय कैवल्यपतये नमः ।
पुरुषाय परेशाय नमस्ते सर्वदाय च ॥ ४७

क्षेत्रज्ञायात्मरूपाय सर्वप्रत्ययहेतवे ।
सर्वाध्यक्षाय महते मूलप्रकृतये नमः ॥ ४८

पुरुषाय परेशाय नमस्ते शर्वदाय च ।
त्रिनेत्रायेषुवक्त्राय सदाभासाय ते नमः ॥ ४९

सर्वेन्द्रियगुणद्रष्ट्रे निष्कारण नमोस्तु ते ।
त्रिलोककारणायाथ अपवर्गाय नमो नमः ॥ ५०

अपवर्गप्रदायाशु शरणागततारिणे ।
सर्वाम्नायागमानां चोदधये परमेष्ठिने ॥ ५१

परायणाय भक्तानां गुणानां च नमोऽस्तु ते ।
नमो गुणारणिच्छिन्नचिदूष्माय महेश्वर ॥ ५२

मूढदुष्प्रापरूपाय ज्ञानिहृद्वासिने सदा ।
पशुपाशविमोक्षाय भक्तसन्मुक्तिदाय च । ५३

स्वप्रकाशाय नित्याय अव्ययाजस्रसंविदे ।
प्रत्यग्द्रष्ट्रेऽविकाराय परमैश्वर्यधारिणे ॥ ५४

यं भजन्ति चतुर्वर्गं कामयन्तीष्टसद्गतिम् ।
सोऽभूदकरुणस्त्वं नः प्रसन्नो भव ते नमः ॥ ५५

एकान्तितः कंचनार्थं भक्ता वाञ्छन्ति यस्य न ।
केवलं चरितं ते ते गायन्ति परमङ्गळम् ॥ ५६

अक्षरं परमं ब्रह्म तमव्यक्ताकृतिं विभुम् ।
अध्यात्मयोगगम्यं त्वां परिपूर्णंस्तुमो वयम् ॥   ५७

अतीन्द्रियमनाधारं सर्वाधारमहेतुकम् ।
अनन्तमाद्यं सूक्ष्मं त्वां प्रणमामोऽखिलेश्वर ॥   ५८

हर्यादयोऽखिलाः देवाः तथा लोकाश्चराचराः ।
नामरूपविभेदेन फल्गव्या च कलया कृताः ॥   ५९

यथार्चिषोऽग्नेस्सवितुः यान्ति निर्यान्ति वाऽसकृत् ।
गभस्तयः तथायं वै प्रवाहो गौण उच्यते ॥   ६०

न त्वं देवो असुरो मर्त्यः न तिर्यङ् न द्विजः प्रभो ।
न स्त्री न षण्डो न पुमान् कुर्यास्सदसन्न किंचन ॥ ६१

निषेधशेषसर्वं त्वं विश्वकृद्विश्वपालकः ।
विश्वलयकृद्विश्वात्मा प्रणतास्स्म तमीश्वरम् ॥   ६२

योगरन्धितकर्माणो यं प्रपश्यन्ति योगिनः ।
योगसंभाविते चित्ते योगेशं त्वां नता वयम् ॥   ६३

नमोस्तु तेऽसह्यवेग शक्तित्रय त्रयीमय ।
नमः प्रपन्नपालाय नमस्ते भूरिशक्तये ॥   ६४

कादीन्द्रियाणां दुर्गेश अनवाप्य परवर्त्मने ।
भक्तोद्धाररतायाथ नमस्ते गूढवर्चसे ॥   ६५

यच्छक्त्याहंधियात्मानं हंत वेद न मूढधीः ।
तं दुरत्ययमाहात्म्यं त्वां नतास्स्मो महाप्रभुम् ॥   ६६

इति स्तुत्वा महादेवं सर्वे विष्णवादिकास्सुराः ।
तूष्णीमासन्प्रभोरग्रे सद्भिक्तिनतकन्धराः ॥ ६७

ब्रह्मोवाच—

इति स्तुतिं च हर्यादिकृतामाकर्ण्य शङ्करः ।
बभूवातिप्रसन्नो हि विजहास च सूतिकृत् ॥ ६८
ब्रह्मविष्णू तु दृष्ट्वा तौ सस्त्रीकौ संगतौ हरः ।
यथोचितं समाभाष्य पप्रच्छागमनं तयोः ॥ ६९

रुद्र उवाच—

हे हरे हे विधे देवाः मुनयश्चाद्य निर्भयाः ।
निजागमनहेतुं हि कथयध्वं सुतत्वतः । ७०
किमर्थं आगताः यूयं किं कार्यं चेह विद्यते ।
तत्सर्वं श्रोतुमिच्छामि भवत्स्तुत्या प्रसन्नधीः ॥ ७१
इति पृष्टे हरेणाहं सर्वलोकपितामहः ।
मुनेऽवोचं महादेवं विष्णुना परिचोदितः ॥ ७२

ब्रह्मोवाच—

देव देव महादेव करुणासागर प्रभो ।
यदर्थमागतावावां तच्छृणु त्वं सुरर्षिभिः ॥ ७३
विशेषतस्तवैवार्थं आगताः वृषभध्वज ।
सहार्थिनस्सदायोग्यं अन्यथा न जगद्भवेत् ॥ ७४
केचिद्भविष्यन्त्यसुराः मम वध्या महेश्वर ।
हरेर्वध्यास्तथा केचित् भवतश्चापि केचन ॥ ७५

केचित्त्वद्वीर्यजातस्य तनयस्य महाप्रभो ।
मया वध्याः प्रभो केचित् भविष्यन्त्यसुराः सदा ॥ ७६

तवैव कृपया शम्भोस्सुराणां सुखमुत्तमम् ।
नाशयित्वा सुरान्घोरान् जगत्स्वास्थ्यं सदाभयम् ॥ ७७

योगयुक्ते त्वयि सदा रागद्वेषविवर्जिते ।
दयामात्रैकनिरते न वध्या ह्यथवा तव ॥ ७८

आराधितेषु तेष्वीश कथं सृष्टिः तथा स्थितिः ।
अतश्च भविता युक्तं नित्यं नित्यं वृषध्वज ॥ ७९

सृष्टिस्थित्यन्तकार्याणि न कार्याणि यदा तदा ।
शरीरभेदमस्माकं मायायाश्च न युज्यते ॥ ८०

एकस्वरूपा हि वयं भिन्नाः कार्यस्य भेदतः ।
कार्यभेदो न सिद्धश्चेद्रूपभेदोऽप्रयोजनः ॥ ८१

एक एव त्रिधा भिन्नः परमात्मा महेश्वरः ।
माया स्वा कारणा देव स्वतन्त्रो लीलया प्रभुः ॥ ८२

वामाङ्गजो हरिस्तस्य दक्षिणाङ्गभवोह्यहम् ।
शिवस्य हृदयाज्जातः त्वं हि पूर्णतनुश्शिवः ॥ ८३

इत्थं वयं त्रिधाभूताः प्रभो भिन्नस्वरूपिणः ।
शिवाशिवसुतास्तत्वं हृदा विद्धि सनातन ॥ ८४

अहं विष्णुश्च सस्त्रीकौ सञ्जातौ कार्यहेतुतः ।
लोककार्यकरौ प्रीत्या तव शासनतः प्रभो ॥ ८५

तस्माद्विश्वहितार्थाय सुराणां सुखहेतवे ।
परिगृह्णीष्व भार्यार्थे रामामेकां सुशोभनाम् ॥ ८६

अन्यच्छृणु महेशान पूर्ववृत्तं स्मृतं मया ।
यन्नः पुरः पुरा प्रोक्तं त्वयैव शिवरूपिणा ॥ ८७

मद्रूपं परमं ब्रह्मन् ईदृशं भवदङ्गतः ।
प्रकटीभविता लोके नाम्ना रुद्रं प्रकीर्तितः ॥ ८८

सृष्टिकर्ताऽभवद्ब्रह्मा हरिः पालनकारकः ।
लयकारी भविष्यामि रुद्ररूपो गुणाकृतिः ॥ ८९

स्त्रियं विवाह्य लोकस्य करिष्ये कार्यमुत्तमम् ।
इति संस्मृत्य स्वप्रोक्तं पूर्णं कुरु निजं पणम् ॥ ९०

निदेशस्तव च स्वामिन् अहं सृष्टिकरो हरिः ।
पालको लयहेतुस्त्वं आविर्भूतस्स्वयं शिवः ॥ ९१

त्वां विना न समर्थो हि आवां च स्वस्वकर्मणि ।
लोककार्यरतां तस्मात् एकां गृह्णीष्व कामिनीम् ॥ ९२

यथा पद्मालया विष्णोस्सावित्री च यथा मम ।
तथा सहचरी शंभो कान्तां गृह्णीष्व संप्रति ॥ ९३

इति श्रुत्वा वचो मे हि ब्रह्मणः पुरतो हरेः ।
स मां जगाद लोकेशः स्मेराननमुखो हरः ॥ ९४

ईश्वर उवाच—

हे ब्रह्मन् हे हरे मे हि युवां प्रियतरौ सदा।
दृष्ट्वा वां च ममानन्दो भवत्यतितरां खलु ॥ ९५

युवां सुरविशिष्टौ हि त्रिभवस्वामिनौ किल ।
कथनं वां गरिष्ठेति भवकार्यरतात्मनोः ॥ ९६

उचितं न सुरश्रेष्ठौ विवाहकरणं मम ।
तपोरतिविरक्तस्य सदा विदितयोगिनः ॥ ९७

यो निवृत्तिसुमार्गस्थः स्वात्मारामो निरञ्जन ।
अवधूततनुर्ज्ञानी स्वद्रष्टा कामवर्जितः ॥ ९८

अविकारी ह्यभोगी च सदाशुचिरमङ्गलः ।
तस्य प्रयोजनं लोके कामिन्या किं वदाधुना ॥ ९९

केवलं योगलग्नस्य ममानन्दस्सदास्ति वै ।
ज्ञानहीनस्तु पुरुषः मनुते बहु कामकम् ॥ १००

विवाहकरणं लोके विज्ञेयं परबन्धनम् ।
तस्मात्तस्य रुचिर्मे नो सत्यं सत्यं वदाम्यहम् ॥ १०१

न स्वार्थं मे प्रवृत्तिर्हि सम्यक्स्वार्थविचिन्तनात् ।
तथाऽपि तत्करिष्यामि भवदुक्तं जगद्धितम् ॥ १०२

मत्वा वचो गरिष्ठं वां निजोक्तिपरिपूर्त्तये ।
करिष्यामि विवाहं वै भक्तवश्यस्सदा ह्यहम् ॥ १०३

परन्तु यादृशीं कान्तां ग्रहीष्यामि यथा पणम् ।
तच्छृणुष्व हरे ब्रह्मन् युक्तमेव वचो मम ॥ १०४

या मे तेजस्समर्था हि ग्रहीतुं स्याद्विभागशः ।
तां निदेशय भार्यार्थे योगिनीं कामरूपिणीम् ॥ १०५

योगयुक्ते मयि तथा योगिन्येव भविष्यति ।
कामासक्ते मयि तथा कामिन्येव भविष्यति ॥ १०६

यमक्षरं वेदविदः निगदन्ति मनीषिणः ।
ज्योतीरूपं शिवं ते च चिन्तयिष्ये सनातनम् ॥ १०७

तच्छिन्तायां यदा सक्तो ब्रह्मन् गच्छामि भामिनीम् ।
तत्र या विघ्नजननी न भवित्री तथास्तु मे ॥ १०८

त्वं वा विष्णुरहं वापि शिवस्य ब्रह्मरूपिणः ।
अंशभूताः महाभागाः योग्यं तदनु चिन्तनम् ॥ १०९

तच्छिन्तया विनोद्वाहं स्थास्यामि कमलासन ।
तस्माज्जायां प्रादिश त्वं मत्कर्मानुगतां सदा ॥ ११०

तत्राप्येकं पणं मे त्वं वृणु ब्रह्मंश्च मां प्रति ।
अविश्वासो मदुक्ते चेत् मया त्यक्ता भविष्यति ॥ १११

ब्रह्मोवाच—

इति तस्य वचः श्रुत्वाहं विष्णुर्हरस्य च ।
सस्मितं मोदितमनो अवोचं चेति विनम्रकः ॥ ११२

श्रृणु नाथ महेशान मार्गिता यादृशी त्वया ।
निवेदयामि सुप्रीत्या तां स्त्रियं तादृशीं प्रभो ॥ ११३

उमा सा भिन्नरूपेण संजाता कार्यसाधिनी ।
सरस्वती तथा लक्ष्मी द्विधारूपा पुरा प्रभो ॥ ११४

पद्मा कान्ताऽभवद्विष्णोस्तथा मम सरस्वती ।
तृतीयरूपा सा नोऽभूल्लोककार्यहितैषिणी ॥ ११५

दक्षस्य तनया याऽभूत् सती नाम्ना तु सा विभो ।
सैवेदृशी भवेद्भार्या भवेद्धि हितकारिणी ॥ ११६

सा तपस्यति देवेश त्वदर्थं हि दृढव्रता ।
त्वां पतिं प्राप्तुकामा वै महातेजोवतीं सती ॥ ११७

दातुं गच्छ वरं तस्यै कृपां कुरु महेश्वर ।
तां विवाह्य सुप्रीत्या वरं दत्वा च तादृशम् ॥ ११८

हरेर्मम च देवानां इयं वाञ्छाऽस्ति शङ्कर ।
परिपूरय सद्दृष्ट्या पश्यामोत्सवमादरात् ॥ ११९

मङ्गळं परमं भूयात् त्रिलोकेषु सुखावहम् ।
सर्वज्वरो विनश्येद्वै सर्वेषां नात्र संशयः ॥ १२०

अथवास्मद्वचश्शेषे वदन्तं मधुसूदनः ।
लीलाजाकृतिमीशानं भक्तवत्सलमच्युतः ॥ १२१

विष्णुरुवाच—

देव देव महादेव करुणाकर शङ्कर ।

यदुक्तं ब्रह्मणा सर्वं मदुक्तं तन्नसंशयः ॥ १२२
तत्कुरुष्व महेशान कृपां कृत्वा ममोपरि ।
सनाथं कुरु सद्दृष्ट्या त्रिलोकं सुविवाह्य ताम् ॥ १२३

ब्रह्मोवाच—

इत्युक्त्वा भगवान् विष्णुस्तूष्णीमास मुने सुधीः ।
तथा स्तुतिं विहस्याह स प्रभुर्भक्तवत्सलः ॥ १२४
ततस्त्वावां च संप्रप्य चाज्ञां स मुनिभिस्सुरैः ।
अगच्छाव स्वेष्टदेशं सस्त्रीकौ परहर्षितौ ॥ १२५
इत्युक्त्वा सर्वदेवैश्च कृता शंभोर्नुतिः परा ।
शिवाच्च सा वरं प्राप्ता शृणु हि आदरतो मुने ॥ १२६
अथो सती शुक्लपक्षेऽष्टम्यां समुपोषिता ।
आश्विने मासि सर्वेशं पूजयामास भक्तितः ॥ १२७
इति नन्दाव्रते पूर्णे नवम्यां दिनभागतः ।
तस्यास्तु ध्यानमग्नायाः प्रत्यक्षमभवद्धरः ॥ १२८
सर्वाङ्गसुन्दरो गौरः पञ्चवक्त्रस्त्रिलोचनः ।
चन्द्रभालः प्रसन्नात्मा शितिकण्ठश्चतुर्भुजः ॥ १२९
त्रिशूलब्रह्मकवराभयधृक् भस्मभास्वरः ।
स्वर्धुन्या विलसच्छीर्षसकलाङ्गमनोहरः ॥ १३०
महालावण्यधामा च कोटिचन्द्रसमाननः ।
कोटिस्मरसमा कान्तिः सर्वथा स्त्रीप्रियाकृतिः ॥ १३१

प्रत्यक्षतो हरं वीक्ष्य सती सेदृग्विधं प्रभुम् ।
ववन्दे चरणौ तस्य सुलज्जावनतानना ॥ १३२

अथ प्राह महादेवः सतीं तद्व्रतधारिणीम् ।
तामिच्छन्नपि भार्यार्थं तपश्चर्याफलप्रदः ॥ १३३

महादेव उवाच—

दक्षनन्दिनि प्रीतोऽस्मि व्रतेनानेन सुव्रते ।
वरं वरय संदास्ये यत्र वाऽभिमतं भवेत् ॥ १३४

ब्रह्मोवाच—

जानन्नपीह तद्भावं महादेवो जगत्पतिः ।
जगौ वरं वृणीष्वेति तद्वाक्यश्रवणेच्छया ॥ १३५

सापि त्रपावशायुक्ता वक्तुं नो हृदि यत् स्थितम् ।
शशाक सा त्वभीष्टं यत्तल्लज्जाच्छादितं पुनः ॥ १३६

प्रेममग्नाऽभवत्सापि श्रुत्वा शिववचः प्रियम् ।
तज्ज्ञात्वा सुप्रसन्नोभूत् शङ्करो भक्तवत्सलः ॥ १३७

वरं ब्रूहि वरं ब्रूहि प्राहेति स पुनर्द्रुतम् ।
सतीभक्तिवशश्शंभुः अन्तर्यामी सतांगतिः ॥ १६८

अथ त्रपां स्वां सन्धाय यदा प्राह हरं सती ।
यथेष्टं देहि वरद वरमित्यनिवारकम् ॥ १३९

तदा वाक्यस्यावसानं अनवेक्ष्य वृषध्वजः ।
भव त्वं मम भार्येति प्राह तां भक्तवत्सलः ॥ १४०

एतच्छ्रुत्वा वचस्तस्य साभीष्टफलभावनम् ।
तूष्णीं तस्थौ प्रमुदिता वरं प्राप्य मनोगतम् ॥ १४१

सकामस्य हरस्याग्रे स्थिता सा चारुहासिनी ।
अकरोन्निजभावांश्च हावान्कामविवर्द्धनान् ॥ १४२

ततो भावान्समादाय शृङ्गाराख्यो रसस्तदा ।
तयोश्चित्ते विवेशाशु कला हावा यथोदितम् ॥ १४३

तत्प्रवेशात्तु देवर्षे लोकलीलानुसारिणोः ।
काप्यभिख्या तयोरासीच्चित्राचन्द्रमसोरिव ॥ १४४

रेजे सती हरं प्राप्य स्निग्धभिन्नाञ्जनप्रभा ।
चन्द्राभ्यासेऽभ्रलेखेव स्फटिकोज्वलवर्ष्मणः ॥ १४५

अथ सा तमुवाचेदं हरं दाक्षायणी मुहुः ।
सुप्रसन्ना करौ बद्ध्वा नतका भक्तवत्सलम् ॥ १४६

सत्युवाच—

देव देव महादेव विवाहविधिना प्रभो ।
पितुर्मे गोचरीकृत्य मां गृहाण जगत्पते ॥ १४७

ब्रह्मोवाच—

एवं सतीवचः श्रुत्वा महेशो भक्तवत्सलः ।
तथास्त्विति वचः प्राह निरीक्ष्य प्रेमतश्च ताम् ॥ १४८

दाक्षायण्यपि तं नत्वा शम्भुं विज्ञाप्य भक्तितः ।
प्राप्ताज्ञा मातुरभ्याशं अगान्मोहमुदान्विता ॥ १४९

हरोऽपि हिमवत्प्रस्थं प्रविश्य च निजाश्रमम् ।
दाक्षायणीवियोगाद्धै कृच्छ्रध्यानपरोऽभवत् ॥ १५०

समाधाय मनश्शम्भुः लौकिकीं गतिमाश्रितः ।
चिन्तयामास देवर्षे मनसा मां वृषध्वजः ॥ १५१

ततस्संचिन्त्यमानोऽहं महेशेन त्रिशूलिना ।
पुरस्तात्प्राविशत्तूर्णं हरसिद्धिप्रचोदितः ॥ १५२

यत्राऽसौ हिमवत्प्रस्थे तद्वियोगी हरस्स्थितः ।
सरस्वतीयुतस्तात तत्रैव समुपस्थितः ॥ १५३

सरस्वतीयुतं मां च देवर्षे वीक्ष्य स प्रभुः ।
उत्सुकः प्रेमबद्धश्च सत्या शंभुरुवाच ह ॥ १५४

शंभुरुवाचः—

अहं ब्रह्मन् स्वार्थतरः परिग्रहकृतौ च यत् ।
तदा स्वत्वमिव स्वार्थे प्रतिभाति ममाधुना ॥ १५५

अहमाराधितस्सत्या दाक्षायण्याथ भक्तितः ।
तस्यै वरो मया दत्तो नंदाव्रतप्रभावतः ॥ १५६

भर्ता भवेति च तया मत्तो ब्रह्मन् वरो वृतः ।
मम भार्या भवेत्युक्तं मया तुष्टेन सर्वथा ॥ १५७

अथावदत्तदा मां सा सती दाक्षायणी त्विति ।
पितुर्मे गोचरीकृत्य मां गृहाण जगत्पते ॥ १५८

तदप्यङ्गीकृतं ब्रह्मन् मया तद्भक्तितुष्टितः ।

सा गता भवनं मातुः अहमत्रागतो विधे ॥ १५९

तस्मात्त्वं गच्छ भवनं दक्षस्य मम शासनात् ।
तां दक्षोपि यथा कन्यां दद्यान्मेऽरं तथा वद ॥ १६०

सतीवियोगभङ्गस्स्याद्यथा मे त्वं तथा कुरु ।
समाश्वासय तं दक्षं सर्वविद्याविशारद ॥ १६१

ब्रह्मोवाच—

इत्युदीर्य महादेवः सकाशे मे प्रजापतिः ।
सरस्वतीं विलोक्याशु वियोगवशगोऽभवत् ॥ १६२

तेनाहमपि चाज्ञप्तः कृतकृत्यो मुदान्वितः ।
प्रावोचं चेति जगतां नाथं तं भक्तवत्सलम् ॥ १६३

यदात्थ भगवन् शंभो तद्विचार्य सुनिश्चितम् ।
देवानां मुख्यस्स्वार्थो हि ममापि वृषभध्वज ॥ १६४

दक्षस्तुभ्यं सुतां स्वां च स्वयमेव प्रदास्यति ।
अहं चापि वदिष्यामि त्वद्वाक्यं तत्समक्षतः ॥ १६५

इत्युदीर्य महादेवं अहं सर्वेश्वरं प्रभुम् ।
अगमं दक्षनिलयं स्यन्दनेनातिवेगिना ॥ १६६

नारद उवाच—

विधे प्राज्ञ महाभाग वद नो वदतां वर ।
सत्यै गृहागतायै स दक्षः किमकरोत्तदा ॥ १६७

ब्रह्मोवाच—

तपस्तप्त्वा वरं प्राप्य मनोऽभिलषितं सती ।
गृहं गत्वा पितुर्मातुः प्रणाममकरोत्तदा ॥ १६८

मात्रे पित्रेऽथ तत्सख्यं समाचख्यौ महेश्वरात् ।
वरप्राप्तिः स्वसख्या वै सत्यास्तुष्टास्तु भक्तितः ॥ १६९

माता पिता च वृत्तान्तं सर्वं श्रुत्वा सखीमुखात् ।
आनन्दं परमं लभे चक्रे च परमोत्सवम् ॥ १७०

द्रव्यं ददौ द्विजातिभ्यः यथाभीष्टमुदारधीः ।
अन्येभ्यश्चान्धदीनेभ्यो वीरिणी च महामनाः ॥ १७१

वीरिणी तां समालिंग्य स्वसुतां प्रीतिवर्द्धिनीम् ।
मूर्ध्न्युपाघ्राय मुदिता प्रशशंस मुहुर्मुहुः ॥ १७२

अथ दक्षः कियत्काले व्यतीते धर्मवित्तमः ।
चिंन्तयामास देयेयं स्वसुता शंभवे कथम् ॥ १७३

आगतोऽपि महादेवः प्रसन्नस्स जगाम ह ।
पुनरेव कथं सोऽपि सुतार्थेऽत्रागमिष्यति ॥ १७४

प्रस्थाप्योऽथ मया कश्चित् शंभोर्निकटमञ्जसा ।
नैतद्योग्यं न गृह्णीयात् यद्येवं विफलार्दना ॥ १७५

अथवा पूजयिष्यामि तमेव वृषभध्वजम् ।
मदीयतनयाभक्त्या स्वयमेव यथा भवेत् ॥ १७६

तथैव पूजितस्सोऽपि वाञ्छत्यार्यप्रयत्नतः ।

शंभुर्भवतु मद्भर्तेत्येवं दत्तवरेण तत् ॥ १७७

इति चिन्तयतस्तस्य दक्षस्य पुरतोन्वहम् ।
उपस्थितोहं सहसा सरस्वत्यन्वितस्तदा ॥ १७८

मां दृष्ट्वा पितरं दक्षः प्रणम्यावनतः स्थितः ।
आसनं च ददौ मह्यं स्वभवाय यथोचितम् ॥ १७९

ततो मां सर्वलोकेशं तत्रागमनकारणम् ।
दक्षः पप्रच्छ स क्षिप्रं चिन्ताविष्टोपि हर्षितः ॥ १८०

दक्ष उवाच—

तवात्रागमने हेतुः कः प्रवेशे स सृष्टिकृत् ।
ममोपरि सुप्रसादं कृत्वाचक्ष्व जगद्गुरो ॥ १८१

पुत्रस्नेहात्कार्यवशात् अथवा लोककारक ।
ममाश्रमं समायातो रुष्टस्य तव दर्शनात् ॥ १८२

इति पृष्टस्स्वपुत्रेण दक्षेण मुनिसत्तम ।
विहसन्नब्रुवं वाक्यं मोदयंस्तं प्रजापतिम् ॥ १८३

ब्रह्मोवाच—

शृणु दक्ष यदर्थं त्वत्समीपमहमागतः ।
त्वत्तो कस्य हितं मेऽपि भवतोऽपि तदीप्सितम् ॥ १८४

तव पुत्री समाराध्य महादेवं जगत्पतिम् ।
यो वरः प्रार्थितस्तस्य समयोऽयमुपागतः ॥ १८५

शम्भुना तव पुत्र्यर्थं त्वत्सकाशमहं ध्रुवम् ।

प्रस्थापितोऽस्मि यत्कृत्यं श्रेयस्तदवधारय ॥ १८६

वरं दत्वा गतो रुद्रः तावत्प्रभृति शङ्करः ।
त्वत्सुताया वियोगेन न शर्म लभतेञ्जसा ॥ १८७

अलब्धच्छिद्रमदनो जिगाय गिरिशं न यम् ।
सर्वैः पुष्पमयैर्बाणैः यत्नं कृत्वाऽपि भूरिशः ॥ १८८

स कामबाणविद्धोपि परित्यज्यात्मचिन्तनम् ।
सतीं विचिन्तयन्नास्ते व्याकुलः प्राकृतो यथा ॥ १८९

विस्मृत्य प्रश्रुतां वाणीं गणाग्रे विप्रयोगतः ।
क सतीत्येवमभितः भाषते न कृतावपि ॥ १९०

मया यद्वाञ्छित पूर्वं त्वया च मदनेन च ।
मरीच्याद्यैर्मुनिवरैः तत्सिद्धमधुना सुत ॥ १९१

त्वत्पुत्र्याराधितश्शंभुस्सोपि तस्या विचिन्तनात् ।
अनुशोधयितुं प्रेप्सुर्वर्तते हिमवद्गिरौ ॥ १९२

यथा नानाविधैर्भावैः सत्वात्तेन व्रतेन च ।
शंभुराराधितस्तेन तथैवाराध्यते सती ॥ १९३

तस्मात्तु दक्ष तनयां शम्भ्वर्थं परिकल्पिताम् ।
तस्मै देहि अविलम्बेन कृता ते कृतकृत्यता ॥ १९४

ब्रह्मोवाच—

श्रुत्वा मम वचश्चेति स मे पुत्रोऽतिहर्षितः ।
एवमेवेति मां दक्षः उवाच परहर्षितः ॥ १९५

ततस्सोऽहं मुने तत्रागामत्यन्तहर्षितः ।
उत्सुको लोकनिरतः गिरिशो यत्र संस्थितः ॥ १९६
गते नारद दक्षोऽपि सदारतनयो ह्यपि ।
अभवत्पूर्णकामस्तु पीयूषैरिव पूरितः ॥ १९७

नारद उवाच—

रुद्रपार्श्वे त्वयि गते किमभूच्चरितं ततः ।
का वार्ता ह्यभवत्तात किं चकार हरस्स्वयम् ॥ १९८

ब्रह्मोवाच—

अथाहं शिवमानेतुं प्रसन्नः परमेश्वरम् ।
आसदं हि महादेवं हिमवद्गिरिसंस्थितम् ॥ ९१९
मां वीक्ष्य लोकस्रष्टारं आयान्तं वृषभध्वजः ।
मनसा संशयं चक्रे सतीप्राप्तौ मुहुर्मुहुः ॥ २००
अथ प्रीत्या हरो लोके गतिमाश्रित्य लीलया ।
सत्या भक्त्याच मां क्षिप्रं उवाच प्राकृतो यथा ॥ २०१

ईश्वर उवाचः—

किमकार्षित्सुरश्रेष्ठ सत्यर्थे त्वत्सुतस्स माम् ।
कथयस्व यथास्वान्तं न दीर्येन्मन्मथेन हि ॥ २०२
धावमानो विप्रयोगो मामेव च सतीं प्रति ।
अभिहन्ति सुरज्येष्ठ त्यक्त्वान्यां प्राणधारिणीम् ॥ २०३
सतीति सततं ब्रह्मन् वद कार्यं करोम्यहम् ।
अभेदान्मम सा प्राप्या तद्विधे क्रियतां तथा ॥ २०४

ब्रह्मोवाच—

इति रुद्रोक्तवचनं लोकाचारसुगर्भितम् ।
श्रुत्वाहं नारदमुने सांत्वयन्नगदं शिवम् ॥ २०५

सत्यर्थं यन्मम सुतः वदति स्म वृषध्वज ।
तच्छृणुष्व निजासाध्यं सिद्धमित्यवधारय ॥ २०६

देया तस्मै मया पुत्री तदर्थं परिकल्पिता ।
ममाभीष्टमिदं कार्यं त्वद्वाक्यादधिकं पुनः ॥ २०७

मत्पुत्र्याऽराधितश्शंभुरेतदर्थं स्वयं पुनः ।
सोप्यन्विष्यति मां यस्मात् तदा देया मया हरे ॥ २०८

शुभे लग्ने सुमुहूर्ते समागच्छतु सेति किम् ।
तदा दास्यामि तनयां भिक्षार्थं शंभवे विधे ॥ २०९

इत्युवाच स मां दक्षः तस्मात्वं वृषभध्वज ।
शुभे मुहूर्ते तद्वेश्म गच्छ तामानयस्व च ॥ २१०

इति श्रुत्वा मम वचः लौकिकीं गतिमाश्रितः ।
उवाच विहसन् रुद्रो मुने मां भक्तवत्सलः ॥ २११

रुद्र उवाच—

गमिष्ये भवता सार्धं नारदेन च तद्गृहम् ।
अयमेव जगत्स्रष्टस्तस्मात्त्वं नारदं स्मर ॥ २१२

मरीच्यादीन् स्वपुत्रांश्च मानसानपि संस्मर ।
तैस्सार्धं दक्षनिलयं गमिष्ये सगणो विधे ॥ २१३

ब्रह्मोवाच—

इत्याज्ञप्तोऽहमीशेन लोकाचारपरेण च ।
संस्मरं नारदं त्वां च मरीच्यादीन् सुतांस्तथा ॥ २१४

ततस्समागतास्सर्वे मानसास्तनयास्त्वया ।
मम स्मरणमात्रेण हृष्टास्ते द्रुतमादरात् ॥ २१५

विष्णुस्समागतस्तूर्णं स्मृतो रुद्रेण शैवराट् ।
सस्वसैन्यः कमलया गरुडारूढ एव च ॥ २१६

अथ चैत्रसिते पक्षे नक्षत्रे भगदैवते ।
त्रयोदश्यां दिने भानौ निर्गच्छत्स महेश्वरः ॥ २१७

सर्वैस्सुरगणैस्सार्धं ब्रह्मविष्णुपुरस्सरैः ।
तथा तैर्मुनिभिर्गच्छन् स बभौ पथि शङ्करः ॥ २१८

मार्गे समुत्सवो जातो देवादीनां च गच्छताम् ।
तथा हरगणानां च सानन्दमनसामपि ॥ २१९

गजगोव्याघ्रसर्पाश्च जटाचन्द्रकला तथा ।
जग्मुस्सर्वे भूषणत्वं यथायोग्यं शिवेच्छया ॥ २२०

ततः क्षणेन बलिना बलीवर्देन वेगिना ।
स विष्णुप्रमुखः प्रीत्या प्राप दक्षालयं हरः ॥ २२१

ततो दक्षो विनीतात्मा संप्रहृष्टतनूरुहः ।
प्रययौ सम्मुखं तस्य संयुक्तस्सकलैर्निजैः ॥ २२२

सर्वे सुरगणास्तत्र स्वयं दक्षेण सत्कृताः ।
पार्श्वे श्रेष्ठं च मुनिभिः उपविष्टाः यथाक्रमम् ॥ २२३

परिवार्याखिलान्देवान् गणांश्च मुनिभिर्यथा ।
दक्षस्समानयामास गृहस्याभ्यन्तरश्शिवम् ॥ २२४

अथ दक्षः प्रसन्नात्मा स्वयं सर्वेश्वरं हरम् ।
समानर्च विधानेन दत्वासनं अनुत्तमम् ॥ २२५

ततो विष्णुं च मां विप्रान् सुरान् सर्वान् गणान् तथा ।
पूजयामास मद्भक्त्या यथोचितविधानतः ॥ २२६

कृत्वा यथोचितां पूजां तेषां पूज्यादिभिस्तथा ।
चकार संविदं दक्षो मुनिभिर्मानसः पुनः ॥ २२७

ततो मां पितरं प्राह दक्षः प्रीत्या हि मत्सुतः ।
प्रणिपत्य त्वया कर्म कार्यं वैवाहिकं विभो ॥ २२८

बाढमित्यहमप्युक्त्वा प्रहृष्टेनान्तरात्मना ।
समुत्थाय ततोऽकार्षं तत्कार्यमखिलं तथा ॥ २२९

ततश्शुभे मुहूर्ते हि लग्ने गृहबलान्विते ।
सतीं निजसुतां दक्षो ददौ हर्षेण शंभवे ॥ २३०

उद्वाहविधिना सोऽपि पाणिं जग्राह हर्षितः ।
दाक्षायण्या वरतनोस्तदानीं वृषभध्वजः ॥ २३१

अहं हरिस्त्वदाद्या वै मुनयश्च सुराः गणाः ।
नेमुस्सर्वे संस्तुतिभिः तोषयामासुरीश्वरम् ॥ २३२

समुत्सवो महानासीत् नृत्यगानपुरस्सरः ।
आनन्दं परमं जग्मुः सर्वे मुनिगणास्सुराः ॥ २३३

कन्यां दत्वा कृतार्थोऽभूत् तदा दक्षो हि मत्सुतः ।
शिवाशिवौ प्रसन्नौ च निखिलं मङ्गलालयम् ॥ २३४

कृत्वा दक्षो सुतादानं यौतकं विविधं ददौ ।
हराय सुप्रसन्नश्च द्विजेभ्यो विविधं धनम् ॥ २३५

अथ शंभुमुपागत्य समुत्थाय कृताञ्जलिः ।
साधँ कमलया चेदं उवाच गरुढध्वजः ॥ २३६

विष्णुरुवाच—

देव देव महादेव करुणासागर प्रभो ।
त्वं पिता जगतां तात सती माताऽखिलस्य च ॥ २३७

युवां लीलावतारौ वै सतां क्षेमाय सर्वदा ।
खलानां निग्रहार्थाय श्रुतिरेषा सनातनी ॥ २३८

स्निग्धनीलाञ्जनश्यामशोभया शोभसे हर ।
दाक्षायण्या यथाचाहं प्रतिलोमेन पद्मया ॥ २३९

देवानां च नृणां रक्षां कुरु सत्याऽभया सताम ।
संसारसारिणां शम्भो मङ्गळं सर्वदा तथा ॥ २४०

य एनां साभिलाषो वै दृष्ट्वा श्रुत्वाऽथवा भवेत् ।
तं हन्यास्सर्वभूतेश विज्ञप्तिरिति मे प्रभो ॥ २४१

ब्रह्मोवाच—

इति श्रुत्वा वचो विष्णोर्विहस्य परमेश्वरः ।
एवमस्त्विति सर्वज्ञ प्रोवाच मधुसूदनम् ॥ २४२

स्वस्थानं हरिरागत्य स्थित आसीन्मुनीश्वर ।
उत्सवं कारयामास जुगोप चरितं च तत् ॥ २४३

अहं देवी समागत्य गृह्योक्तविधिनाऽखिलम् ।
अग्निकार्यं यथोद्दिष्टं अकार्षं च सुविस्तरम् ॥ २४४

ततश्शिवा शिवश्चैव यथाविधि प्रहृष्टवत् ।
अग्नेः प्रदक्षिणं चक्रे मदाचार्यद्विजाज्ञया ॥ २४५

तदा महोत्सवस्तत्र अद्भुतोऽभूद्द्विजोत्तम ।
सर्वेषां सुखदं वाद्यं गीतनृत्यपुरस्सरम् ॥ २४६

इति श्री शिवमहापुराणान्तर्गत रुद्रसंहितायां रुद्रखण्डे
दक्षायणी कल्याणं सम्पूर्णम् ॥

---

॥ श्रीः ॥

शुभं अस्तु

# * श्री उमाकल्याणम् *

( सौरपुराणात् उद्धृतम् )

सूत उवाच—

शङ्कराच्च वरं लब्ध्वा देवी त्रैलोक्यपूजिता ।
उमा भगवती काली सम्प्राप्ता पितृमन्दिरम् ॥ १

अपश्यद्गिरिराजस्तां चन्द्रकान्तिनिभाननाम् ।
दीपयन्तीं जगत्सर्वं विद्युत्पुञ्जसमप्रभाम् ॥ २

अङ्के कालीं समाधाय शिरस्याघ्राय च द्विजाः ।
उवाच परया प्रीत्या विश्वेशीं पर्वतेश्वरः ॥ ३

हिमालय उवाच—

तपसा तोषितः शम्भुरमेयात्मा सनातनः ।
कीदृशश्च वरो लब्धः त्वया देवान्महेश्वरात् ॥ ४

तपसाऽऽराध्य विश्वेशं गोपतिं शूलपाणिनम् ।
तमेवेशं पतिं लब्ध्वा कृतार्थास्मीति मे वरः ५

भेदोऽस्ति तत्वतो राजन् न मे देवात् महेश्वरात् ।
सिद्धमेवाऽऽवयोरैक्यं वेदान्तार्थविचारणात् ॥ ६

यदेतदैश्वरं तेजस्तन्मां विद्धि नगेश्वर ।
सर्वभूतात्मकं शान्तं विश्वं यत्र प्रतिष्ठितम् ॥ ७

अहं सर्वान्तरा शक्तिः मया मायी महेश्वरः ।
अहमेका परा शक्तिरेक एव महेश्वरः ॥ ८

नाऽऽवयोर्विद्यते राजन् भेदो वै परमार्थतः ।
एकाहं विश्वगाऽनन्ता विश्वरूपा सनातनी ॥ ९

पिनाकपाणेर्दयिता नित्या गिरिवरोत्तमा ।
ज्ञातुं न शक्ता ब्रह्माद्या मत्स्वरूपं हि तत्वतः ॥ १०

इच्छा शक्तिरहं राजन् ज्ञानशक्तिरहं पुनः ।
क्रियाशक्तिः प्राणशक्तिः शक्तिमान्भगनेत्रहा ॥ ११

कूटस्थमचलं सूक्ष्मं सत्यं निर्गुणमव्ययम् ।
आनन्दमक्षरं ब्रह्म तात जानीहि मत्पदम् ॥ १२

तत्पदं ते प्रपश्यन्ति येषां भक्तिर्मयि स्थिरा ।
नान्यथा कर्मकाण्डैश्च तपोभिश्चापि दुष्करैः ॥ १३

शिवस्य परमाशक्तिर्नित्याऽऽनन्दमयी ह्यहम् ।
ब्रह्मणो वचनाद्राजन्नभवं दक्षकन्यका ॥ १४

शूलिनो देवदेवस्य निन्दकं परमेष्ठिनः ।
विनिन्द्य पितरं दक्षं जाताऽस्मि नवकन्यका ॥ १५

स्वेच्छयैवावतारो मे नैव चान्यवशात्पितः ।
तस्मान्मां परमां शक्तिमिति ज्ञात्वा सुखी भव ॥ १६

नाशयामि तवाज्ञानं भवबन्धनकारणम् ।
दिव्यं ददामि ते ज्ञानं दुःखत्रयविनाशकृत् ॥ १७

एवं देव्याः प्रसादेन हिमवान्पर्वतेश्वरः ।
लब्ध्वा माहेश्वरं ज्ञानं जीवन्मुक्तस्तदाऽभवत् ॥ १८

अपश्यदखिलं विश्वम् उमामहेश्वरात्मकम् ।
नित्यानन्दं निर्विभागमात्मानं च तदात्मकम् ॥ १९

मानमेयादिरहितं भेदाभेदविवर्जितम् ।
बाह्याभ्यन्तरनिर्मुक्तं शुद्धं निर्गुणमव्ययम् ॥ २०

न समीपं न दूरस्थं न स्थूलं नापि वा कृशम् ।
न दीर्घं नापि वा ह्रस्वं न पीतं नापि लोहितम् ॥ २१

न नीलं न च कृष्णं च न शुक्लं नापि कर्बुरम् ।
पाणिपादविनिर्मुक्तं न श्रोत्रं न च चाक्षुषम् ॥ २२

अनासिकमजिह्वं च मनोबुद्धिविवर्जितम् ।
बन्धमोक्षविनिर्मुक्तं बोधाबोधविवर्जितम् ॥ २३

नाऽऽधारस्थं न नाभिस्थं न हृदिस्थं न कण्ठगम् ।
नापि नासाग्रगं विप्रा न भ्रूमध्यगतं हि तत् ॥ २४

न नाडीत्रयमध्यस्थं द्वादशान्तगतं न च ।
नोर्णातन्तुनिभं तत्तु विद्युत्पुञ्जनिभं न च ॥ २५

सर्वोपाधिविनिर्मुक्तं चैतन्यं सर्वगं शिवम् ।
तदेवेदमिदं विश्वं तस्मादन्यन्नविद्यते ॥ २६

आस्थाय परमां भक्तिं शिवयोः पादपङ्कजे ।
पित्रोर्हिरण्यगर्भस्य शार्ङ्गिणश्चापि सुव्रत ॥ २७

सूत उवाच—

आह्वानयत्ततो विश्वकर्माणं पर्वतेश्वरः ।
विवाहमण्डपं कर्तुं नानाश्चर्यविभूषितम् ॥ २८
तेनाऽऽहूतस्ततः शीघ्रं विश्वकर्मा महामतिः ।
प्रययौ हिमवत्पार्श्वं कुशलो विश्वकर्मणि ॥ २९
दृष्ट्वाऽथ विश्वकर्माणं हृष्टः पर्वतराट् स्वयम् ।
स्वागतासनपाद्याद्यैः सादरस्तमपूजयत् ।
विधिवत्पूजयित्वा तु विश्वकर्माणमब्रवीत् ॥ ३०

पर्वतराडुवाच—

विश्वकर्मन्महाप्राज्ञ सर्वशास्त्रविशारद ।
यत्कारणादिहाऽऽहूतो मया त्वं तद्ब्रवीम्यहम् ॥ ३१
विश्वेश्वरो महादेवो भगवान्नीललोहितः ।
आगमिष्यति विश्वेशीं परिणेतुं शिवः स्वयम ॥ ३२
मण्टपस्तत्र कर्तव्यो यज्ञार्थं हि हिरण्मयः ।
योजनायुतविस्तीर्णमनेकाश्चर्यसंयुतम् ॥ ३३
दृष्टमात्रेण सर्वस्य प्रीतिर्भवति वै यथा ।
तथात्वं मण्डपं शीघ्रं कुरु विश्वेश्वरप्रियम् ॥ ३४
एवमुक्तस्तदा तेन गिरिणा विश्वकर्मकृत् ।
वैवाहं मण्डपं शीघ्रमसृजद्रत्नविग्रहम् ॥ ३५

स्तम्भैर्हेममयैश्चित्रैर्मणिभिः सूर्यसंनिभैः ।
इन्द्रनीलमयैर्दिव्यैर्वैडूर्यैर्विद्रुमैरपि ॥ ३६
मौक्तिकैर्वज्रनीलैश्च चन्द्रकान्तमयैरपि ।
स्फटिकैर्विद्रुमैश्चापि मुक्तादामविलम्बितैः ॥ ३७
चामरालङ्कृतैरुच्चैः दर्पणैर्विविधैरपि ।
सूर्यबिम्बप्रतीकाशैः चन्द्रबिम्बसमप्रभैः ॥ ३८
ध्वजमालाकुलं दिव्यं पतकानेकशोभितम् ।
रत्नजैः सिंहशार्दूलैः गजवर्णैर्निरन्तरम् ॥ ३९
रचितं मण्डपं दिव्यं प्रियं त्रिपुरविद्विषः ।
रुद्राणाञ्च तथारूपैर्गन्धर्वाप्सरसां तथा ॥ ४०
देवैश्चैव मनोहार्यैः मर्त्यजैश्च तथा परैः ।
मालाभिस्तबकैर्विप्रा रत्नजैः कुसुमैर्भृशम् ॥ ४१
क्वचिच्चामीकरेणाथ हृद्यां भूमिं विनिर्ममे ।
क्वाचित्पद्मदलाकारामिन्द्रायुधसमप्रभाम् ॥ ४२
क्वचिन्नीलोत्पलाभासां नीलजीमूतसप्रभाम् ।
मनसैव यथा ब्रह्मा विश्वमेतद्धि निममे ॥ ४३
क्वचिद्बन्धूकसंकाशां दीप्तां विद्रुमसन्निभाम् ।
अनेकाकारविन्यासैस्ततो धात्रीं विनिर्ममे ॥ ४४
क्वचित्कलशविन्यासैः क्वचित्स्वस्तिकभूषितैः ।
हरिचन्दनगन्धाद्यैः कर्पूरोद्गारगन्धिभिः ॥ ४५

जातीपाटलपद्मानां चम्पकानां सुगन्धिभिः ।
आसनैर्विविधैः पूतैः चन्द्रजीमूतसन्निभैः ॥ ४६

उदयार्कसमाकारैः मेरुशृङ्गोपमं भृशम् ।
तमालचम्पकाभैश्च इन्द्रनीलमयैस्तथा ॥ ४७

सिन्दूरचयसङ्काशैः जपाकुसुमसन्निभैः ।
सन्ध्यारागनिभैश्चान्यैः दाडिमीकुसुमप्रभैः ॥ ४८

हेमकुम्भनिभैश्चान्यैः मुक्ताफलनिभैरपि ।
तारकापुञ्जसङ्काशैः पद्मनीलेन्द्रनीलजैः ॥ ४९

तत्रैव मण्डपे दिव्ये तोयस्थानान्यकल्पयत् ।
दीर्घिकास्तोयपूर्णाश्च क्षीरपूर्णास्तथैव च ॥ ५०

दधिह्रदाननेकांश्च सुधासम्पूरितानि वै ।
घृतपूर्णा महानद्यो रत्नसोपानमण्डिताः ॥ ५१

वृक्षांश्च कामिकान्दिव्यान्दीर्घिकाणां तथोभयोः ।
असृजत्क्रीडनार्थाय सदा पुष्पफलान्वितान् ॥ ५२

भक्ष्यैर्नानाविधैर्दिव्यैः फलितान्मुनिपुङ्गवाः ।
कदलीखण्डमध्ये तु तमालगहनेष्वपि ॥ ५३

क्रीडावाप्यः सुशोभाढ्याः तथैवाशोकसङ्कुलाः ।
दीर्घिकाणां तटे रम्ये तरुणाः स्निग्धशाखिषु ॥ ५४

दोलाश्चाऽऽबन्धयामासुर्मुक्तादाममिरुज्वलैः ।
रमणीयानि दिव्यानि मनस्तुष्टिकराणि च ॥ ५५

उद्यानवनखण्डानि स्थाने स्थानेष्वकल्पयत् ।
त्रैलोक्यतिलके तस्मिन् हेमपीठस्य मध्यगाम् ॥ ५६
सिंहैश्च विधृतां श्वेतैः सहस्रदलमण्डिताम् ।
पारिजातद्रुमाणाञ्च मञ्जरीभिरलङ्कृताम् ॥ ५७
इन्द्रनीलमयीं वेदिं चारुसोपानभूषिताम् ।
शतयोजनविस्तीर्णां स्तम्भैश्चकलशान्वितैः ॥ ५८
नानानेकाप्सरोभिश्च रत्नजां दिव्यरूपिणीम् ।
पीनोरुजघनास्ताश्च पीनोन्नतपयोधराः ॥ ५९
चामराग्रकरास्तास्तु हारावलिविभूषिताः ।
वीणावेणुकराश्चान्याः काञ्चीगुणविराजिताः ॥ ६०
चञ्चलायतनेत्राश्च तिलकालकमण्डिताः ।
मध्यक्षामाश्च बिम्बोष्ठीः कमलोत्पलमालिकाः ॥ ६१
अनेकाकारविन्यासैर्निर्ममे ताः पृथक्पृथक् ।

एवं हि दिव्यैः सुरसुन्दरीभिः
नानाप्रयोगैर्विविधैश्च चित्रैः ।
मनोभिरामैर्नयनाभिरामैः
युक्तान्तवेदिं त्वरितश्चकार ॥ ६२

सूत उवाच—

मण्डपं निर्मितं श्रुत्वा शङ्करो विश्वकर्मणा ।
शैलादिमब्रवीद्देवो विश्वेशो विश्वपूजितः ॥ ६३

भगवानुवाच—

हितार्थं सर्वदेवानामस्माकं च विशेषतः ।
विवाहयज्ञ आरब्धो नगराजेन धीमता ॥ ६४

दानार्थमद्रिकन्यायाः प्रस्थितो हिमवान् स्वयम् ।
अहं तत्र गमिष्यामि सुरैर्ब्रह्मादिभिः सह ॥ ६५

त्वमिहाऽऽवाहय सुरान्कालाग्न्यादीन्द्विजांस्तथा ।
द्वीपांश्च सागरांश्चैव पर्वतांश्च नदीस्तथा ॥ ६६

मण्डपं सुन्दरं यत्र निर्मितं विश्वकर्मणा ।
तत्र तिष्ठत्युमादेवी मम ध्यानपरायणा ॥ ६७

विद्युल्लतेव भासन्ती चन्द्रकोटिनिभानना ।
एवमुक्तो महेशेन नन्दी सूर्यायुतप्रभः ॥ ६८

नत्वा विश्वेश्वरं देवं ध्यानारूढस्तदाऽभवत् ।
ध्यातः क्षणात्समायातः कालाग्निर्विश्वदाहकः ॥ ६९

रुद्रैः परिवृतो देवः कोटिकोटिगणेश्वरैः ।
ततोऽब्रवीत् स कालाग्निः सर्वज्ञं नन्दिकेश्वरम् ॥ ७०

किमर्थमहमाहूतो देवदेवेन शम्भुना ।
उपस्थितो वा प्रलयः संहरिष्यामि तत्क्षणात् ॥ ७१

एवमुक्तः तदा तेन शैलादिस्तमथाब्रवीत् ।
प्रलयार्थं न चाहूतस्त्वं विश्वेशेन शम्भुना ॥ ७२

ग्रहीष्यति गिरेः पुत्रीं पत्नीत्वेन महेश्वरः ।

तदर्थं त्वमिहाऽऽहूतो ब्रह्मद्याश्च दिवौकसः ॥ ७३

नन्दिनो वचन श्रुत्वा कालाग्निरिदमब्रवीत् ।
द्रष्टुकामा वयं सर्वे ब्रह्माद्या शूलपाणिनम् ॥ ७४

शीघ्रं दर्शय शैलादे निर्वृताः स्मो यथा वयम् ।
विज्ञापय महादेवं ब्रह्माद्याश्चागता इति ॥ ७५

सर्वे त्वद्ध्याननिरताः सर्वे त्वद्दर्शनोत्सुकाः ।
कालाग्निप्रमुखानाञ्च वचः श्रुत्वा गणाग्रणीः ।
प्राह विश्वेश्वरं देवं स्निग्धगम्भीरया गिरा ॥ ७६

नन्दिकेश्वर उवाच—

ब्रह्माद्याश्चागतास्सर्वे शूलपाणे तवाज्ञया ।
द्रष्टुमिच्छन्ति ते सर्वे नमस्कर्तुं तथा मुदा ॥ ७७

दिशाऽऽदेशं पुरारे मां किं वक्ष्यामि सुरासुरान् ।
वारिता द्वारमूलेषु द्रष्टुकामाश्च संस्थिताः ॥ ७८

यत्ते निरुपमं रूपं तेजोमयमनिन्दितम् ।
यदधोभागमाश्रित्य रुद्रः कालाग्निसंज्ञितः ॥ ७९

पश्यन्तु चैते भूतेशं शूलं चैव सदोज्ज्वलम् ।
ततो विवेश कालाग्निर्विष्णुर्ब्रह्मा शतक्रतुः ॥ ८०

अन्ये च देवगन्धर्वा ऋषयो मनवस्तथा ।
सर्वे कोलाहलं कृत्वा देवासुरमहोरगाः ॥ ८१

विविशुर्हरसस्थानं नद्याद्या इव सागरम् ।

प्रविश्य भवने रम्ये नानाधातुविचित्रिते ॥　८२
गणकोटिसमाकीर्णे रुद्रकोटिसुसेविते ।
अग्रजन्मगुरुः पूर्वं रुद्रैर्देवैर्वृतस्तदा ॥　८३
भवारिमन्धकारिं तमपश्यदन्तकानलः ।
मुक्ताचलप्रतीकाशं शशाङ्कचयसन्निभम् ॥　८४
नीलकण्ठं त्रिनेत्रं च शूलिनं सर्वतोमुखम् ।
कोटिसूर्यप्रतीकाशं जगदानन्दकारिणम् ॥　८५
कपालमालिनं देवं कपर्दकृतभूषणम ।
दशबाहुं दशार्धास्यं अनन्तं तेजसां निधिम् ॥　८६
जगदुत्पत्तिसंहारस्थित्यनुग्रहकारिणम् ।
अप्रमेयमनाकारं अप्रपञ्चमनाकुलम् ॥　८७
सिंहासनस्थमचलं चराचरविभूतिदम् ।
क्षीरोदमिव निष्कम्पं त्रैलोक्यप्रभवं शिवम् ॥　८८
सर्वतः पाणिपादान्तं सर्वतोक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य संस्थितम् ॥　८९
सुरासुरैर्वन्द्यमानं ध्यायमानं मुमुक्षुभिः ।
इदं रूपं समालोक्य देवदेवस्य शूलिनः ॥　९०
अग्रे स्थितः स कालाग्निर्मेरौ मेरुरिवापरः ।
अथोवाच स शैलादिः प्रणिपत्य सनातनम् ॥　९१
नरकाणामधो भागे पुरत्रयं प्रतिष्ठितम् ।

योजनायुतविस्तीर्णं कामदं शुभलक्षणम् ॥ ९२
यस्यैवोर्ध्वं निरालम्बं शतयोजनमानतः ।
ज्वालामालाकुलं दिव्यं सर्वलोकभयंकरम् ॥ ९३
प्राकाराट्टालकैर्युक्तं गोपुरैस्तोरणान्वितम् ।
रक्तनीलसमानाभैर्भीमघोषैर्दुरासदैः ॥ ९४
वृतो रुद्रसहस्रैस्तु सिंहरूपैर्महाबलैः ।
नियम्य च स्वकं तेजः प्रीत्यर्थं तेऽधुनाऽऽगतः ॥ ९५
ध्वान्तचामीकराभासश्चन्दनागरुगन्धयुक् ।
नीलकण्ठस्त्रिनेत्रश्च वृषकेतुर्महाबलः ॥ ९६
द्वीपिचर्मपरीधानः पञ्चवक्त्रेन्दुभूषणः ।
अनन्तमेखलाधारी कुण्डलीकृततक्षकः ॥ ९७
दशबाहुर्महातेजाः पीनवक्षा महाभुजः ।
प्रलयोदनिधेर्घोषो रक्तनीलमहातनुः ॥ ९८
आगतः सौम्यरूपेण तव देव समीपतः ।
पश्यतां मृदुभावेन देवदेव जगत्पते ॥ ९९
एते चैव महावीर्याः कालाग्नेस्तु समीपतः ।
तिष्ठन्ति ज्वलनाभासा रुद्राश्च शतकोटयः ॥ १००
त्वन्नियोगान्महादेव कालाग्न्यादेशकारिणः ।
तिष्ठन्ति स्वपुरे रम्ये क्रीडमाना मनोरमे ॥ १०१
तवानुज्ञागता ह्येते शशाङ्कमौलिनोऽमलाः ।

शुद्धस्फटिकसङ्काशाः पद्मरागसमप्रभाः ॥ १०२

तडिद्भ्रमरसङ्काशा वज्रशूलधनुर्धराः ।
नीलकण्ठास्त्रिणेत्राश्च सुखदुःखविवर्जिताः ॥ १०३

सर्वाभरणसम्पन्ना अनन्तबलविक्रमाः ।
जरामरणनिर्मुक्ताः शार्दूलचर्मवाससः ॥ १०४

इमानपि महादेव पश्यन्प्रीतिकरो भव ।
हरिचन्दनलिप्ताङ्गान् अशोककमलार्चितान् ॥ १०५

दैत्याधिपतयश्चैव प्रह्लादाद्या महाबलाः ।
समागता महादेव नागाः शेषादयः शिव ॥ १०६

सर्वाः पातालवासिन्यो रूपयौवनगर्विताः ।
आगता देवदेवेश द्वीपैश्च सह सागराः ॥ १०७

गन्धर्वाः किन्नरा यक्षाः सिद्धविद्याधराः शिव ।
उर्वश्याद्याश्चाप्सरसो नद्यः पापहराः शुभाः ॥ १०८

एते च मुनयो देव भृग्वाद्याः प्रथितौजसः ।
सम्प्राप्तानि पुराणीह शक्रादीनां महात्मनाम् ॥ १०९

एते लोकाः समायाताः सत्यान्ताः सप्त शङ्कर ।
मूर्तयस्तव देवेश भवाद्याश्च समागताः ॥ ११०

आदित्या वसवो रुद्राः साध्याश्चैव मरुद्गणाः ।
सनकाद्या महात्मानः सत्यलोकनिवासिनः ॥ १११

पद्मरागनिभो देवो बन्धूककुसुमद्युतिः ।

जटाभिस्तु शिरोनद्धो रत्नमालाविभूषितः ॥ ११२

कमण्डलुधरः श्रीमान् दण्डहस्तः सुलोचनः ।

कृष्णाजिनोत्तरीयेण रक्तमाल्याम्बरेण च ॥ ११३

सुवर्णमेखलाधारी रौक्मकुण्डलमण्डली ।

हंसध्वजश्चतुर्बाहुः सुरासुरनमस्कृतः ॥ ११४

सावित्र्या सहितो देवः पद्मयोनिरिहागतः ।

अतसीपुष्पसङ्काशः तमालदलवर्चसः ॥ ११५

पीताम्बरधरःश्यामः पीतगन्धानुलेपनः ।

शङ्खचक्रगदाधारी शार्ङ्गी गरुडवाहनः ॥ ११६

किरीटी कुण्डली हारी कौस्तुभाभरणान्वितः ।

केयूरवलयापीडः पीनवक्षा गदान्वितः ॥ ११७

चामीकरसुमालाभिः दीप्यमानो विराजते ।

सूर्यायुतप्रतीकाशो नीलोत्पलदलेक्षणः ॥ ११८

क्षीरोदार्णवशायी च नीलजीमूतनिःस्वनः ।

रमामर्दितसर्वाङ्गः शेषपर्यङ्कलालसः ॥ ११९

गुरूणाञ्च गुरुर्देव ईश्वराणामपीश्वरः ।

वरदो भव वात्सल्यो दैत्यकोटिक्षयंकरः ॥ १२०

आगतोऽयं महादेव विष्णुः प्रियतरस्तव ।

तप्तचामीकरप्रख्यो वज्रहस्तो महाबलः ।

पट्टांशुकपरीधानो हेममालाविभूषितः ॥ १२१

प्रख्यातवीर्यो बलवृत्रहन्ता बालार्कभासो हरिचन्दनाङ्कः ।
पुन्नागनागैर्बकुलैश्च जुष्टो मुक्ताफलालङ्कृतकण्ठदेशः ॥

अयं समागतः शक्रो वह्निर्वैवस्वतस्तथा ।
निर्ऋतिर्वरुणो वायुः कुबेरश्च समागतः ॥ १२३

ईशानश्च महाभागस्त्रिशत्कोटिगणैर्वृतः ।
आगतस्त्रिजगद्योने पिनाकी च गणेश्वरः ॥ १२४

दशकोटिगणैर्युक्तः कालकण्ठस्तथैव च ।
सप्तकोटिगणैर्युक्तो घण्टाकर्णो महाबलः ॥ १२५

दशकोटिगणैर्युक्तो वसुघोषो महाबलः ।
चतुष्कोटिगणैर्दण्डी शिखण्डी दशकोटिभिः ॥ १२६

षड्भिस्तु मुण्डमाली च त्रिशूली पञ्चकोटिभिः ।
सप्तकोटिगणैर्युक्तः किरीटी च समागतः ॥ १२७

कालान्तकस्तु दशभिर्नकुली दशकोटिभिः ।
षड्भिस्तु मुण्डमाली च त्रिशूली पञ्चकोटिभिः ॥ १२८

अष्टभिर्विश्वमाली च त्रिमूर्तिर्नवकोटिभिः ।
एते गणेश्वराः सर्वे तथाचान्ये गणेश्वराः ॥ १२९

येषां संख्या न जानन्ति ब्रह्माद्या देवतागणाः ।
आगतानां महादेव शृणु कोलाहलं विभो ॥ १३०

अमरेशः प्रभासश्च पुष्करो नैमिषस्तथा ।

आषाढीं दण्डी मुण्डी च भारभूतिस्तथाकुली ॥ १३१

तीर्थाधिपतयो देवा आगता दिव्यमूर्तयः ।
एते गुह्याष्टका देव कामरूपा महाबलाः ॥ १३२

तवाऽऽज्ञयाऽऽगतावेव ब्रह्माण्डान्तरवासिनः ।
कोटिकोटिगणैर्युक्ता देवदेव महेश्वर ॥ १३३

विश्वेश्वर जटोद्भूता सिन्धुश्चैव सरस्वती ।
यमुना गण्डकी नागा विपाशा नर्मदा शिवा ॥ १३४

रुक्मा घण्टा च निर्विन्ध्या देविका च दृषद्वती ।
शतद्रुश्च पयोष्णी च चन्द्रभागा च गोमती ॥ १३५

चर्मण्वती च कावेरी सरयूश्च परावती ।
धूतपापा च सारख्या माणामाला सुगन्धिका ॥ १३६

जम्बू तापी वनी शूरा कौशिकी कुमुदाकरा ।
मन्दाकिनी चन्द्रलेखा चम्पकाऽऽमोदवाहिनी ॥ १३७

ऐरावती कामवेगा प्रेङ्खला कामचारिणी ।
पूर्णभद्रा महामोदा गम्भीरावर्तिनी स्मृता ॥ १३८

मेघमाला मेघवर्णा सदानीरा च नन्दिनी ।
वेदा वेदवती वीणा सीता चित्रोत्पला तथा ॥ १३९

वेत्रवती च वृत्रघ्नी पिप्पला जञ्जली तथा ।
खरजा कुमुदा शिक्षा कौशिकी निषधा सिता ॥ १४०

वैतरणी सिनीवाली तथ वेगवती पुनः ।
गौरी कृष्णा तथा दुर्गा तुङ्गभद्रोत्पलावती ॥ १४१

स्वर्णा भीमरथी शुद्धा कृतमाला तरङ्गिणी ।
एता देव महानद्यः पावनाः कल्मषापहाः ॥ १४२

मूर्तिमत्यस्तवेशान उत्सवे त्विह आगताः ।
सर्वा एता महादेव पश्य कारुण्यवारिधे ॥ १४३

भवन्ति कृतिनः सर्वे त्वयि दृष्टे महेश्वर ।
एवमुक्त्वा तदा नन्दी देवदेवस्य चाग्रतः ।
पपात दण्डवद्भूमौ भक्त्या परमया युतः ॥ १४४

सूत उवाच—

अथासौ हिमवान् विप्रा देवीमात्मसुतामुमाम् ।
प्रदानार्थं महेशाय संप्राप्तो मन्दरं क्षणात् ॥ १४५

आह दृष्ट्वा गिरिं नन्दी देवदेवं पिनाकिनम् ।
वक्तुकामः समायातो भगवान् पर्वतेश्वरः ॥ १४६

श्रुत्वा तु वचनं श्लक्ष्णं व्यक्तं नन्दीमुखात्तदा ।
मेघगम्भीरया वाचा महादेवोऽब्रवीदिदम् ॥ १४७

वदत्वयं गिरिश्रेष्ठो हृदये यत्प्रतिष्ठितम् ।
कामस्तस्य चिरादेव भविष्यति न संशयः ॥ १४८

एवमुक्तस्तदा विप्रा देवदेवेन शम्भुना ।
उवाच गिरिशार्दूलो भूत्वाऽग्रेऽवनताञ्जलिः ॥ १४९

हिमवानुवाच—

याऽऽसीत्पूर्वं च ते पत्नी साऽवतीर्णा गृहे मम ।
तामेव तव दानार्थं आगतोऽस्मि महेश्वर ॥ १५०

अमी ब्रह्मादयो देवास्त्वत्समीपमिहागताः ।
किं गोत्रमिति पृच्छामि ह्येषामग्रे विभो वद ॥ १५१

श्रुत्वा तु भारतीं तस्य विश्वेशो विश्ववन्दितः ।
किं गोत्रमिति सञ्चिन्त्य नोत्तरं प्रससर्ज ह ॥ १५२

दृष्ट्वा निरुत्तरं शम्भुं जहसुर्देवदानवाः ।
एष एव जगद्योनिर्गोत्रमस्य कथं भवेत् ॥ १५३

इत्यूचुर्विबुधाः सर्वे हिमवन्तं नगोत्तमम् ।
देवानाञ्च वचः श्रुत्वा गिरिराजोऽब्रवीदिदम् ॥ १५४

विश्वेश्वरं परन्धाम परमात्मानमव्ययम् ।
शाश्वतं गिरिशं स्थाणुं विश्वाकारं सनातनम् ॥ १५५

दत्ता दत्ता पुनर्दत्ता उमा सत्येन ते प्रभो ।
ततो महान् रवो विप्रा जयशब्दादिमङ्गलैः ॥ १५६

दुन्दुभीनां च वाद्यानामभवत्सागरोपमः ।
गृहीतेति शिवः प्राह पार्वतीं पर्वतेश्वरम् ॥ १५७

तद्धस्ते भगवाञ्छंभुरङ्गुलीयं प्रवेशयत् ।
इमं च कलशं हैममादाय त्वं नगोत्तम ॥ १५८

याहि गत्वा त्वनेनैव तामुमां स्नापय त्वरा ।

अन्येषां परिहारार्थं एष एव विधिः सदा ॥ १५९

जगत्त्रयेपि नूनं स्याद्व्रज तूर्णं नराधिप ।
तत स्तुष्टो महाशैलोऽभोजयत् सुसमाहितः ॥ १६०

एवं यज्ञरतो विप्रास्तर्पणाय चराचरान् ।
अभवद्देवमुद्दिश्य शङ्करं स गिरिस्तदा ॥ १६१

तथाऽस्मिन्नन्तरे देवो धर्मकेतुर्महेश्वरः ।
उत्थितो मुनिशार्दूलाः समालोक्य च शार्ङ्गिणम् ॥ १६२

अभवज्जयशब्दानां तुमुलो हि महांस्तदा ।
पुष्पवृष्टिनिपातश्च सत्यलोकात् द्विजोत्तमाः ॥ १६३

नाना वनाधिपाश्चैव ऋतवश्च मुदान्विताः ।
कुसुमैर्दिव्यगन्धाढ्यैः ववृषुर्मेघबृन्दवत् ॥ १६४

वीणावेणुमृदङ्गानां दुन्दुभीनां ततो रवः ।
हरिर्विरिञ्चिशक्राद्याः पूरयन्ति सुरास्तदा ॥ १६५

विप्रास्त्रैलोक्य नादेन वेदघोषं प्रचक्रिरे ।
गायत्री चैव सावित्री रुद्रकन्यास्तथैव च ॥ १६६

विद्याधर्योऽथ नागिन्यो देवानां च तथाङ्गनाः ।
सिद्धकन्या मनोहार्या यक्षकन्यास्तथैव च ॥ १६७

मातरः सप्त याश्चैव याश्च नक्षत्रमातरः ।
गिरीणाञ्च तथा नार्यः समुद्राश्च सरांसि च ॥ १६८

मङ्गलं गायमानाश्च अर्घमष्टाङ्गसंयुतम् ।
सुप्रहृष्टा ददुः सर्वा देवदेवस्य पादयोः ॥ १६९

इदं यः पठते नित्यं शृणुयात् वापि भक्तितः ।
प्रीतास्स्युः देवताः सर्वाः तस्य अभीष्टफलप्रदाः ॥ १७०

इति श्री ब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनक संवादे
साम्बविवहवर्णनं नाम उमाकल्याणं सम्पूर्णम् ॥

---

॥ श्रीः ॥

शुभं अस्तु

# श्रीपार्वतीकल्याणम्

( शिवपुराणात् उद्धृतम् )

ब्रह्मोवाच—

एतस्मिन्नन्तरे त्वं हि विष्णुना प्रेरितो द्रुतम् ।
अनुकूलयितुं शम्भुं अयास्तन्निकटे मुने ॥ १

तत्र गत्वा स वै रुद्रो भवता सुप्रबोधितः ।
स्तोत्रैर्नानाविधैस्तुत्वा देवकार्यचिकीर्षया ॥ २

श्रुत्वा तद्वचनं प्रीत्या शम्भुना धृतमद्भुतम् ।
स्वरूपमुत्तमन्दिव्यं कृपालुत्वं च दर्शितम् ॥ ३

तत् दृष्ट्वा सुन्दरं शम्भुं स्वरूपं मन्मथाधिकम् ।
अत्यहृष्यो मुने त्वं हि लावण्यपरमायनम् ॥ ४

स्तोत्रैर्नानाविधैः स्तुत्वा परमानन्दसंयुतः ।
आगच्छस्त्वं मुने तत्र यत्र मेना स्थिताखिलैः ॥ ५

तत्रागत्य सुप्रसन्नो मुनेऽतिप्रेमसङ्कुलः ।
हर्षयंस्तां शैलपत्नीं मेनां तां वाक्यमब्रवीः ॥ ६

नारद उवाच—

मेने पश्य विशालाक्षि शिवरूपमनुत्तमम् ।
कृता शिवेन तेनैव सुकृपा करुणात्मना ॥ ७

श्रुत्वा सा तद्वचो मेना विस्मिता शैलकामिनी ।
ददर्श शिवरूपं तत् परमानन्ददायकम् ॥ ८

कोटिसूर्यप्रतीकाशं सर्वावयवसुन्दरम् ।
विचित्रवसनं चात्र नाना भूषणभूषितम् ॥ ९

सुप्रसन्नं सुहासं च सुलावण्यं मनोहरम् ।
गौराभं द्युतिसंयुक्तं चन्द्ररेखाविभूषितम् ॥ १०

सर्वैः देवगणैः प्रीत्या विष्णवाद्यैः सेवितं तथा ।
सूर्येण च्छवितं मूर्ध्नि चन्द्रेण च विशोभितम् ॥ ११

सर्वथा रमणीयं च भूषितस्य विभूषणैः ।
वाहनस्य महाशोभा वर्णितुं नैव शक्यते ॥ १२

गङ्गा च यमुना चैव विधत्तः स्म सुचामरे ।
सिद्धयोऽष्टौ पुरस्तस्य कुर्वन्ति स्म सुनर्त्तनम् ॥ १३

मया चैव तदा विष्णुः इन्द्राद्या ह्यमरास्तथा ।
स्वं स्वं वेषं सुसम्भूष्य गिरिशेनाचरन्युताः ॥ १४

तथा जयेति भाषन्तो नानारूपा गणास्तदा ।
स्वलङ्कृता महामोदा गिरीशपुरतोऽचरन् ॥ १५

सिद्धाश्चोपसुराः सर्वे मुनयश्च महामुखाः ।
ययुश्शिवेन सुप्रीताः सकलाश्चापरे तथा ॥ १६

एवं देवादयः सर्वे कुतूहलसमन्विताः ।
परं ब्रह्म गृणन्तस्ते स्वपत्नीभिरलङ्कृताः ॥ १७

विश्वावसुमुखास्तत्र ह्यप्सरोगण संयुताः ।
गायन्तोऽप्यग्रतः तस्य परमं शाङ्करं यशः ॥ १८

इत्थं महोत्सवस्तत्र बभूव मुनिसत्तम ।
नानाविधो महेशे हि शैलद्वारि च गच्छति ॥ १९

तस्मिंश्च समये तत्र सुषमा या परात्मनः ।
वर्णितुं तां विशेषेण कश्शक्नोति मुनीश्वर ॥ २०

तथाविधं च तं दृष्ट्वा मेना चित्रगता इव ।
क्षणमासीत्ततः प्रीत्या प्रोवाच वचनं मुने ॥ २१

धन्या पुत्री मदीया च यया तप्तं महत्तपः ।
यत्प्रभावान्महेशान त्वं प्राप्त इह मद्गृहे ॥ २२

मया कृता पुरा या वै शिवनिन्दा दुरात्यया ।
तां क्षमस्व शिवस्वामिन् सुप्रसन्नो भवाधुना ॥ २३

इत्थं सम्भाष्य सा मेना संस्तूयेन्दु ललाटकम् ।
साञ्जलिः प्रणता शैलप्रिया लज्जापराऽभवत् ॥ २४

तावत्स्त्रियस्समाजग्मुः हित्वा कामाननेकशः ।
बह्व्यस्ताः पुरवासिन्यः शिवदर्शन लालसाः ॥ २५

मज्जनं कुर्वती काचित् तच्चूर्णसहिता ययौ ।
द्रष्टुं कुतूहलाढ्या च शङ्करं गिरिजावरम् ॥ २६

काचित्तु स्वामिनः सेवां सखीयुक्ता विहाय च ।
सुचामरकरा प्रीत्यागाच्छम्भोः दर्शनाय वै ॥ २७

काचित्तु बालकं हित्वा पिबन्तं स्तन्यमादरात् ।
अतृप्तं शङ्करं द्रष्टुं ययौ दर्शन लालसा ॥ २८

रशनां बध्नती काचित् तयैव सहिता ययौ ।
वसनं विपरीतं वै धृत्वा काचिद्ययौ ततः ॥ २९

भोजनार्थं स्थितं कान्तं हित्वा काचिद्ययौ प्रिया ।
द्रष्टुं शिवावरं प्रीत्या सतृष्णा सकुतूहला ॥ ३०

काचिद्धस्ते शलाकां च धृत्वाञ्जनकरा प्रिया ।
अञ्जित्वैकाक्षि सन्द्रष्टुं ययौ शैलसुतावरम् ॥ ३१

काचित्तु कामिनी पादो रञ्जयन्तीं ह्यलक्तकैः ।
श्रुत्वा घोषं च तद्धित्वा दर्शनार्थमुपागता ॥ ३२

इत्यादि विविधं कार्यं हित्वा वासं स्त्रियो ययुः ।
दृष्ट्वा तु शाङ्करं रूपं मोहं प्राप्तस्तदाऽभवन् ॥ ३३

ततस्ताः प्रेमसंविग्नाः शिवदर्शनहर्षिताः ।
निधाय हृदि तन्मूर्तिं वचनं चेदमब्रुवन् ॥ ३४

पुरवासिन्य ऊचुः—

नेत्राणि सफलान्यासन् हिमवत्पुरवासिनाम् ।
यो योऽपश्यददो रूपं तस्य वै सार्थकं जनुः ॥ ३५

तस्यैव सफलं जन्म तस्यैव सफलाः क्रियाः ।
येन दृष्टः शिवस्साक्षात् सर्वपाप प्रणाशकः ॥ ३६

पार्वत्या साधितं सर्वं शिवार्थे यत्तपः कृतम् ।

धन्येयं कृतकृत्येयं शिवा प्राप्य शिवं पतिम् ॥ ३७

यदीदं युगलं ब्रह्मा न युंज्याच्छिवयोर्मुदा ।
तदा च सकलोऽप्यस्य श्रमो निष्फलतामियात् ॥ ३८

सम्यक् कृतं तथा चात्र योजितं युग्ममुत्तमम् ।
सर्वेषां सर्वथा जाता सर्वकार्यसमुद्भवा ॥ ३९

विना तु तपसा शम्भोः दर्शनं दुर्लभन्नृणाम् ।
दर्शनाच्छङ्करस्यैव सर्वे याताः कृतार्थताम् ॥ ४०

लक्ष्मीर्नारायणं लेभे यथा वै स्वामिनं पुरा ।
तथासौ पार्वती देवी हरं प्राप्य सुभूषिता ॥ ४२

वयं धन्याः स्त्रियः सर्वाः पुरुषाः सकला वराः ।
ये ये पश्यन्ति सर्वेशं शङ्करं गिरिजापतिम् ॥ ४३

ब्रह्मोवाच—

इत्युक्त्वा तु वचनं चन्दनैश्चाक्षतैरपि ।
शिवं समर्चयामासुः लाजान्ववृषुरादरात् ॥ ४४

तस्थुः तत्र स्त्रियः सर्वाः मेनया सहसोत्सुकाः ।
वर्णयन्त्योधिकं भाग्यं मेनायाश्च गिरेरपि ॥ ४५

कथास्तथाऽविधाः शृण्वन् तद्वामावर्णिताः शुभाः ।
प्रहृष्टोऽभूत् प्रभुः सर्वैः मुने विष्णवादिभिस्तदा ॥ ४६

अथ शम्भुः प्रसन्नात्मा सद्रुतं स्वगणैस्सुरैः ।
सर्वैरन्यैर्गिरेर्द्धाम जगाम सकुतूहलम् ॥ ४७

मेनापि स्त्रीगणैस्तैश्च हिमाचलवरप्रिया ।
तत उत्थाय स्वगृहाभ्यन्तरं स जगाम ह ॥ ४८

नीराजनार्थं शम्भोश्च दीपपात्रकरा सती ।
सर्वर्षिस्त्रीगणैस्साकं अगच्छद् द्वारमादरात् ॥ ४९

तत्रागतं महेशानं शङ्करं गिरिजावरम् ।
ददर्श प्रीतितो मेना सेवितं सकलैस्सुरैः ॥ ५०

चारुचम्पकवर्णाभमेकवक्त्रं त्रिलोचनम् ।
ईषद्धास्यप्रसन्नास्यं रत्नस्वर्णादिभूषितम् ॥ ५१

मालतीमालसंयुक्तं सद्रत्नमुकुटोज्वलम् ।
सत्कण्ठाभरणं चारु वलयाङ्गदभूषितम् ॥ ५२

वह्निशौचेनातुलेन त्वतिसूक्ष्मेण चारुणा ।
अमूल्य वस्त्रयुग्मेन विचित्रेणातिराजितम् ॥ ५३

चन्दनागरु कस्तूरी चारुकुङ्कुम भूषितम् ।
रत्नदर्पण हस्तं च कज्जलोज्ज्वल लोचनम् ॥ ५४

सर्वस्वप्रभयाच्छन्नमतीव सुमनोहरम् ।
अतीव तरुणं रम्यं भूषिताङ्गैश्च भूषितम् ॥ ५५

कामिनी कान्तमव्यग्रं कोटिचन्द्राननाम्बुजम् ।
कोटिस्मराधिक तनुच्छविं सर्वाङ्गसुन्दरम् ॥ ५६

ईदृग्विधं सुदेवं तं स्थितं स्वपुरतः प्रभुम् ।
दृष्ट्वा जामातरं मेना जहौ शोकम्मुदान्विता ॥ ५७

प्रशशंस स्वभाग्यं सा गिरिजां भूधरं कुलम् ।
मेने कृतार्थमात्मानं जहर्ष च पुनः पुनः ॥ ५८
नीराजनं चकारासौ प्रपुल्लवदना सती ।
अवलोकपरा तत्र मेना जामातरं मुदा ॥ ५९
गिरिजोक्तमनुस्मृत्य मेना विस्मयमागता ।
मनसैव ह्युवाचेदं हर्षपुल्लाननाम्बुजा ॥ ६०
यद्वै पुरोक्तं च तया पार्वत्त्या मम तत्र च ।
ततोऽधिकं प्रपश्यासि सौन्दर्यं परमेशितुः ॥ ६१
महेशस्य सुलावण्यं अनिर्वाच्यं च सम्प्रति ।
एवं विस्मयमापन्ना मेना स्वगृहमाययौ ॥ ६२
प्रशशंसुर्युवतयो धन्या धन्या गिरेः सुता ।
दुर्गा भगवतीत्येवं ऊचुः काश्चन कन्यकाः ॥ ६३
न दृष्टो वर इत्येवमस्माभिर्दानगोचरः ।
धन्या हि गिरिजा देवीमूचुः काश्चन कन्यकाः ॥ ६४
जगुर्गन्धर्व प्रवरा ननृतुश्चाप्सरोगणाः ।
दृष्ट्वा शङ्कररूपं च प्रहृष्टाः सर्वदेवताः ॥ ६५
नानाप्रकार वाद्यानि वादका मधुराक्षरम् ।
नानाप्रकारशिल्पेन वादयामासुरादरात् ॥ ६६
हिमाचलोऽपि मुदितः द्वारचारमथाकरोत् ।
मेनापि सर्वनारीभिः महोत्सव पुरस्सरम् ॥ ६७

परपुच्छां चकारासौ मुदिता स्वगृहं ययौ ।
शिवो निवेदितं स्थानं जगाम रणनिर्जरैः ॥ ६८

एतस्मिन्नन्तरे दुर्गा शैलान्तः पुरचारिकाः ।
बहिर्जग्मुः समादाय पूजितुं कुलदैवताम् ॥ ६९

तत्र तां ददृशुर्देवानिमे परहिता मुदा ।
सुनीलाञ्जन वर्णाभां स्वाङ्गैश्च प्रतिभूषिताम् ॥ ७०

त्रिनेत्राद्दत नेत्रां तां अन्यवारित लोचनाम् ।
ईषद्धास्य प्रसन्नास्यां सकटाक्षां मनोहराम् ॥ ७१

सुचारुकबरीभारां चारुपत्रक शोभिताम् ।
कस्तूरीबिन्दुभिस्सार्द्धं सिन्दूरबिन्दुशोभिताम् ॥ ७२

रत्नेन्द्रसारहारेण वक्षसा सुविराजिताम् ।
रत्नकेयूरवलयां रत्नकङ्कणमण्डिताम् ॥ ७३

सद्रत्न कुण्डलाभ्यां च चारुगण्डस्थलोज्ज्वलाम् ।
मणिरत्नप्रभामुष्टि दन्तराजिविराजिताम् ॥ ७४

मधुबिंबाधरोष्टां च रत्नयावक संयुताम् ।
रत्नदर्पण हस्तां च क्रीडापद्मविभूषिताम् ॥ ७५

चन्दनागरुकस्तूरी कुंकुमेनातिचर्च्चिताम् ।
क्वणन्मञ्जीरपादां च रक्तांघ्रितलराजिताम् ॥ ७६

प्रणेमुः शिरसा देवीं भक्तियुक्ताः समेनकाम् ।
सर्वे सुरादयो दृष्ट्वा जगदाद्यां जगत्प्रसूम् ॥ ७७

त्रिनेत्रो नेत्रकोणेन तां ददर्श मुदान्वितः ।
शिवः सत्याकृतिं दृष्ट्वा विजहौ विरहज्वरम् ॥ ७८
शिवः सर्वं विसस्मार शिवासन्यस्तलोचनः ।
पुलकांचितसर्वाङ्गो हर्षाद्गौरीविलोचनः ॥ ७९
अथ काली बहिः पुर्य्या गत्वा पूज्यकुलाम्बिकाम् ।
विवेश भवनं रम्यं स्वपितुः सद्विजाङ्गना ॥ ८०
शङ्करोपि सुरैः सार्द्धं हरिणा ब्रह्मणा तथा ।
हिमाचलसमुद्दिष्टं स्वस्थानमगमन्मुदा ॥ ८१
तत्र सर्वे सुखं तस्थुः सेवन्तश्शङ्करं यथा ।
सम्मानिता गिरीशेन नानाविधि सुसम्पदा ॥ ८२
ततः शैलवरः सोपि प्रीत्या दुर्गोपवीतकम् ।
कारयामास सोत्साहं वेदमन्त्रैः शिवस्य च ॥ ८३
अथ विष्णवादयो देवाः मुनयस्सकुतूहलम् ।
हिमाचलप्रार्थनया विवेशान्तर्गृहं गिरेः ॥ ८४
श्रुत्याचारं भवाचारं विधाय च यथार्थतः ।
शिवामलङ्कृताश्चक्रुः शिवदत्तविभूषणैः ॥ ८५
प्रथमं स्नापयित्वा तां भूषयित्वाथ सर्वशः ।
नीराजिता सखीभिश्च विप्रपत्नीभिरेव च ॥ ८६
अहताम्बरयुग्मेन शोभिता वरवर्णिनी ।
विरराज महाशैल दुहिता शङ्करप्रिया ॥ ८७

कञ्चुकी परमा दिव्या नानारत्नान्विताद्भुता ।
विधृता च तथा देव्या विलसन्त्याधिकं मुने ॥ ८८

सा बभार तदा हारं दिब्यरत्नसमन्वितम् ।
वलयानि महार्हाणि शुद्धचामीकराणि च ॥ ८९

स्थिता तत्रैव सुभगा ध्यायन्ती मनसा शिवम् ।
शुशुभेऽति महाशैल कन्यका त्रिजगत्प्रसूः ॥ ९०

तदोत्सवो महानासीदुभयत्र मुदावहः ।
दानं बभूव विविधं ब्राह्मणेभ्यो विवर्णितम् ॥ ९१

अन्येषां द्रव्यदानञ्च बभूव विविधं महत् ।
गीतवाद्यविनोदश्च तत्रोत्सव पुरस्सरम् ॥ ९२

अथ विष्णुरहं धाता शक्राद्या अमरास्तथा ।
मुनयश्च महाप्रीत्या निखिलास्सोत्सवा मुदा ॥ ९३

सुप्रणम्य शिवां भक्त्या स्मृत्वा शिवपदाम्बुजम् ।
सम्प्राप्य हिमगिर्य्याज्ञां स्वं स्वं स्थानं समाश्रिताः ॥ ९४

एतस्मिन्नन्तरे तत्र ज्योतिःशास्त्रविशारदः ।
हिमवन्तं गिरीन्द्रं तं गर्गो वाक्यमभाषत ॥ ९५

हिमाचल धराधीश स्वामिन् कालीपतिः प्रभो ।
पाणिग्रहार्थं शम्भुं चानय त्वं निजमन्दिरम् ॥ ९६

अथ तं समयं ज्ञात्वा कन्यादानोचितं गिरिः ।
निवेदितं च गर्गेण मुमुदेऽतीव चेतसि ॥ ९७

महीधरान्द्विजांश्चैव परानपि मुदा गिरिः ।
प्रेषयामास सुप्रीत्या शिवानयन काम्यया ॥ ९८
ते पर्वता द्विजाश्चैव सर्वमङ्गल पाणयः ।
संजग्मुस्सोत्सवाः प्रीत्या यत्र देवो महेश्वरः ॥ ९९
तदा वादित्रघोषेण ब्रह्मघोषेण भूयसा ।
महोत्साहोऽभवत्तत्र गीतनृत्यान्वितेन हि ॥ १००
श्रुत्वा वादित्रनिर्घोषं सर्वे शङ्करसेवकाः ।
उत्थितास्त्वैकपद्येन सदेवर्षिगणा मुदा ॥ १०१
परस्परं समूचुस्ते हर्षनिर्भरमानसाः ।
अत्रागच्छन्ति गिरयः शिवानयन काम्यया ॥ १०२
पाणिग्रहणकालो हि नूनं सद्यस्समागतः ।
महद्भाग्यं हि सर्वेषां सम्प्राप्तमिह मन्महे ॥ १०३
धन्या वयं विशेषेण विवाहं शिवयोर्ध्रुवम् ।
द्रक्ष्यामः परमप्रीत्या जगतां मङ्गलालयम् ॥ १०४
एवं यावदभूत्तेषां संवादस्तत्र चादरात् ।
तावत्सर्वे समायाताः पर्वतेन्द्रस्य मन्त्रिणः ॥ १०५
ते गत्वा प्रार्थयाञ्चक्रुः शिवं विष्ण्वादिकानपि ।
कन्यादानोचितः कालो वर्तते गम्यतामिति ॥ १०६
ते तच्छ्रुत्वा सुरास्सर्वे मुने विष्ण्वादयोखिलाः ।
मुमुदुश्चेतसातीव जयेत्यूचुर्गिरिं द्रुतम् ॥ १०७

शिवोपि मुमुदेऽतीव कालीप्रापण लालसः ।
गुप्तं चकार तच्चित्तं मनस्येवाद्भुताकृति ॥ १०८

अथस्नानं कृतं तेन मङ्गलद्रव्यसंयुतम् ।
शूलिना सुप्रसन्नेन लोकानुग्रहकारिणा ॥ १०९

स्नातस्सुवाससा युक्तःसर्वैस्तैः परिवारितः ।
आरोपितो वृषस्कन्धे लोकपालैस्सुसेवितः ॥ ११०

पुरस्कृत्य प्रभुं सर्वे जग्मुर्हिमगिरेर्गृहम् ।
वाद्यानि वादयन्तश्च कृतवन्तः कुतूहलम् ॥ १११

हिमागप्रेषिता विप्रास्तथा ते पर्वतोत्तमाः ।
शम्भोरग्रचरा ह्यासन् कुतूहलसमन्विताः ॥ ११२

बभौ छत्रेण महता ध्रियमाणो हि मूर्द्धनि ।
चामरै र्वीज्यमानोऽसौ सवितानो महेश्वरः ॥ ११३

अहं विष्णुस्तथा चेन्द्रो लोकपालास्तथैव च ।
अग्रगाः स्मातिशोभन्ते श्रिया परमयाश्रिताः ॥ ११४

ततश्शङ्खाश्च भेर्य्यश्च पटहानकगोमुखाः ।
पुनः पुनरवाद्यन्त वादित्राणि महोत्सवे ॥ ११५

तथैव गायकाः सर्वे जगुःपरममङ्गलम् ।
नर्तक्यो ननृतुस्सर्वाः नानातालसमन्विताः ॥ ११६

एभिस्समेतो जगदेकबन्धुः ययौ तदानीं परमेशवर्चसा ।
सुसेव्यमानस्सकलैस्सुरेश्वरैः विकीर्यमाणः कुसुमैश्च हर्षितैः॥

सम्पूजितस्तदा शम्भुः प्रविष्टो यज्ञमण्डपम् ।
संस्तूयमानो बह्वीभिः स्तुतिभिः परमेश्वरः ॥ ११८

वृषादुत्तारयामासुः महेशं पर्वतोत्तमाः ।
निन्युर्गृहान्तरं प्रीत्या महोत्सवपुरस्सरम् ॥ ११९

हिमालयोऽपि सम्प्राप्तं सदेवगणमीश्वरम् ।
प्रणम्य विधिवद्भक्त्या नीराजनमथाकरोत् ॥ १२०

सर्वान्सुरान्मुनीनन्यान्प्रणम्य समहोत्सवः ।
सम्मानमकरोत्तेषां प्रशंसन्स्वविधिम्मुदा ॥ १२१

सोऽगस्साच्युतमीशानं सुपाद्यार्घ्यपुरस्सरम् ।
सदेवमुख्यवर्गञ्च निनाय स्वालयान्तरम् ॥ १२२

प्राङ्गणे स्थापयामास रत्नसिंहासनेषु तान् ।
सर्वान्विष्णुं च मामीशं विशिष्टांश्च विशेषतः ॥ १२३

सखीभिर्मेनया प्रीत्या ब्राह्मणस्त्रीभिरेव च ।
अन्याभिश्च पुरन्ध्रीभिः चक्रे नीराजनं मुदा ॥ १२४

पुरोधसा कृत्यविदा शङ्कराय महात्मने ।
मधुपर्कादिकं यद्यत्कृत्यं तत्तत्कृतं मुदा ॥ १२५

मया स नोदितस्तत्र पुरोधाः कृतवांस्तदा ।
सुमङ्गलं च यत्कर्म प्रस्ताव सदृशं मुने ॥ १२६

अन्तर्वेद्यां महाप्रीत्या सम्प्रविश्य हिमाद्रिणा ।
यत्र सा पार्वती कन्या सर्वाभरण भूषिता ॥ १२७

वेदिकोपरि तन्वङ्गी संस्थिता सुविराजिता ।
तत्र नीतो महादेवो विष्णुना च मया सह ॥ १२८

लग्नन्निरीक्षमाणास्ते वाचस्पति पुरोगमाः ।
कन्यादानोचितन्तत्र बभूवुः परमोत्सवाः ॥ १२९

तत्रोपविष्टो गर्गश्च यत्रास्ति घटिकालयम् ।
यावच्छेषा घटी तावत् कृतं प्रणव भाषणम् ॥ १३०

पुण्याहं प्रवदन्गर्गः समादध्रेऽञ्जलिं मुदा ।
पार्वत्याऽक्षतपूर्णं च ववृषे च शिवोपरि ॥ १३१

तया सम्पूजितो रुद्रो दध्यक्षत कुशाम्बुभिः ।
परमोदाढ्यया तत्र पार्वत्या रुचिरास्यया ॥ १३२

विलोकयन्ती तं शम्भुं यस्यार्थे परमन्तपः ।
कृतं पुरा महाप्रीत्या विरराज शिवा ति सा ॥ १३३

मया मुने तदोक्तस्तु गर्गादि मुनिभिश्च सः ।
समानर्च शिवां शम्भुः लौकिकाचारसंरतः ॥ १३४

एवं परस्परं तौ वै पार्वतीपरमेश्वरौ ।
अर्चयन्तौ तदानीं च शुशुभाते जगन्मयौ ॥ १३५

त्रैलोक्यलक्ष्म्या संवीतौ निरीक्षन्तौ परस्परम् ।
तदा नीराजितौ लक्ष्म्यादिभिस्त्रीभिः विशेषतः ॥ १३६

तथा परा वै द्विजयोषितश्च
नीराजयामासुरथो पुरस्त्रियः ।

शिवाञ्च शम्भुञ्च विलोकयन्त्योऽवापुर्मुदन्तास्सकला
महोत्सवम् ॥ १३७

एतस्मिन्नन्तरे तत्र गर्गाचार्य्य प्रणोदितः ।
हिमवान्मेनया सार्द्धं कन्यां दादुं प्रचक्रमे ॥ १३८

हैमं कलशमादाय मेना चार्द्धांगमाश्रिता ।
हिमाद्रिश्च महाभागा वस्त्राभरण भूषिता ॥ १३९

पाद्यादिभिः ततः शैलः प्रहृष्टः सुपुरोहितः ।
तं वरं वरयामास वस्त्रचन्दन भूषणैः ॥ १४०

ततो हिमाद्रिणा प्रोक्ता द्विजास्तिथ्यादि कीर्तने ।
प्रयोगो भण्यतां तावदस्मिन्समय आगते ॥ १४१

तथेति चोक्त्वा ते सर्वे कालज्ञा द्विजसत्तमाः ।
तिथ्यादि कीर्तनं चक्रुः प्रीत्या परमनिर्वृताः ॥ १४२

ततो हिमाचलः प्रीत्या शम्भुना प्रेरितो हृदा ।
सूतीकृतः परेशेन विहसञ्छम्भुमब्रवीत् ॥ १४३

स्वगोत्रं कथ्यतां शम्भो प्रवरश्च कुलं तथा ।
नाम वेदं तथा शाखां माकार्षीः समयात्ययम् ॥ १४४

ब्रह्मोवाच—

इत्याकर्ण्य वचस्तस्य हिमाद्रेश्शङ्करस्तदा ।
सुमुखाविमुखः सद्योऽप्यशोच्यः शोच्यतां गतः ॥ १४५

एवंविधस्सुरवरैः मुनिभिस्तदानीं
गन्धर्वयक्षगणसिद्धगणैस्तथैव ।

दृष्टो निरुत्तरमुखो भगवान्महेशो-
ऽकार्षीत्सुहास्यमथ तत्र स नारदत्वम् ॥ १४६

वीणामवादयंस्त्वं हि ब्रह्मविज्ञोऽथ नारद ।
शिवेन प्रेरितस्तत्र मनसा शम्भुमानसः ॥ १४७

तदा निवारितो धीमान् पर्वतेन्द्रेण वै हठात् ।
विष्णुना च मया देवैः मुनिभिश्चाखिलैस्तथा ॥ १४८

न निवृत्तोऽभवस्त्वं हि स यदा शङ्करेच्छया ।
इति प्रोक्ताऽद्रिणा तर्हि वीणामावादयाधुना ॥ १४९

सुनिषिद्धो हठात्तेन देवर्षे त्वं यदा बुध ।
प्रत्यवोचो गिरीशं तं सुसंस्मृत्य महेश्वरम् ॥ १५०

नारद उवाच—

त्वं हि मूढत्वमापन्नो न जानासि च किञ्चन ।
वाच्ये महेश विषयेऽतीवासि त्वं बहिर्मुखः ॥ १५१

त्वया पृष्टोहरस्साक्षात् स्वगोत्र कथनं प्रति ।
समयेऽस्मिंस्तदत्यन्तमुपहासकरं वचः ॥ १५२

अस्य गोत्रं कुलं नाम नैव जानन्ति पर्वत ।
विष्णुब्रह्मादयोऽपीह परेषां का कथा स्मृता ॥ १५३

यस्यैक दिवसे शैल ब्रह्मकोटिर्लयं गता ।
स एव शङ्करस्तेऽद्य दृष्टः काली तपोबलात् ॥ १५४

अरूपोयं परब्रह्म निर्गुणः प्रकृतेः परः ।

निराकारो निर्विकारो मायाधीशः परात्परः ॥　　१५५

अगोत्र कुल नामा हि स्वतन्त्रो भक्तवत्सलः ।
तदिच्छया हि सगुणः सुतनुर्बहुनाम भृत् ॥　　१५६

सुगोत्री गोत्रहीनश्च कुलहीनः कुलीनकः ।
पावती तपसा सोऽद्य जामाता ते न संशयः ॥　　१५७

लीलाविहारिणा तेन मोहितं च चराचरम् ।
नो जानति शिवं कोपि प्राज्ञोऽपि गिरिसत्तम ॥　　१५८

लिङ्गाकृतेर्महेशस्य केन दृष्टं न मस्तकम् ।
विष्णुर्गत्वा हि पातालं तदेनं नापविस्मितः ॥　　१५९

किं बहूक्त्या नगश्रेष्ठ शिवमाया दुरत्यया ।
तदधीनास्त्रयोलोका हरि ब्रह्मादयोऽपि च ॥　　१६०

तस्मात्त्वया शिवातात सुविचार्यप्रयत्नतः ।
न कर्तव्योविमर्शोऽत्र त्वेवंविधवरे मनाक् ॥　　१६१

ब्रह्मोवाच—

इत्युक्त्वा त्वं मुने ज्ञानी शिवेच्छाकार्यकारकः ।
प्रत्यवोचःपुनस्तं वै शैलेन्द्रं हर्षयन् गिरा ॥　　१६२

नारद उवाच—

शृणुतात महाशैल शिवाजनक मद्वचः ।
तच्छ्रुत्वा तनयां देवीं देहि त्वं शङ्कराय हि ॥　　१६३

सगुणस्य महेशस्य लीलया रूपधारिणः ।

गोत्रं कुलं विजानीहि नादमेव हि केवलम् ॥ १६४

शिवो नादमयः सत्यं नादश्शिवमयस्तथा ।
उभयोरन्तरं नास्ति ना दस्य च शिवस्य च ॥ १६५

सृष्टौ प्रथमजत्वाद्धि लीलासगुणरूपिणः ।
शिवान्नादस्य शैलेन्द्र सर्वोत्कृष्टस्ततस्स हि ॥ १६६

अतोहि वादिता वीणा प्रेरितेन मयाद्य वै ।
सर्वेश्वरेण मनसा शङ्करेण हिमालय ॥ १६७

ब्रह्मोवाच—

एतच्छ्रुत्वा तव मुने वचस्तत्तु गिरीश्वरः ।
हिमाद्रिस्तोषमापन्नो गतविस्मयमानसः ॥ १६८

अथ विष्णुप्रभृतयः सुराश्च मुनयस्तथा ।
साधुसाध्विति ते सर्वे प्रोचुर्विगतविस्मयाः ॥ १६९

महेश्वरस्य गाम्भीर्यं ज्ञात्वा सर्वे विचक्षणाः ।
सविस्मया महामोदान्विताः प्रोचुः परस्परम् ॥ १७०

यस्याज्ञया जगदिदं च विशालमेव
जातं परात्परतरो निजबोधरूपः ।
शर्वः स्वतन्त्रगतिकृत्परभावगम्यः
सोऽसौ त्रिलोकपतिरद्य च नस्सुदृष्टः ॥ १७१

अथ ते पर्वतश्रेष्ठामेर्वाद्याः जातसम्भ्रमाः ।
ऊचुस्ते चैकपद्येन हिमवन्तं नगेश्वरम् ॥ १७२

पर्वता ऊचुः—

कन्यादाने स्थीयतां चाद्यशैल-
नाथोक्त्या किं कार्यनाशस्तवैव ।
सत्यं ब्रूमो नात्र कार्यो विमर्शः
तस्मात्कन्या दीयातामीश्वराय ॥ १७३

ब्रह्मोवाच—

तच्छ्रुत्वा वचनं तेषां सुहृदां स हिमालयः ।
स्वकन्यादानमकरोत् शिवाय विधिनोदितः ॥ १७४
इमां कन्यां तुभ्यमहं ददामि परमेश्वर ।
भार्यार्थं परिगृह्णीष्व प्रसीद सकलेश्वर ॥ १७५
तस्मै रुद्राय महते मन्त्रेणानेन दत्तवान् ।
हिमाचलो निजां कन्यां पार्वतीं त्रिजगत्प्रसूम् ॥ १७६
इत्थं शिवाकरं शैलं शिवहस्ते निधाय च ।
मुमोदातीव मनसि तीर्णकाममहार्णवः ॥ १७७
वेदमन्त्रेण गिरिशो गिरिजाकरपङ्कजम् ।
जग्राह स्वकरेणाशु प्रसन्नः परमेश्वरः ॥ १७८
क्षितिं संस्पृश्य कामस्य कोऽदादिति मनुं मुने ।
पपाठ शङ्करः प्रीत्या दर्शयँल्लौकिकीं गतिम् ॥ १७९
महोत्सवो महानासीत् सर्वत्र प्रमुदावहः ।
बभूव जयसंरावो दिवि भुव्यन्तरिक्षके ॥ १८०
साधुशब्दं नमःशब्दं चक्रुरसर्वेऽतिहर्षिताः ।

गन्धर्वाः सुजगुः प्रीत्या ननृतुश्चाप्सरोगणाः ॥ १८१

हिमाचलस्य पौरा हि मुमुदुश्चातिचेतसि ।
मङ्गलं महदासीद्वै महोत्सवपुरस्सरम् ॥ १८२

अहं विष्णुश्च शक्रश्च निर्जरा मुनयोऽखिलाः ।
हर्षिता ह्यभवंश्चातिप्रफुल्लवदनाम्बुजाः ॥ १८३

अथ शैलवरस्सोऽदात्सुप्रसन्नो हिमाचलः ।
शिवाय कन्यादानस्य साङ्गतां सुयथोचिताम् ॥ १८४

ततो बन्धुजनास्तस्य शिवां सम्पूज्य भक्तितः ।
ददुश्शिवाय सद्द्रव्यं नानाविधिविधानतः ॥ १८५

हिमालयस्तुष्टमनाः पार्वतीशिवप्रीतये ।
नानाविधानि द्रव्याणि ददौ तत्र मुनीश्वर ॥ १८६

कौतुकानि ददौ तस्मै रत्नानि विविधानि च ।
चारुरत्न विकाराणि पात्राणि विविधानि च ॥ १८७

गवां लक्षं हयानां च सज्जितानां शतं तथा ।
दासीनामनुरक्तानां लक्षं सद्द्रव्यभूषितम् ॥ १८८

नागानां शतलक्षं हि रथानां च तथा मुने ।
सुवर्णजटितानां च रत्नसार विनिर्मितम् ॥ १८९

इत्थं हिमालयो दत्वा स्वसुतां गिरिजां शिवाम् ।
शिवाय परमेशाय विधिनाऽऽप कृतार्थताम् ॥ १९०

अथ शैलवरो माध्यंदिनोक्तस्तोत्रतो मुदा ।

तुष्टाव परमेशानं सद्गिरा सुकृताञ्जलिः ॥　　१९१

ततो वेदविदा तेनाज्ञप्ताः मुनिगणास्तदा ।
शिरोभिषेकं चक्रुस्ते शिवायाः परमोत्सवाः ॥　　१९२

देवाभिधानमुच्चार्य पर्य्युक्षणविधिं व्यधुः ।
महोत्सवस्तदाचासीन्महानन्दकरो मुने ॥　　१९३

ब्रह्मोवाच—

अथो ममाज्ञया विप्रैः संस्थाप्यानलमीश्वरः ।
होमं चकार तत्रैवमङ्के संस्थाप्य पार्वतीम् ॥　　१९४

ऋग्यजुस्साममन्त्रैश्चाहुतिं वह्नौ ददौ शिवः ।
लाजाञ्जलिं ददौ काली भ्राता मैनाकसंज्ञकः ॥　　१९५

अथ काली शिवश्चोभौ चक्रतुर्विधिवन्मुदा ।
वह्निप्रदक्षिणां तात लोकचारं विधाय च ॥
तत्राद्भुतमलञ्चक्रे चरितं गिरिजापतिः ॥　　१९६

इति श्री शिवमहापुराणे द्वितीयायां रुद्रसंहितायां तृतीये पार्वतीकाण्डे
कन्यादानवर्णनं नाम अष्टचत्वारिंशोऽध्यायः सम्पूर्णः ॥

---

॥ श्रीः ॥

शुभं अस्तु

# श्री गौरीकल्याणम्

( वामनपुराणात् उद्धृतम् )

पुलस्त्य उवाच—

मेनायां कन्यकास्तिस्रः जाताः रूपगुणान्विताः ।
सुनाभ इति च ख्यात श्चतुर्थस्तनयोऽभवत् ॥ १

रक्ताङ्गी रक्तनेत्रा च रक्ताम्बरविभूषिता ।
रागिणी नाम सञ्जाता ज्येष्ठा मेनासुता मुने ॥ २

शुभाङ्गी पद्मपत्राक्षी नीलकुञ्चितमूर्धजा ।
श्वेतमाल्याम्बरधरा कुटिला नाम चापरा ॥ ३

नीलाञ्जनचयप्रख्या नीलेन्दीवरलोचना ।
रूपेणानुपमा काली जघन्या मेनकासुता ॥ ४

जातास्ताः कन्यकास्तिस्रः षडब्दात्पुरतो मुने ।
कर्तुं तपः प्रयाताश्च देवास्ता ददृशुः शुभाः ॥ ५

ततोदिवाकरैस्सर्वैः वसुभिश्च तपस्विनी ।
कुटिला ब्रह्मलोकं तु नीता शशिकरप्रभा ॥ ६

अथोचुर्देवतास्सर्वाः किंत्वियं जनयिष्यते ।
पुत्रं महिषहन्तारं ब्रह्मन् व्याख्यातुमर्हसि ॥ ७

ततोऽब्रवीत् सुरपतिः नेयं शक्ता तपस्विनी ।

शार्वं धारयितुं तेजः वराकी मुच्यतां त्वियम् ॥ ८
ततस्तु कुटिला क्रुद्धा ब्रह्माणं प्राह नारद ।
तथा यतिष्ये भगवन् यथा शार्वं सुदुर्घटम् ॥ ९
धारयिष्याम्यहं तेजः तथैव श्रुणु सत्तम ।
तपसाऽहं सुतप्तेन समाराध्य जनार्दनम् ॥ १०
यथा हरस्य मूर्धानं नमयिष्ये पितामह ।
तथा देव करिष्यामि सत्यं सत्यं मयोदितम् ॥ ११
ततः पितामहः क्रुद्धः कुटिलां प्राह दारुणाम् ।
भगवानादिकृद्ब्रह्मा सर्वेशोऽपि महामुने ॥ १२
यस्मान्मद्वचनं पापे न क्षान्तं कुटिले त्वया ।
तस्मान्मच्छापनिर्दग्धा सर्वास्त्वापो भविष्यसि ॥ १३
इत्येवं ब्रह्मणा शप्ता हिमवद्दुहिता मुने ।
आपोमयी ब्रह्मलोकं प्लावयामास वेगिनी ॥ १४
तामुद्धतजलां दृष्ट्वा प्रबबन्ध पितामहः ।
ऋक्सामाथर्वयजुर्भिः बन्धनैः सर्वतो दृढम् ॥ १५
सा बद्धा संस्थिता ब्रह्मन् तत्रैव गिरिकन्यका ।
आपोमयी प्लावयन्ती ब्रह्मणो विमलालयम् ॥ १६
या सा रागवती नाम साऽपि नीता सुरैर्दिवम् ।
ब्रह्मणे तां निवेद्यैव तामप्याह प्रजापतिः ॥ १७
साऽपि क्रुद्धाऽब्रवीच्चैनं तथा तप्स्ये महत्तपः ।

यथा मन्नामसंयुक्तो महिषघ्नो भविष्यति ॥ १८
तां शशापाऽथ स ब्रह्मा सन्ध्यारागो भविष्यति ।
या मद्वाक्यं अलङ्घ्यं वै सुरैः लङ्घ्यसे बलात् ॥ १९
साऽपि जाता मुनिश्रेष्ठा सन्ध्यारागवती ततः ।
प्रतीच्छन् कृत्तिकाभागे शैलेय्या विग्रहं दृढम् ॥ २०
ततो गते कन्यके द्वे ज्ञात्वा मेना तपस्विनी ।
तपसो वारयामास उमेत्येवाब्रवीच्च सा ॥ २१
तदेव माता नाम्नाऽस्याः चक्रे पितृश्रुता शुभा ।
उमेत्येव हि कन्यायाः सा जगाम तपोवनम ॥ २२
ततः सा मनसा देवं शूलपाणिं वृषध्वजम् ।
रुद्रं चेतसि संधार्य तपस्तेपे सुदुष्करम् ॥ २३
ततो ब्रह्माऽब्रवीद्देवान् गच्छध्वं हिमवत्सुताम् ।
इहानयध्वं तत्कालं तपस्यन्तीं हिमालये ॥ २४
ततो देवा समाजग्मुः ददृशुः शैलनन्दिनीम् ।
तेजसा विजिताः तस्याः न शेकुरुपसर्पितुम् ॥ २५
इन्द्रो मरुद्गणैस्सार्धं निर्धूतस्तेजसा तथा ।
ब्रह्मणोधिकतेजोस्याः विनिवेद्य प्रतिष्ठितः ॥ २६
ततो ब्रह्माऽब्रवीद्देवान् ध्रुवं शङ्करवल्लभा ।
यूयं सतेजसो नूनं विक्षिप्तास्तु हतप्रभाः ॥ २७
तस्माद्व्रजध्वं स्वं स्वं हि स्थानं भो विगतज्वराः ।

सतारकं हि महिषं विदध्वं निहतं रणे ॥ २८

इत्येवमुक्ता देवेन ब्रह्मणा सेन्द्रकाः सुराः ।
जग्मुः स्वान्येव धिष्ण्यानि सद्यो वै विगतज्वराः ॥ २९

उमामपि तपस्यन्तीं हिमवान् पर्वतेश्वरः ।
निवर्त्य तपसस्तस्मात् सदारोह्यनयद्गृहान् ॥ ३०

देवोप्याश्रित्य तद्रौद्रं व्रतं नाम निराश्रयम् ।
विचचार महाशैलान् मेरुप्राग्र्यान्महामतिः ॥ ३१

स कदाचिन्महाशैलं हिमवन्तं समागतः ।
तेनार्चितः श्रद्धयाऽसौ तां रात्रिं अवसद्धरः ॥ ३२

द्वितीयेऽह्नि गिरीशेन महादेवो निमन्त्रितः ।
इहैव तिष्ठस्व विभो तपस्साधनकारणात् ॥ ३३

इत्येवमुक्तो गिरिणा हरश्चक्रे मतिं च ताम् ।
तथा चाश्रममाश्रित्य त्यक्त्वासौ स्वं निराश्रमम् ॥ ३४

वसतोप्याश्रमे तस्य देवदेवस्य शूलिनः ।
तं देशामगमत्काली गिरिराजसुता शुभा ॥ ३५

तामागतां हरो दृष्ट्वा भूयो जातां प्रियां सतीम् ।
स्वागतेनाभिसंपूज्य तस्थौ योगरतो हरः ॥ ३६

साचाभ्येत्य वरारोहा कृताञ्जलिपरिग्रहा ।
ववन्दे चरणौ शैले सखिभिस्सह भामिनी ॥ ३७

ततस्तु सुचिराच्छर्वः समीक्ष्य गिरिकन्यकाम् ।

न युक्तं चैवमुक्त्वाथ सगणोन्तर्दधे ततः ॥ ३८

साऽपि शर्ववचो रौद्रं श्रुत्वा ज्ञानसमन्विता ।
अन्तर्दुःखेन दह्यन्ती पितरं प्राह पार्वती ॥ ३९

तात यास्य महारण्ये तप्तुं घोरं महत्तपः ।
आराधनाय देवस्य शङ्करस्य पिनाकिनः ॥ ४०

तथेत्युक्तं वचः पित्रा पादे तस्यैव विस्तृते ।
ललिताख्या तपस्तेपे हराराधनकाम्यया ॥ ४१

तस्याः सख्यस्तदा देव्याः परिचर्यां तु कुर्वते ।
समित्कुशफलंचापि मूलाहरणमादितः ॥ ४२

विनोदनार्थं पार्वत्याः मृन्मयः शूलधृग्वरः ।
कृतश्च तेजोयुक्तश्च रुद्रो मेऽस्त्विति साऽब्रवीत् ॥ ४३

पूजां करोति तस्यैव तं पश्यन्ती मुहुर्मुहुः ।
ततोऽस्यास्तुष्टिमगमच्छ्रद्धया त्रिपुरान्तकृत् ॥ ४४

वटुरूपं समाधाय आषाढी मुञ्जमेखली ।
यज्ञोपवीतींछत्री च मृगाजिनधरस्तथा ॥ ४५

कमण्डलुव्यग्रकरो भस्मारुषितविग्रहः ।
प्रत्याश्रमं पर्यटन् स तं काल्यांश्रममागतः ॥ ४६

तमुत्थाय तदा काली सखीभिस्सहनारद ।
पूजयित्वा यथान्यायंपर्यपृच्छदिदं ततः ॥ ४७

कस्मादागम्यते भिक्षो कुत्र स्थाने तवाश्रमः ।

कुत स्त्वं परिगन्तासि मम शीघ्रं निवेदय ॥ ४८

भिक्षुरुवाच—

ममाश्रमपदं बाले वाराणस्यां शुचिव्रते ।
अथैतत्तीर्थयात्रायां गमिष्यामि पृथूदकम् ॥ ४९

देव्युवाच—

किं पुण्यं तव विप्रेन्द्र यद्यसि त्वं पृथूदके ।
पथि स्नाने च फलं केषु किं लब्धवानसि ॥ ५०

भिक्षुरुवाच—

मया स्नानं प्रयागे तु कृतं प्रथममेव हि ।
ततोऽथ तीर्थे कुब्जाम्रे जायन्ते चण्डिकेश्वरे ॥ ५१

बन्धुवृन्दे च कर्कन्धे तीर्थे कनखले तथा ।
सरस्वत्यां अग्निकुण्डे भद्रायां तु त्रिविष्टपे ॥ ५२

कौजटे कोटितीर्थे तक्षके च कृशोदरि ।
निष्कामेन कृतं स्नानं ततोऽभ्यगां तवाश्रमम् ॥ ५३

इहस्थां त्वां समाभाष्य गमिष्यामि पृथूदकम् ।
पृच्छामि यदहं त्वां वै तत्र न क्रोध्दुमर्हसि ॥ ५४

अहं यस्तपसात्मानं शोषयामि कृशोदरि ।
बाल्योऽपि संयततनुः ततः श्लाघ्यं द्विजन्मनाम् ॥ ५५

किमर्थं भवती रौद्रं प्रथमे वयसि स्थिता ।
तपस्समाश्रिता भीरु संशयः प्रतिभाति मे ॥ ५६

प्रथमे वयसि स्त्रीणां सह भर्त्रा विलासिनि ।
सुभोगाभोगिता कालाः व्रजन्ति स्थिरयौवने ॥ ५७

तपसा वाञ्छयन्तीह गिरिजे सचराचराः ।
रूपाभिजनमैश्वर्यं तच्च ते वर्तते बहु ॥ ५८

तत्किमर्थं अपास्यैतान् अलङ्कारान् जटा धृताः ।
चीनांशुकं परित्यज्य किं त्वं वल्कलधारिणी ॥ ५९

ततस्तु तपसा वृद्धा देव्याः सोमप्रभा सखी ।
भिक्षवे कथयामास यथावत्सा हि नारद ॥ ६०

सोमप्रभोवाच—

तपश्चर्या द्विजश्रेष्ठ पार्वत्या येन हेतुना ।
तं श्रृणुष्व महाकाली हरं भर्तारं इच्छति ॥ ६१

सोमप्रभाया वचनं श्रुत्वा संकम्प्य वै शिरः ।
विहस्य च महाहासं भिक्षुराह वचस्त्विदम् ॥ ६२

भिक्षुरुवाच—

वदामि ते पार्वति वाक्यमेवं केन प्रदत्ता तव बुद्धिरेषा ।
कथं करः पल्लवकोमलस्ते समेष्यते शार्वकरं ससर्पम् ॥

तथा दुकूलाम्बरशालिनी त्वं मृगारिचर्माभिवृतस्तु रुद्रः ।
त्वं चन्दनाक्ता स च भस्मभूषितो न युक्तरूपं
प्रतिभाति मे त्विदम् ॥ ६४

एवं वादिनि विप्रेन्द्र पार्वती भिक्षुमब्रवीत् ।

मामैवं वद भिक्षो त्वं हरस्सर्वगुणाधिकः ॥ ६५
शिवोवाप्यथ वा भीमः सधनो निर्धनोथवा ।
अलङ्कृतो वा देवेशः तथावाप्यनलङ्कृतः ॥ ६६
यादृशस्तादृशोवापि स मे नाथो भविष्यति ।
निवार्यतां अयं भिक्षुः विवक्षुस्फुरिताधरः ॥ ६७
न तथा निन्दकः पापी यथा श्रोता शशिप्रभे ।
इत्येवमुक्त्वा वरदा समुत्थातुं अथैच्छत ॥ ६८
ततोऽत्यजत् भिक्षुरूपं स्वरूपस्थोऽभवच्छिवः ।
भूत्वोवाच प्रिये गच्छ स्वमेव भवनं पितुः ॥ ६९
तवार्थाय प्रहेष्यामि महर्षीन् हिमवद्गृहे ।
यच्चेह रुद्रमीहन्त्या मृन्मयश्चेश्वरः कृतः ॥ ७०
असौ भद्रेश्वरेत्येवं ख्यातो लोके भविष्यति ।
देवदानवगन्धर्वाः यक्षाः किंपुरुषोरगाः ॥ ७१
पूजयिष्यन्ति सततं मानवाश्च शुभेप्सवः ।
इत्येवमुक्तो देवेन गिरिराजसुता मुने ॥ ७२
जगामाम्बरमाविश्य स्वमेव भवनं पितुः ।
शङ्करोऽपि महातेजाः विसृज्य गिरिकन्यकाम् ।
पृथूदकं जगामाऽथ स्नानं चक्रे विधानतः ॥ ७३
ततस्तु देवप्रवरो महेश्वरः पृथूदके स्नानमपास्तकल्मषः ।
कृत्वा सनन्दी सगणस्सवाहनो महागिरिं मन्दरमाजगाम ॥

आयाति त्रिपुरान्तके सहगणैः पर्यायतस्सप्तभिः ।
आरोहत्पुलको बभौ गिरिवरः संहृष्टचित्तः क्षणात् ॥
चक्रे दिव्यफलै र्जलेन शुशिना मूलैश्च कन्दादिभिः ।
पूजां सर्वगणेश्वरैः सह विभोरद्रिस्त्रिनेत्रस्य ते ॥ ७५
ततः संपूजितो रुद्रः शैलेन प्रीतिमानभूत् ।
सस्मार च महर्षींस्तु अरुन्धत्या समन्ततः ॥ ७६
संस्मृतास्तु ऋषयः शङ्करेण महात्मनः ।
समाजग्मुर्महाशैलं मन्दरं चारुकन्दरम् ॥ ७७
तानागतान् समीक्ष्यैव देवस्त्रिपुरनाशनः ।
अभ्युत्थायाभिपूज्यैतान् इदं वचनमब्रवीत् ॥ ७८
धन्योयं पर्वतः श्रेष्ठः श्लाघ्यः पूज्यश्च देवतैः ।
धूतपापस्तथा जातो भवतां पादपङ्कजैः ॥ ७९
स्थीयतां विस्तृते रम्ये गिरिप्रस्थे समे शुभे ।
शिलासु पद्मवर्णासु श्लक्ष्णासु च मृदुष्वथ ॥ ८०
इत्येवमुक्ता देवेन शङ्करेण महर्षयः ।
समवेत्य त्वरुन्धत्या विविशुः शैलसानुनि ॥ ८१
उपविष्टेषु ऋषिषु नन्दी देवगणाग्रणीः ।
अर्घ्यादिभिः समभ्यर्च्य स्थितः प्रयतमानसः ॥ ८२
ततोऽब्रवीत् सुरपतिः धर्म्यं वाक्यं हितं सुरान् ।
आत्मनो यशसो वृद्ध्यै सप्तर्षीन् विनयान्वितान् ॥ ८३

हर: उवाच: —

कश्यपाऽत्रे वारुणेय गाधेय शृणु गौतम ।
भरद्वाज शृणुष्व त्वं अङ्गिरस्त्वं शृणुष्व च ॥　८४

ममाऽऽसीद्दक्षतनुजा प्रिया सा दक्षकोपतः ।
उत्ससर्ज सती प्राणान् योगं दृष्ट्वा पुरा किल ॥　८५

साऽद्य भूयः समुद्भूता शैलराजसुता उमा ।
तां मदर्थाय शैलेन्द्रो याच्यतां द्विजसत्ताः ॥　८६

सप्तर्षयश्चैवमुक्ताः बाढमित्यब्रुवन्वचः ।
ॐ नमः शङ्करायेति प्रोक्त्वा जग्मुर्हिमालयम् ॥　८७

ततोप्यरुन्धतीं शर्वः प्राह गच्छस्व सुन्दरि ।
पुरन्ध्र्यो हि पुरन्ध्रीणां गतिं धर्मस्य वै विदुः ॥　८८

इत्येवमुक्त्वा दुर्लङ्घ्यं लोकाचारा त्वरुन्धती ।
नमस्ते रुद्र इत्युक्त्वा जगाम पतिना सह ॥　८९

गत्वा हिमाद्रिशिखरं ओषधिप्रस्थमेव च ।
ददृशुः शैलराजस्य पुरन्दरपुरीमिव ॥　९०

ततस्संपूज्यमानास्ते शैलयोषिद्भिरादरात् ।
सुनाभादिभिरव्यग्रैः पूज्यमाना तु पार्वती ॥　९१

गन्धर्वैः किन्नरैर्यक्षैः तथान्यैस्तत्पुरस्सरैः ।
विविशुः भुवनं रम्यं हिमाद्रेर्हाटकोज्ज्वलम् ॥　९२

ततस्सर्वे महात्मानस्तपसा धौतकल्मषाः ।

समासाद्य महाद्वारं संतस्थुः द्वास्थकारणात् ॥ ९३

ततस्तु त्वरितोभ्यागाद्वास्थोद्रिर्गन्धमादनः ।
धारयन् वै करे दण्डं पद्मरागमयं महत् ॥ ९४

ततस्तमूचुर्मुनयः गत्वा शैलपतिं शुभम् ।
निवेदयाऽस्मान् संप्राप्तान् महत्कार्यार्थिनो वयम् ॥ ९५

इत्येवमुक्तो शैलेन्द्रं ऋषिभिर्गन्धमादनः ।
जगाम तत्र यत्रास्ते शैलराजोऽद्रिभिर्वृतः ॥ ९६

निषण्णो भुवि जानुभ्यां दत्वा हस्तौ मुखे गिरिः ।
दण्डं निक्षिप्य कक्षायां इदं वचनमब्रवीत् ॥ ९७

गन्धमादनः उवाच—

इमे हि ऋषयः प्राप्ताः शैलराज तवाजिर ।
द्वारे स्थिताः कार्यिणः ते तव दर्शनलालसाः ॥ ९८

पुलस्त्य उवाच—

द्वास्थवाक्यं समाकर्ण्य समुत्थायाचलेश्वरः ।
स्वयमभ्यागमद् द्वारि समादायार्ध्यमुत्तमम् ॥ ९९

तानच्यार्ध्यादिना शैलः समानीय सभातलम् ।
उवाच वाक्यं वाक्यज्ञः कृतासन परिग्रहान् ॥ १००

हिमवानुवाच—

अनभ्रवृष्टिः किमयं उताहो अकुसुमं फलम् ।
अप्रतर्क्यमचिन्त्यं च भवदागमनं त्विदम् ॥ १०१

अद्य प्रभृति धन्योऽस्मि शैलराजोस्मि सत्तमाः ।
संशुद्धदेहोस्म्यद्यैव यद्भवन्तो ममाजिरम् ॥ १०२

असत्संसर्गसंशुद्धं कृतवन्तो द्विजोत्तमाः ।
दृष्टिपूतं पदाक्रान्तं तीर्थं सारस्वतं तथा ॥ १०३

दासोऽहं भवतां विप्राः कृतपुण्यश्च सांप्रतम् ।
येनार्थिनो हिते यूयं तन्मानुज्ञातुमर्हथ ॥ १०४

सदारोऽहं समं पुत्रैः भृत्येन प्रभुरव्ययः ।
किं करोमि स्थितो युष्मदाज्ञाकारी तदुच्यताम् ॥ १०५

पुलस्त्य उवाच—

शैलराजवचः श्रुत्वा ऋषयः संशितव्रताः ।
ऊचुरङ्गिरसं वृद्धं कार्यमद्रौ निवेदय ॥ १०६

इत्येवं चोदितः सर्वैः ऋषिभिः कश्यपादिभिः ।
प्रत्युवाच परं वाक्यं गिरिराजं तमङ्गिराः ॥ १०७

अङ्गिरा उवाच—

श्रूयतां पर्वतश्रेष्ठ येन कार्येण वै वयम् ।
समागतास्त्वत्सदनं अरुन्धत्या समं गिरे ॥ १०८

योऽसौ महात्मा सर्वात्मा दक्षयज्ञक्षयंकरः ।
शङ्करः शूलधृक् शर्वः त्रिनेत्रो वृषवाहनः ॥ १०९

जीमूतकेतुः शत्रुघ्नः यज्ञभोक्ता स्वयं प्रभुः ।
यमीश्वरं वदन्त्येके शिवं स्थाणुवरं हरम् ॥ ११०

भीममुग्रं महेशानं महादेवं पशोः पतिम् ।
वयं तेन प्रेषितास्मः त्वत्सकाशं गिरीश्वर ॥ १११

इयं या त्वत्सुता काली सर्वलोकेषु सुन्दरी ।
तां प्रार्थयति देवेशः तां भवान्दातुमर्हति ॥ ११२

स एव हि पिता धन्यः यस्य पुत्री पतिं शुभम् ।
रुपाभिजनसंपत्या प्राप्नोति गिरिसत्तम ॥ ११३

यावन्तो जङ्गमागम्या भूताः शैल चतुर्विधाः ।
तेषां मातात्वियं देवी यतः प्रोक्तः पिता हरः ॥ ११४

प्रणम्य शङ्करं देवाः प्रणमन्तु सुतां तव ।
कुरुष्व पादं शत्रूणां मूर्ध्नि भस्मपरिप्लुतम् ॥ ११५

याचितारो वयं शर्वो वरो दातात्वमप्युमा ।
वधूस्सर्वजगन्माता कुरु यच्छ्रेयसे तव ॥ ११६

पुलस्त्य उवाच—

तद्वचोङ्गिरसः श्रुत्वा काली तस्थावधोमुखी ।
हर्षमागम्य सहसा पुनर्दैन्यमुपागता ॥ ११७

ततः शैलपतिः प्रर्वतं गन्धमादनम् ।
गच्छ शैलानुपामन्त्र्य सर्वानाहर्तुमर्हसि ॥ ११८

ततः शीघ्रतरः शैलो गृहाद्गृहमगाज्जवी ।
मेर्वाद्यान् पर्वतश्रेष्ठान् आजुहाव समन्ततः ॥ ११९

तेप्याजग्मुस्त्वरावन्तः कार्यं मत्वा महत्तदा ।
विविशुर्विस्मयाविष्टाः सौवर्णेष्वासनेषु च ॥ १२०
उदयो हेमकूटश्च रम्यको मन्दरस्तथा ।
उद्दालको वाहणश्च वराहो गरुडासनः ॥ १२१
शुक्तिमान्वेगसानुश्च दृढशृङ्गोपि शृङ्गवान् ।
चित्रकूटस्त्रिकूटश्च तथान्ये क्षुद्रपर्वताः ॥ १२२
उपविष्टाः सभायां वै प्रणिपत्य ऋषींश्च तान् ।
ततो गिरीशः स्वां भार्यां मेनामाहूतवान् स्वयम् ॥ १२३
समागच्छतु कल्याणी समं पुत्रेण भामिनी ।
साऽभिवंद्य ऋषीणां च चरणांश्च तपस्विनी ॥ १२४
सर्वान् ज्ञातीन्समाभाष्य विवेश ससुता तदा ।
ततोद्रिषु महाशैल उपविष्टेषु नारद ॥ १२५
उवाच वाक्यं वाक्यज्ञः सर्वानाभाष्य सुस्वरम् ।

हिमवानुवाच—

इमे सप्तर्षयः पुण्याः याचितारः सुतां मम ॥ १२६
महेश्वरार्थं कन्यां तु तच्चावेद्य भवत्सु वै ।
तद्बदध्वं यथान्यायं ज्ञातयो यूयमेव मे ।
नोल्लंघ्य युष्मान् दास्यामि तत्क्षमं वक्तुमर्हथ ॥ १२७

पुलस्त्य उवाच—

हिमवद्वचनं श्रुत्वा मेर्वाद्याः स्थावरोत्तमाः

सर्व एवाब्रुवन्वाक्यं स्थितास्तेष्वासनेषु ते ॥ १२८

याचितारश्च मुनयः वरस्त्रिपुरहा हरः ।
दीयतां शैल कालीयं जामाताभिमतो हि नः ॥ १२९

मेनाऽथ प्राह भर्तारं शृणु शैलेन्द्र मे वचः ।
पितृभिः तनया मह्यं दत्तानेनैव हेतुना ॥ १३०

यः तस्यां भूतपतिना पुत्रो दत्तो भविष्यति ।
स हनिष्यति दैत्येन्द्रं महिषं तारकं तथा ॥ १३१

इत्येवं मेनया प्रोक्तः शैलशैलेश्वरः सुताम् ।
प्रोवाच पुत्रि दत्तासि शिवाय त्वं मयाऽधुना ॥ १३२

ऋषीनुवाच कालीयं मम पुत्री तपोधनाः ।
प्रणामं शङ्करवधूः भक्तिनम्रा करोति वै ॥ १३३

ततोप्यरुन्धती कालीमङ्कमारोप्य चाटुकैः ।
विलज्जमानामाश्वास्य हरनामोचितैः शुभैः ॥ १३४

ततः सप्तर्षयः प्रोचुः शैलराज निशामय ।
जामित्रगुणसंयुक्तां तिथिं पुण्यां समङ्गलाम् ॥ १३५

उत्तराफाल्गुनीयोगं तृतीयेऽह्नि हिमांशुमान् ।
गमिष्यति च तत्रोक्तो मूहूर्तो मैत्रनामकः ॥ १३६

तस्यां तिथौ हरः पाणिं ग्रहीष्यति समन्त्रकम् ।
तव पुत्र्या वयं यामः तदनुज्ञातुमर्हसि ॥ १३७

ततः संपूज्य विधिना फलमूलादिभिः शुभैः ।

विसर्जयामास शनैः शैलराड् ऋषिपुङ्गवान् ॥ १३८

तेप्याजग्मुर्महावेगात् आक्रम्य महदालयम् ।
आसाद्य मन्दरगिरिं भूयोऽपश्यन्त शङ्करम् ॥ १३९

प्रणम्योचुर्महेशानं भवान्भर्ताद्रिजा वधूः ।
सब्रह्मकास्त्रयो लोका द्रक्ष्यन्ति घनवाहनम् ॥ १४०

ततो महेश्वरः प्रीतः ऋषीन्सर्वाननुक्रमात् ।
पूजयामास विधिना अरुन्धत्या समं हरः ॥ १४१

ततः संपूजिता जग्मुः सुराणां मन्त्रणाय ते ।
तेऽथाजग्मुर्हरं द्रष्टुं ब्रह्मविष्ण्वद्रिभास्कराः ॥ १४२

ततस्समभ्येत्य महेश्वरस्य कृतप्रणामा विविशुः महर्षे ।
सस्मार नन्दिप्रमुखांश्च सर्वान् अभ्येत्य ते
वंद्य हरं निषण्णाः ॥ १४३

देवैर्गणैश्चापि वृतोगणेशः संशोभते मुक्तजटाग्रभारः ।
यथा वने सर्ज्जकदम्बमध्ये प्ररोहमूलोऽथ वनस्पतिर्वा ॥

समागतान्सुरान्दृष्ट्वा नन्दिराख्यातवान्विभो ।
अथोत्थाय हरिं भक्त्या परिष्वज्य न्यपीडयत् ॥

ब्रह्माणं शिरसा नत्वा समाभाष्य शतक्रतुम् ।
आलोकयान्यान् सुरगणान् संभावयत्स शङ्करः ॥ १४६

गणाश्च जय देवीति वीरभद्र पुरोगमाः ।
शैवाः पाशुपताद्याश्च विविशुर्मन्दराचलम् ॥ १४७

ततस्तस्मान्महाशैलं कैलासं सह देवतैः ।
जगाम भगवान् शर्वः कर्तुं वैवाहिकं विधिम् ॥ १४८

ततस्तस्मिन्महाशैले देवमाता दितिः शुभा ।
सुरभिः सुरमा चान्याः चक्रुर्मण्डनमाकुलाः ॥ १४९

महास्थिशेखरी चारुरोचनातिलको हरः ।
सिंहाजिनीचातिनीलभुजङ्गकृतकुण्डलः ॥ १५०

महाहिरत्नवलय हारकेयूरनूपुरः ।
समुन्नतजटाभारो वृषभस्थो विराजते ॥ १५१

तस्याग्रतो गणाः स्वैः स्वैरारूढा यान्ति वाहनैः ।
देवाश्च पृष्ठतो जग्मुः हुताशन पुरोगमाः ॥ १५२

वैनतेयं समारूढः सह लक्ष्म्या जनार्दनः ।
प्रयाति देवपार्श्वस्थो हंसेन च पितामहः ॥ १५३

गजाधिरूढो देवेन्द्र छत्रं शुक्लपटं विभो ।
धारयामास विततं सहेन्द्राण्या सहस्रधृक् ॥ १५४

यमुना सरितां श्रेष्ठा वालव्यजनमुत्तमम् ।
श्वेतं प्रगृह्य हस्तेन कच्छपे संस्थिता ययौ ॥ १५५

हंसकुन्देन्दु संकाशं वालव्यजनमुत्तमम् ।
सरस्वती सरिच्छ्रेष्ठा गजारूढा समादधे ॥ १५६

ऋतवः षट् समादाय कुसुमं गन्धसंयुतम् ।
पञ्चवर्णं महेशार्थे जग्मुस्ते कामचारिणः ॥ १५७

मत्तमैरावतनिभं गजमारुह्य वेगवान् ।
अनुलेपनमादाय ययौ तत्र पृथूदकः ॥　　१५८

गन्धर्वाः तुंबुरुमुखाः गायन्तो मधुरं स्वरम् ।
अनुजग्मुर्महादेवं वादयन्तश्च किन्नराः ॥　　१५९

नृत्यन्त्यप्सरसश्चैव स्तुवन्तो मुनयश्च तम् ।
गन्धर्वा यान्ति देवेशं त्रिनेत्रं शूलपाणिनम् ॥　१६०

एकादश तथा कोट्यो रुद्राणां तत्र वै ययुः ।
द्वादशैवादितेयानां अष्टौ कोट्यो वसूनपि ॥　　१६१

सप्तषष्ठिस्तथा कोट्यो गणानामृषिसत्तमाः ।
चतुर्विंशत्तदा जग्मुर्गणानामूर्ध्वरेतसाम् ॥　　१६२

असङ्ख्यातानि यूथानि यक्षकिन्नर रक्षसाम् ।
अनुजग्मुर्महेशानं विवाहाय समाकुलाः ॥　　१६३

ततः क्षणेन देवेशः क्ष्माधराधिपतेस्तलम् ।
संप्राप्तश्चागमंच्छैलाः कुञ्जरस्थाः समंततः ॥　　१६४

ततो ननाम भगवान् त्रिणेत्रस्स्थावराधिपम् ।
शैलाः प्रणेमुरीशानं ततोऽसौ मुदितोऽभवत् ॥　१६५

समं सुरैः पार्षदैः च विवेश वृषकेतनः ।
नन्दिना दर्शिते मार्गे शैलराजपुरं महत् ॥　　१६६

जीमूतकेतुरायातः इत्येवं नगरस्त्रियः ।
निजकर्म परित्यज्य दर्शने चादृताभवन् ॥　　१६७

माल्यदाम समादाय करेणैकेन भामिनी ।
केशपाशं द्वितीयेन शङ्कराभिमुखीगताः ॥ १६८

अन्यालक्तकरागाढ्यं पादं कृत्वाकुलेक्षणा ।
अनासक्तकमेकं हि हरं द्रष्टुम् उपागता ॥ १६९

एकनाक्ष्णाऽञ्जितेनैव श्रुत्वा भीममुपागमत् ।
सांजनां च प्रगृह्यान्या शलाकां सुष्ठु धावति ॥ १७०

अन्या सरशनं वासः पाणिनादाय सुन्दरी ।
उन्मत्तेवागान्नग्ना हरदर्शनलालसा ॥ १७१

अन्यातिक्रान्तमीशानं श्रुत्वा स्तनभरालसा ।
अनिन्दितकुचौ बाला यौवनं स्वं कृशोदरी ॥ १७२

इत्थं सनागरस्त्रीणां क्षोभं संजनयन्हरः ।
जगाम वृषमारूढो दिव्यं श्वशुरमंदिरम् ॥ १७३

ततः प्रविष्टं प्रसमीक्ष्य शंभुं शैलेन्द्रवेश्मन्यबला ब्रुवन्ति ।
स्थाने तपो दुश्चरमम्बिकायाः चीर्णं महानेष सुरस्तु शंभुः ॥
स एष येनाङ्गमनङ्गतां कृतं कन्दर्पनाम्नः कुसुमायुधस्य ।
क्रतोः क्षयी दक्षविनाशकर्त्ता भगाक्षिहा शूलधरः पिनाकी ॥
नमो नमः शङ्करशूलपाणे मृगारिचर्माम्बरकालशत्रो ।
महाहिहाराङ्कितकुण्डलाय नमो नमः पार्वतीवल्लभाय ॥
इत्थं संस्तूयमानसुरपतिविधृतेनातपत्रेण शम्भुः
सिद्धैर्वन्द्यः सपक्षैरहिकृतवलयः चारुभस्मोपलिप्तः ।

अग्रस्थेनाग्रजेन प्रमदितमनसा विष्णुना चानुगेन
वैवाहीं मङ्गलाढ्यां हुतवहसहितां आरुरोहाथ वेदिम् ॥

आयाति त्रिपुरान्तके सहचरैः सार्धं च सप्तर्षिभिः
व्यग्रोऽभूद्गिरिराजवेश्मनि जनः कन्यासमालङ्कृतौ ।
व्याकुल्यं समुपागताश्च गिरयः पूजादिना देवताः
प्रायो व्याकुलिता भवन्ति सुहृदः कन्याविवाहोत्सुकाः ॥

प्रसाध्य देवीं गिरिजां ततस्त्रियः
दुकूलशुक्लाभिवृताङ्गयष्टिकाम् ।
भ्रात्रा सुनाभेन तदोत्सवे कृता
सा शङ्कराभ्याशमथोपपादिता ॥ १७९

ततःशुभे हर्म्यतले हिरण्मये
स्थिता सुराः शङ्करकालिचेष्टितम् ।
पश्यन्ति देवाऽपि समं कृशाङ्ग्या
लोकानुजुष्टं पदमाससाद ॥ १८०

यत्र क्रीडाविचित्राः सकुसुमतरवो वारिणो बिन्दुपातैः ।
गंधाढ्यैः गंधचूर्णैः प्रविरलमवनौ गुण्ठितौ गुण्डिकायाम् ॥

मुक्तादामैः प्रकामं, हरगिरितनयाक्रीडनार्थं तदाभ्रन् ।
पश्चात्सिन्दूरपुञ्जैरविरतवितत्तैश्चक्रतुः क्ष्मां सुरक्ताम् ॥ १८१

एवं क्रीडां हरः कृत्वा समं च गिरिकन्यया ।
आगच्छद्दक्षिणां वेदिं ऋषिभिः सेवितां दृढाम् ॥ १८२

अथाजगाम हिमवान् शुक्लाम्बरधरश्शुचिः ।
पवित्रपाणिरादाय मधुपर्कमथाकुलम् ॥ १८३

उपविष्टस्त्रिणेत्रस्तु शाक्रीं दिशमपश्यत ।
सप्तर्षिकांश्च शैलेन्द्रः सूपविष्टो विलोकयन् ॥ १८४

सुखासीनस्य शर्वस्य कृताञ्जलिपुटो गिरिः ।
प्रोवाच वचनं श्रीमान् धर्मसाधनमात्मनः ॥ १८५

हिमवानुवाच—

मत्पुत्रीं भगवन्कालीं पौत्रीं च पुलहाग्रजे ।
पितृणामपि दौहित्रीं प्रतीच्छेमां मयोदिताम् ॥ १८६

पुलस्त्य उवाच—

इत्येवमुक्त्वा शैलेन्द्रो हस्तं हस्तेन योजयन् ।
प्रादात् प्रतीच्छ भगवन् इदं उच्चैरुदीरयन् ॥ १८७

हर उवाच:—

न मेऽस्ति माता न पिता तथैव
न ज्ञातयः वाऽपि च बान्धवाद्याः ।
निराश्रयोहं गिरिश्रृङ्गवासी
सुतां प्रतीच्छामि तवाद्रिराज ॥ १८८

इत्येवमुक्त्वा वरदोऽवपीडयत्करं करेणाद्रिकुमारिकायाः ।
सा चापि संस्पर्शमवाप्य शंभोः परां मुदं लब्धवती सुरर्षे ॥
तथाधिरूढो वरदोऽथ वेदिं सहाद्रिपुत्र्या मधुपर्कमश्नन् ।

दत्वा च लाजान्कलमस्य शुक्लान् ततो विरिंचो
गिरिजामुवाच ह ॥ १९०

कालि पश्येय वदनं रम्यं शशधरप्रभम् ।
समदृष्टिस्थिरा भूत्वा कुरुष्वाग्नेः प्रदक्षिणम् ॥ १९१

कृता लाजाश्च हविषा समं क्षिप्ता हुताशने ।
ततो हराङ्घ्रिर्मालिन्या गृहीतो दायकारणात् ॥ १९२

किं याचसे ते दास्यामि मुञ्चस्वेति हरोऽब्रवीत् ।
मालिनी शङ्करं प्राह मत्सख्या देहि शङ्कर ॥ १९३

सौभाग्यं निजगोत्रीयं ततो मोक्षमवाप्स्यसि ।
अथोवाच महादेवो दत्तं मालिनि मुञ्च माम् ॥ १९४

सौभाग्यं निजगोत्रीयं योस्यास्तं श्रुणु वच्मि ते ।
योऽसौ पीतांबरधरः शङ्खधृङ् मधुसूदनः ॥ १९५

एतदीयं हि सौभाग्यं दत्तं मद्गोत्रमेव हि ।
इत्येवमुक्ते वचने प्रमुमोच वृषध्वजम् ॥ १९६

ततो विवाहे निर्वृत्ते प्रविष्टः कौतुकं हरः ।
रेमे सहोमया रात्रिं प्रभाते पुनरुत्थितः ॥ १९७

ततोद्रिपुत्रीं समवाप्य शंभुः सर्वैः समं भूतगणैश्च हृष्टः ।
संपूजितः पर्वतपार्थिवेन स्वमन्दिरं शीघ्रमुपाजगाम ॥

इति श्री वामनपुराणे गौरीविवाहोनाम त्रिपञ्चाशत्तमोऽध्यायः सम्पूर्णः ॥

---

॥ श्रीः ॥

शुभं अस्तु

# श्री मीनाक्षीकल्याणम्

( हालास्यमाहात्म्यात् उद्धृतम् )

अगस्त्य उवाच—

ब्रह्मविष्ण्वादि देवानामदृश्यस्सोमसुन्दरः ।
स्वांशेन लिङ्गान्निर्गत्य सर्वावयव सुन्दरः ॥ १

तटातकामुदूह्याथ स्वयं पाण्ड्यमहीपतिः ।
देवसुन्दरपाण्ड्योभूत् तां लीलां वर्णयाम्यहम् ॥ २

तटातका कन्यका सा स्वयं सिंहासने स्थिता ।
साम्राज्यलक्ष्मी सौन्दर्यलक्ष्म्याभिन्नेव राजते ॥ ३

नवरत्नविचित्रेण किरीटेन सितेन च ।
छत्रेण चामराभ्यां च पुनरत्यन्त शोभिता ॥ ४

विचारदक्षैस्सचिवैः सततं संवृता सती ।
दुष्टानामपि शिष्टनां शिक्षणं रक्षणं क्रमात् ॥ ५

करोति शास्त्ररीत्या च राज्यभारं दधाति च ।
यौवनं प्राप्य कालेन मात्रा काञ्चनमालया ॥ ६

चिन्तयामास सा कन्या कदा भर्ता भविष्यति ।
कदा विकृतवक्षोजं निमग्नं च भविष्यति ॥ ७

न लभ्यतेऽत्र स्थितया मया चैतदभीप्सितम् ।
दिशां च विजयव्याजात् भ्रान्तिः कार्या मया ध्रुवम् ॥

इति निश्चित्य मनसा रथैश्च तुरगैर्गजैः ।
सेनाभिरतिशूराभिः मीनध्वजयुतं रथम् ॥ ९

मनोवेगसमैरश्वैः चतुर्भिः शुभ्रवर्णकैः ।
शोभितं चाधिरुह्याशु यथा देवो दिवाकरः ॥ १०

मेरुं प्रदक्षिणीकृत्य तमस्संहरति प्रभुः ।
तथा सर्वाणि देशानि दुर्गमानि वनादिभिः ॥ ११

जित्वा विंशोत्तरशत वर्णयुक्तं च काञ्चनम् ।
विविधानि च रत्नानि विचित्रांस्तुरगान् गजान् ॥ १२

अंबराणि विचित्राणि भूषणान्यद्भुतानि च ।
गन्धद्रव्याणि दिव्यानि वस्तूनि रसवन्ति च ॥ १३

तत्तद्देशाधिपैर्भीत्या प्रदत्तानि महान्ति च ।
उपायनानि सर्वाणि लब्ध्वा कन्या तटातका ॥ १४

चक्रवालमहाशैलं कृत्वा प्राकारमद्भुतम् ।
स्वराज्यस्य धनैः धान्यैः समृद्धस्य सुवस्तुभिः ॥ १५

लोकपालपदं जेतुमुत्सुका दिवमाक्रमात् ।
श्रीमत्पञ्चाक्षरं मन्त्रं समुच्चार्य चतुर्विधम् ॥ १६

बलं विलोक्य तेभ्यश्च ददौ दिव्यं पराक्रमम् ।
दिव्यदृष्टिं खेचरत्वमपि देवी तटातका ॥ १७

महेन्द्रस्य पुरीं पूर्वं परिवृत्त्यामरावतीम् ।
पराभवं देवतानां कारयामास कन्यका ॥ १८

त्यक्त्वा वज्रं वाहनञ्च नत्वा शक्रेण भीरुणा ।
समर्पितं कल्पवृक्षं कामधेनुं प्रगृह्य च ॥ १९

चिन्तामणिकृतां मालाममराणां च दुर्लभाम् ।
पश्चादग्नेः पुरीं जित्वा प्रदत्तानि हविर्भुजा ॥ २०

दिव्यवस्त्राणि सर्वाणि महादीप्तियुतानि च ।
वाहनानि च रत्नानि काञ्चनानि बहूनि च ॥ २१

गृह्यानुगृह्यज्वलनं धर्मराजपुरीमथ ।
पराक्रमेण जित्वा तं महाभोगाचितानि च ॥ २२

नीलकौशेय कस्तूरीं नीलरत्नादिकानि च ।
अनर्घाणि प्रगृह्याशु महाधीरा तटातका ॥ २३

निर्ऋतिं लोकपालञ्च वरुणञ्च सदागतिम् ।
कुबेरञ्च क्रमेणैव जित्वा तल्लोकभाञ्जि च ॥ २४

सुवस्तूनि समस्तानि समादाय तटातका ।
ऐशानीं दिशमालोक्य महातेजोवतीं पुरीम् ॥ २५

कैलासमध्यशृङ्गस्थां शिवेनाधिष्ठितां पुरीम् ।
जेतुं तटातका देवीं गजाश्वरथपत्तिभिः ॥ २६

बहिः प्राकारमावृत्य दक्षिणस्थान् गणान् बहून् ।
जित्वा क्रमेण सर्वांश्च प्राकारांश्च क्षणेन च ॥ २७

प्रथमावरणद्वारे स्थितं तं नन्दिकेश्वरम् ।
युद्धेन देवी जयति शिवतुल्यपराक्रमम् ॥ २८

यथा तटातका देवी निर्गता दिग्जयाय च ।
तदानीमेव सहसा हालास्येशो दयानिधिः ॥ २९

स्वयमंशेन निर्गत्य महलिङ्गान्महेश्वरः ।
तप्तकाञ्चनसङ्काशो महातेजस्समन्वितः ॥ ३०

सौन्दर्यसागरोद्भूतः पूर्णचन्द्र निभाननः ।
तटातकातिसौन्दर्यसमानवरवेषवान् ॥ ३१

षोडशाब्दाकृतिः शम्भुः सर्वलक्षण लक्षितः ।
किरीटकुण्डलाद्यैश्च भूषणैस्समलङ्कृतः ॥ ३२

दिव्याम्बरैः दिव्यगन्धैः दिव्यपुष्पैस्सुशोभितः ।
दिव्यं विमानमारुह्य वृषभध्वजचिह्नितम् ॥ ३३

सर्वैरदृश्यमानस्सन् सुन्दरेशः स्वमायया ।
तटातकाया देव्याश्च पाणिग्रहणलोलुपः ॥ ३४

यत्र यत्र च सा कन्या जयार्थं त्वरया ययौ ।
हालास्यनाथो भगवान् तत्र तत्र च गच्छति ॥ ३५

यदा शङ्करसामीप्यं गत्वा स्वस्य पराजयम् ।
अभूद्वक्तुं समुद्युक्तो नन्दीशो गणनायकः ॥ ३६

तदादृश्यत्वमात्मीयं माययोध्दुं विहाय च ।
आविर्भवति देवेशः पुरो नन्दीश्वरस्य च ॥ ३७

क्रन्दन्तो रक्षरक्षेति कैलास तटवासिनः ।
नन्दिना शम्भुपादाब्जे निपेतुर्गणनायकाः ॥ ३८

त्रिस्तनी कन्यका काचित् सायुधास्मान्प्रबाधते ।
भगवन् शरणापन्नान् पाहि सद्यः कृपानिधे ॥ ३९

एवं गणेश्वरैः सर्वैः प्रार्थितः प्राह सुन्दरः ।
तूष्णीं भवन्तः तिष्ठन्तु विजेष्याम्यहमेव ताम् ॥ ४०

इति तान्निर्भयान्कृत्वा तत्पाणिग्रहणोत्सुकः ।
गत्वा तटातकां पश्यन् तस्थौ चापधरो मुदा ॥ ४१

तस्य दर्शनमात्रेण तस्यास्तु विकृतः कुचः ।
अदृश्यतां द्रुतं प्राप मदग्रे विन्ध्यशैलवत् ॥ ४२

निकटस्थास्सर्व एव तां दृष्ट्वा विस्मिताः स्थिताः ।
सार्द्धं गच्छन् महामन्त्री सुमतिश्च पुरातनः ॥ ४३

अयमेवानघे भर्ता तवेत्यकथयद्रहः ।
श्रुत्वा तटातका कन्या विलोक्यात्यन्तसुन्दरम् ॥ ४४

सुन्दरेशं सुन्दरास्यं सुन्दरायतलोचनम ।
सुन्दराभ्यां भुजाभ्यां च सुन्दरावयवैः परैः ॥ ४५

समुज्ज्वलन्तं सर्वज्ञं युवानं चन्द्रशेखरम् ।
अतीव मोहिता भूत्वा शरचापौ करस्थितौ ॥ ४६

विसृज्य च महत्या च लज्जया विनतानना ।
स्वपादाङ्गुष्ठमन्वीक्ष्य मलयध्वज कन्यका ॥ ४७

निश्चला तिष्ठति रथे प्रतिमाचित्रगा यथा ।
तदा नीपवनाधीशः प्राह देवीं तटातकाम् ॥ ४८

अनवद्याखिलं गत्वा स्वीचिकीर्षुरसमागतः ।
तदर्थमानुकूल्यं च कुरु सद्यस्सुकन्यके ॥ ४९

इति देववचःश्रुत्वा राजपुत्री तटातका ।
प्राह प्रगल्भवचना युक्तियुक्तं वचस्तदा ॥ ५०

पाण्ड्यदेशेस्ति मधुरापुरी पुरवरा प्रभो ।
तत्र तिष्ठति मन्माता मलयध्वजभूपतेः ॥ ५१

महिला महता युक्ता तपसा दुष्करेण च ।
तस्याः काञ्चनमालाया आज्ञया मत्करग्रहः ॥ ५२

कर्तव्यो भवता स्वामिन्निति संप्रार्थितस्तया ।
प्राह नीपवनाधीशो मलयध्वजकन्यकाम् ॥ ५३

इतोष्टमे तु दिवसे भविष्यत्सोमवासरे ।
अनुज्ञया च त्वन्मातुः त्वत्पाणिग्रहणं मुदा ॥ ५४

कन्यकेऽहं करिष्यामि गच्छ त्वमविलम्बितम् ।
इत्युक्त्वा प्रेषयित्वा तां कन्यकां स्वपुरीं प्रति ॥ ५५

स्वयमन्तर्दधे शम्भुर्जीवन्मुक्तिपुरेश्वरः ।
विकृतो रेजे विलनयात्सद्भावान्नायकस्य च ॥ ५६

अत्यन्तप्रीतहृदया सहसा मधुरापुरीम् ।
सम्प्राप्य सर्ववृत्तान्तं जनन्यै प्रोच्य कन्यका ॥ ५७

तया सम्प्रीतया सार्धमाहूय सचिवोत्तमान् ।
शासनं प्रेषयामास सद्यःस्सर्वमहीभुजाम् ॥ ५८

प्रपां सर्वत्र विस्तीर्णां लाङ्गलीभिर्महोन्नतैः ।
पूगैस्सालैः कारयित्वा वितानाद्यैरलंकृताम् ॥ ५९

सा तु सम्पादयामास सर्वोपकरणानि च ।
अम्बराणि विचित्राणि भूषणान्यद्भुतानि च ॥ ६०

प्रददौ कल्पवृक्षाणि रत्नानि विविधानि च ।
हिरण्यादीनि सर्वाणि देवेन्द्रेण पुरार्पितः ॥ ६१

पयोदधिघृतक्षौद्र शर्कराप्रमुखं च यत् ।
रसवस्तु च तत्सर्वं कामधेनुः प्रयच्छति ।
चिन्तामणिश्च रत्नानि विविधानि धनानि च ॥ ६२

हिरण्यादीनि सर्वाणि प्रददावक्षयाणि च ।
एवं समस्त सम्भारं कृत्वा सम्भृतमाशु च ॥ ६३

वरागमनमिच्छन्ति मुहूर्तागमनं च सा ।
महाराजकुमारी तां मधुरां तोरणादिभिः ॥ ६४

प्रपाभिः पूर्णकुम्भैश्च प्रतिद्वारमलङ्कृताम् ।
कारयित्वा कदाऽऽयाति वरवेषधरो हरः ॥ ६५

इति सञ्चिन्त्य सा शश्वन्मत्रा काञ्चनमालया ।
महदैश्वर्यसंयुक्तैः मण्टपैः परिमण्डिते ॥ ६६

पताकाभिर्ध्वजैश्चित्रैः मुक्तादामवितानकैः ।
सर्वत्रालङ्कृते हर्म्ये महिते मङ्गळालये ॥ ६७

कन्या पुरेश्वरी कन्या सुखेनास्ते तटातका ।

आयाते सुमुहूर्ते तु कदम्बवन नायकः ॥ ६८

कल्याणोचितसौन्दर्यं वपुषा परिगृह्य च ।
सर्वैरवयवैस्तत्तद्भूषणैरतिसुन्दरैः ॥ ६९

अत्यन्त सुन्दराकारो भगवान्सोमसुन्दरः ।
महावृषभमारुह्य रजताद्रिमिवापरम् ॥ ७०

मकुटेन च दण्डेन नवरत्नमयेन च ।
सुशोभितेन महता कुण्डोदर धृतेन च ॥ ७१

पाण्डरेणातपत्रेण विचित्रेण विराजितः ।
पुरोगतेन महता गणानां प्रवरेण च ॥ ७२

सहस्रवदनैश्शङ्खान् सहस्रश्चैककालतः ।
नानावाद्यध्वनिसमं चित्रस्वनतया तदा ॥ ७३

सहस्रवदनेनापि गणनाथेन संयुतः ।
शूलायुधं स्वकीयञ्च धारयित्वा करेण च ॥ ७४

कुम्भोदरेण बलिना पृष्ठभागगतेन च ।
आविर्बभूव हालास्ये हालास्येशः परात्परः ॥ ७५

शङ्कुकर्ण महाकर्ण घण्टाकर्णमुखैर्गणैः ।
स्थूलकर्णादिभिर्भक्तैः पार्षदैः प्रमथैस्तथा ॥ ७६

शिवेन प्रेषितैर्ज्ञात्वा शिवकल्याणमद्भुतम् ।
श्रिया सार्द्धं महाविष्णुः स्वकीयैश्च गणैरपि ॥ ७७

समायाति महावेगाद्वाहनेन गरुत्मता ।

पितामहोऽपि देव्या च सरस्वत्या समन्वितः ॥ ७८
दिव्यैर्मुनिगणैस्सार्द्धं हंसयानेन चाययौ ।
देवेन्द्रोऽपि शचीदेव्या देवविद्याधरादिभिः ॥ ७९
अप्सरोभिर्लोकपालैः सद्यस्तत्र समाययौ ।
मेरुमुख्या पर्वताश्च सतद्वीपाश्च सागराः ॥ ८०
नद्यो नदाश्च विविधाः स्थावरा जङ्गमानि च ।
वपूंषि धृत्वा चायान्ति सोपहाराश्शिवोत्सवे ॥ ८१
देवादीनां कन्यकाश्च रत्नैस्सम्पूरितानि च ।
कनत्कनकपात्राणि गृहीत्वा करपल्लवैः ॥ ८२
शोभनानि च गायन्त्यः तदा तत्र समाययुः ।
तटातकाशङ्करयोः कल्याणार्थं समागतैः ॥ ८३
मुनिबृन्दै र्देवबृन्दैः निबिडा मधुरापुरी ।
तटातकाया राज्याश्च शासनाद्बहवो नृपाः ॥ ८४
देशान्तरात्समायाताः तदा मकुटवर्धनाः ।
स्वैरमात्यैश्च सहिताः सद्यः प्रापुः वृषध्वजम् ॥ ८५
सर्वे प्रणम्य साष्टाङ्गं सर्वैर्देवैस्समागतैः ।
मधुराया नगर्यास्तु कारयित्वा प्रदक्षिणम् ॥ ८६
ततश्च भवनद्वारमायाते वृषभध्वजे ।
ववर्षुः पुष्पवर्षाणि देवाश्च परया मुदा ॥ ८७
अवतीर्याथ भगवानृषभाद्वृषभध्वजः ।

नन्दिहस्तं समालम्ब्य वेदिकामारुरोह सः ॥ ८८
नवरत्नालङ्कृतायां कल्पितायाञ्च कर्बुरैः ।
पट्टवस्त्रावृतायाञ्च वेदिकायां निवेशिते ॥ ८९
कटकाभ्यां नूपुराभ्यां मण्डिते तत्पदाम्बुजे ।
महता तपसा चार्यैरप्यदृश्ये च कोमले ॥ ९०
संक्षाल्य हिमतोयैश्च सुगन्धैरनुलिप्य च ।
सम्पूज्य नवरत्नैश्च सौवर्णैश्च प्रसूनकैः ॥ ९१
नीराजनानि चित्राणि सुरस्त्रीभिः कृतानि च ।
तदा काञ्चनमाला सा कुङ्कुमोदकमिश्रितान् ॥ ९२
मुक्ताफलाननर्घांश्च गृहीत्वाऽञ्जलिना मुदा ।
देवदेवपदाम्भोजे समर्प्याथ प्रणम्य च ॥ ९३
इति सम्प्रार्थयामास जीवन्मुक्तिपुरेश्वरम ।
भगवन्मम पुत्रीन्तां विधिना प्रतिगृह्य च ॥ ९४
त्वञ्च पाण्ड्येश्वरो भूत्वा रक्ष सर्वां वसुन्धराम् ।
मन्दस्मितेन तद्वाक्यं अङ्गीकृत्य दयानिधिः ॥ ९५
विधि विष्ण्वोः पञ्चशाखौ तदापार्श्वगयोः स्पृशन् ।
अन्तःपुरं प्रविश्याथ महिते मण्टपोत्तमे ॥ ९६
रत्नैर्विचित्रिते हैमे महासिंहासने शुभे ।
उपविश्याप्सरोभिश्च कृतनृत्तमवेक्ष्य च ॥ ९७
संवृतो देवबृन्दैश्च स्तूयमानो मुनीश्वरैः ।

नारदाद्यैर्गीयमानो यदा नेत्रोत्सवो बभौ ॥ ९८

तदा देवी महालक्ष्मी समलङ्कृत्य कन्यकाम् ।
स्नापितां च पुरा देव्या सरस्वत्या तटातकाम् ॥ ९९

पार्श्वे निवेशयामास कदम्बवनवासिनः ।
ब्रह्मा शिवाज्ञया होममकरोत्तस्य सन्निधौ ॥ १००

महाविष्णुर्महीपाला मदंशा इत्युदीर्य च ।
स्वयमेवाकरोद्धारां मात्रा काञ्चनमालया ॥ १०१

उदकेन प्रदत्तेन भृङ्गारान्निस्सृतेन च ।
समन्त्रश्चैव माङ्गल्यं सर्वलोकादिमङ्गलम् ॥ १०२

बबन्ध बन्धुरे कण्ठे कण्ठभूषानिरन्तरे ।
तदा रेजे महादेवी लता कुसुमिता यथा ॥ १०३

लाजहोमञ्च कन्यायाः पदारोपणमश्मनि ।
सप्तधा पदविक्षेपं स्वयमेवाकरोच्छिवः ॥ १०४

अथ कुङ्कुम पङ्केन समालिप्तैश्च मौक्तिकैः ।
मुनिबृन्दैर्देवबृन्दैः कृतेष्वाशीर्वचस्सु च ॥ १०५

कलत्रकन्यापुत्रादिसमन्वितसुपर्वणाम् ।
विष्ण्वादीनाञ्च दिव्यानि सर्वाण्याभरणानि च ॥ १०६

अम्बराण्यप्यनर्घाणि दुर्लभानि वराणि च ।
दत्वा सम्प्रेषयामास मधुरापुरनायकः ॥ १०७

देवः पाण्ड्येश्वरो जातो लोकानां भागधेयतः ।

हालास्यनाथाय महेश्वराय हालाहलालङ्कृतकन्धराय ।
मीनेक्षणायाः पतये शिवाय नमो नमः सुन्दरताण्डवाय ॥

जगदम्ब कदम्बमूलवासे कमलामोदमुखेन्दुमन्दहासे ।
मदमन्दिरचारुदृग्विलासे मयि मीनाक्षि कृपां विधेहि दासे ॥

त्यक्त्वा शम्याकमालां च धृत्वा नीपप्रतानकम् ॥ १०८
कपर्दञ्च तिरोधाय नवरत्नकिरीटवान् ।
चर्माम्बरं परित्यज्य धत्ते दिव्याम्बरं वरम् ॥ १०९
भूषणान्यपि सन्त्यज्य भुजङ्गमकृतानि च ।
सर्वरत्नविचित्राणि दधात्याभरणानि च ॥ ११०
आत्मीयमङ्गरागञ्च भस्मना परिकल्पितम् ।
विहाय गन्धपङ्केनाकरोद्गात्रं सुशोभनम् ॥ १११
वृषभाङ्कध्वजपटं परित्यज्य स्वलीलया ।
स्वयं मीनध्वजो भूत्वा बभौ हालास्यनायकः ॥ ११२
यः कश्चनापि पुरुषो भाग्याच्चेत्पृथिवीपतिः ।
शिवलिङ्गार्चनादेवाचिरेण सुखमेधते । ११३
इति निश्चित्य मनसा पाण्ड्यराट् सोमसुन्दरः ।
मधुरायां मध्यभागे ब्रह्मस्थानेऽतिपावने ॥ ११४
कर्षणादि प्रतिष्ठान्तं कारयित्वा विधानतः ।
पश्चिमाभिमुखं लिङ्गं महाभीष्टप्रदेश्वरम् ॥ ११५
पूजयामास देवेशो राजवेषधरो हरः ।
तटातकायाः कल्याणं यस्मिन्सुदिवसे कृतम् ॥ ११६
इहाभीष्टप्रदश्शम्भुः तद्दिने सुप्रतिष्ठितः ।
आत्मीयमूललिङ्गस्य श्रीहालास्येश्वरस्य च ॥ ११७
नित्यं पूजा च महति महोत्सवमुखानि च ।

नैमित्तिकानि कर्माणि भवन्ति च यथा तथा ॥ ११८

स्वप्रतिष्ठितलिङ्गस्य सद्योभीष्टप्रदायिनः ।

कारयामास कर्माणि महाविभवविस्तरैः ॥ ११९

देवाद्यैः स्थापितानाञ्च लिङ्गानां महिमा महान् ।

शिवस्थापितलिङ्गस्य महिमोत्कर्षमद्भुतम् ॥ १२०

को वा वर्णयितुं शक्तः शक्तस्तु शिव एव सः ।

इहाभीष्टप्रदेशस्य महतीं महिमामिति ॥ १२१

बुध्या नित्यं सेवते यः सर्वाभीष्टमवाप्नुयात् ।

लीला तटातकायाश्च विवाहाख्या च पञ्चमी ॥ १२२

मयाद्य सम्यक्कथिता सर्वसंपत्करी शुभा ।

सकृच्छ्रवणमात्रेण सर्वकल्याणकारिणी ।

सर्वोपद्रवसंहर्त्री श्रोतॄणां पठतां सदा ॥ १२३

इति श्री स्कान्दे महापुराणे अगस्त्यसंहितायां हालास्यमाहात्म्ये
तटातका कल्याणं नाम मीनाक्षीकल्याणापरनामकः
नवमोऽध्यायः सम्पूर्णः ॥

---

॥ श्रीः ॥

शुभं अस्तु

# श्री ललिताकल्याणम्

(ब्रह्माण्डपुराणात् उद्धृतम्)

प्रादुर्बभूव परमं तेजःपुञ्जो ह्यनुत्तमः ।
तन्मध्यतः समुदभूत् चक्राकारमनुत्तमम् ॥ १

तन्मध्ये तु महादेवीं उदयार्कसमप्रभाम् ।
जगदुज्जीवनकरीं ब्रह्मविष्णुशिवात्मिकाम् ॥ २

सौन्दर्यसारसीमां तां आनन्दरससागराम् ।
जपाकुसुमशङ्काशां दाडिमीकुसुमाम्बराम् ॥ ३

सर्वाभरणसंयुक्तां शृङ्गारैकरसालयाम् ।
कृपातरङ्गितापाङ्गनयनालोककौमुदीम् ॥ ४

पाशाङ्कुशेक्षुकोदण्डपञ्चबाणलसत्कराम् ।
तां विलोक्य महादेवीं देवाः सर्वे सवासवाः ॥ ५

प्रणेमुर्मुदितात्मानो भूयो भूयोऽखिलात्मिकाम् ।
तया विलोकिताः सद्यः ते सर्वे विगतज्वराः ॥ ६

संपूर्णाङ्गा दृढतराः वज्रदेहा महाबलाः ।
तुष्टुवुश्च महादेवीं अम्बिकामखिलार्थदाम् ॥ ७

देवाः ऊचुः—

जय देवि जगन्मातः जय देवि परात्परे ।
जय कल्याणनिलये जय कामकलात्मिके ॥ ८

जयकारि च वामाक्षि जय कामाक्षि सुन्दरि ।
जयाखिलसुराराध्ये जय कामेशि मानदे ॥ ९

जय ब्रह्ममये देवि ब्रह्मात्मकरसात्मिके ।
जय नारायणि परे नन्दिताशेषविष्टपे ॥ १०

जय श्रीकण्ठदयिते जय श्रीललितेऽम्बिके ।
जय श्रीविजये देवि विजयश्रीसमृद्धिदे ॥ ११

जातस्य जायमानस्य इष्टापूर्तस्य हेतवे ।
नमस्तस्यै त्रिजगतां पालयित्र्यै परात्परे ॥ १२

कलामुहूर्तकाष्ठाहर्मासर्तुशरदात्मने ।
नमः सहस्रशीर्षायै सहस्रमुखलोचने ॥ १३

नमस्सहस्रहस्ताब्जपादपङ्कजशोभिते ।
अणोरणुतरे देवि महतोऽपि महीयसि ॥ १४

परात्परतरे मातः तेजः तेजीयसामपि ।
अतलं तु भवेत्पादौ वितलं जानुनी तव ॥ १५

रसातलं कटीदेशः कुक्षिस्ते धरणी भवेत् ।
हृदयं तु भुवर्लोकः स्वस्ते मुखमुदाहृतम् ॥ १६

दृशः चन्द्रार्कदहनाः दिशस्ते बाहवोऽम्बिके ।
मरुतस्तु तवोच्छ्वासाः वाचस्ते श्रुतयोऽखिलाः ॥ १७

क्रीडा ते लोकरचना सखा ते चिन्मयः शिवः ।
आहारस्ते सदानन्दः वासस्ते हृदये सताम् ॥ १८

दृश्यादृश्यस्वरूपाणि रूपाणि भुवनानि ते ।
शिरोरुहा घनास्ते तु तारकाः कुसुमानि ते ॥ १९

धर्माद्या बाहवस्ते स्युः अधर्मास्त्वायुधानि ते ।
यमाश्च नियमाश्चैव करपादरुहास्तथा ॥ २०

स्तनौ स्वाहास्वधाकारौ लोकोज्जीवनकारकौ ।
प्राणायामस्तु ते नासा रसना ते सरस्वती ॥ २१

प्रत्याहारस्त्विन्द्रियाणि ध्यानं ते धीस्तु सत्तमा ।
मनस्ते धारणाशक्तिः हृदयं ते समाधिकः ॥ २२

महीरुहा तेऽङ्गरुहाः प्रभातं वसनं तव ।
भूतं भव्यं भविष्यच्च नित्यं च तव विग्रहः ॥ २३

यज्ञरूपा जगद्धात्री विष्वग्रूपा च पाविनी ।
आदौ या तु दया भूता ससर्ज निखिलाः प्रजाः ॥ २४

हृदयस्थाऽपि लोकानां अदृश्या मोहनात्मिका ।
नामरूपविभागं च या करोति स्वलीलया ॥ २५

तान्यधिष्ठाय तिष्ठन्ति तेष्वसक्तार्थकामदा ।
नमस्तस्यै महादेव्यै सर्वशक्त्यै नमो नमः ॥ २६

यदाज्ञया प्रवर्तन्ते वह्निसूर्येन्दुमारुताः ।
पृथिव्यादीनि भूतानि तस्यै देव्यै नमो नमः ॥ २७

या ससर्जादिधातारं सर्गादावादिभूरिदम् ।
दधार स्वयमेवैका तस्यै देव्यै नमो नमः ॥ २८

यया धृता तु धरणी ययाकाशममेयया ।
यस्यामुदेति सविता तस्यै देव्य नमो नमः ॥ २९

यतोदेति जगत्कृत्स्नं यत्र तिष्ठति निर्भरम् ।
यत्रान्तमेति काले च तस्यै देव्यै नमो नमः ॥ ३०

नमो नमस्ते रजसे भवायै नमो नमः सात्विक-संस्थितायै ।
नमो नमस्ते तमसे हरायै नमो नमः निर्गुणतः शिवायै ॥ ३१

नमो नमस्ते जगदेकमात्रे नमो नमस्ते जगदेकपित्रे ।
नमो नमस्तेऽखिलरूपतन्त्रे नमो नमस्तेऽखिलयन्त्ररूपे ॥ ३२

नमो नमो लोकगुरुप्रधाने नमो नमस्तेऽखिलवाग्विभूत्यै ।
नमोऽस्तु लक्ष्म्यै जगदेकतुष्टयै नमो नमः शाम्भवि सर्वशक्त्यै ॥

अनादिमध्यान्तं अपाञ्चभौतिकं ह्यावाङ्मनोगम्यम-
तर्क्यवैभवम् ।
अरूपमद्वन्द्वमदृष्टिगोचरं प्रभावमग्र्यं कथमम्ब वर्णये ॥ ३४

प्रसीद विश्वेश्वरि विश्ववन्दिते प्रसीद विद्येश्वरि वेदरूपिणि ।
प्रसीद मायामयि मन्त्रविग्रहे प्रसीद सर्वेश्वरि सर्वरूपिणि ॥

इति स्तुत्वा महादेवीं देवाः सर्वे सवासवाः ।
भूयो भूयो नमस्कृत्य शरणं जग्मुरञ्जसा ॥ ३६

ततः प्रसन्ना सा देवी प्रणतं वीक्ष्य वासवम् ।
वरेण च्छन्दायामास वरदाऽखिलदेहिनाम् ॥ ३७

इन्द्र उवाच: —

यदि तुष्टाऽसि कल्याणि वयं दैत्येन्द्रपीडिताः ।

दुर्धरं जीवितं देहि त्वां गताः शरणार्थिनः ॥　३८

श्रीदेव्युवाच—

अहमेव विनिर्जित्य भण्डं दैत्यकुलोद्भवम् ।
अचिरात्तव दास्यामि त्रैलोक्यं सचराचरम् ॥　३९

निर्भया मुदिताः सन्तु सर्वे देवगणास्तथा ।
ये स्तोष्यन्ति च मां भक्त्या स्तवेनानेन मानवाः ॥　४०

भाजनं ते भविष्यन्ति धर्मश्रीयशसां सदा ।
विद्याविनयसंपन्ना नीरोगाः दीर्घजीविनः ।
पुत्रमित्रकलत्राढ्याः भवन्तु मदनुग्रहात् ॥　४१

इति लब्धवराः देवाः देवेन्द्रोऽपि महाबलः ।
आमोदं परमं जग्मुः तां विलोक्य मुहुर्मुहुः ॥　४२

हयग्रीव-उवाच—

एतस्मिन्नेव काले तु ब्रह्मा लोकपितामहः ।
आजगामाथ देवेशीं द्रष्टुकामो महर्षिभिः ॥　४३

आजगाम ततो विष्णुरारूढो विनतासुतम् ।
शिवोऽपि वृषभारूढः समायातोऽखिलेश्वरीम् ॥　४४

देवर्षयो नारदाद्याः, समाजग्मुर्महेश्वरीम् ।
आययुस्तां महादेवीं सर्वे चाप्सरसां गणाः ॥　४५

विश्वावसुप्रभृतयः गन्धर्वाश्चैव यक्षकाः ।
ब्रह्मणाऽथ समादिष्टो विश्वकर्मा विशांपतिः ॥　४६

चकार नगरं दिव्यं यथाऽमरपुरं तथा ।
ततो भगवती दुर्गा सर्वमन्त्राधिदेवता ॥ ४७
विद्याधिदेवता श्यामा समाजग्मतुरम्बिकाम् ।
ब्राह्म्याद्या मातरश्चैव स्वस्वभूतगणावृताः ॥ ४८
सिद्धयो ह्यणिमाद्याश्च योगिन्यश्चैव कोटिशः ।
भैरवाः क्षेत्रपालाश्च महाशास्ता गणाग्रणीः ॥ ४९
महागणेश्वरः स्कन्दो बटुको वीरभद्रकः ।
आगत्य ते महदेवीं तुष्टुवुः प्रणतास्तदा ॥ ५०
तत्राऽथ नगरीं रम्यां साट्टप्राकारतोरणाम् ।
गजाश्वरथशालाढ्यां राजवीथिविराजिताम् ॥ ५१
सामन्तानाममात्यानां सैनिकानां द्विजन्मनाम् ।
वेतालदासदासीनां गृहाणि रुचिराणि च ॥ ५२
मध्यं राजगृहं दिव्यं द्वारगोपुरभूषितम् ।
शालाभिर्बहुभिर्युक्तं सभाभिरुपशोभितम् ॥ ५३
सिंहासनसभां चैव नवरत्नमयीं शुभाम् ।
मध्येसिंहासनं दिव्यं चिन्तामणिविनिर्मितम् ॥ ५४
स्वयम्प्रकाशमद्वन्द्वं उदयादित्यसन्निभम् ।
विलोक्य चिन्तयामास ब्रह्मा लोकपितामहः ॥ ५५
यस्त्वेतत्समधिष्ठाय वर्तते बालिशोऽपि वा ।
पुरस्यास्य प्रभावेन सर्वलोकाधिको भवेत् ॥ ५६

न केवला स्त्री राज्यार्हा पुरुषोऽपि तया विना ।
मङ्गळाचार्यसंयुक्तं महापुरुषलक्षणम् ॥ ५७

अनुकूलाङ्गनायुक्तं अभिषिञ्चेदिति श्रुतिः ।
विभातीयं वरारोहा मूर्ता शृङ्गारदेवता ॥ ५८

वरोऽस्यास्त्रिषु लोकेषु न चान्यः शङ्करादृते ।
जटिलो मुण्डधारी च विरूपाक्षः कपालभृत् ॥ ५९

कल्माषी भस्मदिग्धाङ्गः श्मशानास्थिविभूषणः ।
अमङ्गळास्पदं चैनं वरयेत् सा सुमङ्गला ॥ ६०

इति चिन्तयमानस्य ब्रह्मणोऽग्रे महेश्वरः ।
कोटिकन्दर्पलावण्ययुक्तो दिव्यशरीरवान् ॥ ६१

दिव्याम्बरधरः स्रग्वी दिव्यगन्धानुलेपनः ।
किरीटहारकेयूरकुण्डलाद्यैरलङ्कृतः ॥ ६२

प्रादुर्बभूव पुरतः जगन्मोहनरूपधृक् ।
तं कुमारमथालिङ्ग्य ब्रह्मा लोकपितामहः ॥ ६३

चक्रे कामेश्वरं नाम्ना कमनीयवपुर्धरम् ।
तस्यास्तु परमाशक्तेः अनुरूपो वरस्त्वयम् ॥ ६४

इति निश्चित्य तेनैव सहितास्तामथाययुः ।
अस्तुवंस्ते परां शक्तिं ब्रह्मविष्णुमहेश्वराः ॥ ६५

तां दृष्ट्वा मृगशावाक्षीं कुमारो नीललोहितः ।
अभवन्मन्मथाविष्टः विस्मृत्य सकलाः क्रियाः ॥ ६६

साऽपि तं वीक्ष्य तन्वङ्गी मूर्तिमन्तमिव स्मरम् ।
मदनाविष्टसर्वाङ्गी स्वात्मरूपमन्यत ॥ ६७

अन्योन्यालोकनासक्तौ तावुभौ मदनातुरौ ।
सर्वभावविशेषज्ञौ धृतिमन्तौ मनस्विनौ ॥ ६८

परैरज्ञातचारित्रौ मुहूर्तास्वस्थचेतनौ ।
अथोवाच महादेवीं ब्रह्मा लोकैकनायिकाम् ॥ ६९

इमे देवाश्च ऋषयः गन्धर्वाप्सरसां गणाः ।
त्वामीशां द्रष्टुमिच्छन्ति सप्रियां परमाहवे ॥ ७०

कोवानुरूपस्ते देवि प्रियो धन्यतमः पुमान् ।
लोकसंरक्षणार्थाय भजस्व पुरुषं परम् ॥ ७१

राज्ञी भव पुरस्यास्य स्थिता भव वरासने ।
अभिषिक्तां महाभागैः देवर्षिभिरकल्मषैः ॥ ७२

साम्राज्यचिह्नसंयुक्तां सर्वाभरणसंयुताम् ।
सप्रियामासनगतां द्रष्टुमिच्छामहे वयम् ॥ ७३

तच्छ्रुत्वा वचनं देवी मन्दस्मितमुखाम्बुजा ।
उवाच सा ततो वाक्यं ब्रह्मविष्णुमुखान्सुरान् ॥ ७४

स्वतन्त्राऽहं सदा देवाः स्वेच्छाचारविहारिणी ।
ममानुरूपचरितः भविता तु मम प्रियः ॥ ७५

तथेति तत्प्रतिश्रुत्य सर्वैर्देवैः पितामहः ।
उवाच च महादेवीं धर्मार्थसहितं वचः ॥ ७६

कालक्रीता क्रयक्रीता पितृदत्ता स्वयंयुता ।
नारीपुरुषयोरेवं उद्वाहस्तु चतुर्विधः ॥ ७७
कालक्रीता तु वेश्या स्यात् क्रयक्रीता तु दासिका ।
गन्धर्वोद्वाहिता युक्ता भार्या स्यात्पितृदत्तका ॥ ७८
समानधर्मिणी युक्ता भार्या पितृवशंवदा ।
यदद्वैतं परं ब्रह्म सदसद्भावविवर्जितम् ॥ ७९
चिदानन्दात्मकं तस्मात्प्रकृतिः समजायत ।
त्वमेवासीच्च तद्ब्रह्म प्रकृतिः सा त्वमेव हि ॥ ८०
त्वमेवानादिरखिला कार्यकारणरूपिणी ।
त्वामेव हि विचिन्वन्ति योगिनः सनकादयः ॥ ८१
सदसत्कर्मरूपां च व्यक्ताव्यक्तां दयात्मिकाम् ।
त्वामेव हि प्रशंसन्ति पञ्चब्रह्मस्वरूपिणीम् ॥ ८२
त्वमेव हि सृजस्यादौ त्वमेव ह्यवसि क्षणात् ।
भजस्व पुरुषं कञ्चित् लोकानुग्रहकाम्यया ॥ ८३
इति विज्ञापिता देवी ब्रह्मणा सकलैः सुरैः ।
स्रजमुद्यम्य हस्तेन चिक्षेप गगनान्तरे ॥ ८४
तयोत्सृष्टा हि सा माला शोभयन्ती नभस्थलम् ।
पपात कण्ठदेशे हि तदा कामेश्वरस्य तु ॥ ८५
ततो मुमुदिरे देवाः ब्रह्मविष्णुपुरोगमाः ।
ववृषुः पुष्पवर्षाणि मन्दवातेरिता घनाः ॥ ८६

अथोवाच विधाता तु भगवन्तं जनार्दनम् ।
कर्तव्यो विधिनोद्वाहः अनयोः शिवयोर्हरे ॥ ८७

मुहूर्तो देव संप्राप्तो जगन्मङ्गळकारकः ।
त्वद्रूपा हि महादेवी सहजश्च भवानपि ॥ ८८

दातुमर्हसि कल्याणीं अस्मै कामशिवाय तु ।
तच्छ्रुत्वा वचनं तस्य देवदेवस्त्रिविक्रमः ॥ ८९

ददौ तस्मै विधानेन प्रीत्या तां शङ्कराय तु ।
देवर्षिपितृमुख्यानां सर्वेषां देवयोगिनाम् ॥ ९०

कल्याणं कारयामास शिवयोरादिकेशवः ।
उपायनानि प्रददुः सर्वे ब्रह्मादयः सुराः ॥ ९१

ददौ ब्रह्मा इक्षुचापं तु वज्रसारमनश्वरम् ।
तयोः पुष्पायुधं प्रादादम्लानं हरिरव्ययम् ॥ ९२

नागपाशं ददौ ताभ्यां वरुणो यादसां पतिः ।
अङ्कुशं च ददौ ताभ्यां विश्वकर्मा विशाम्पतिः ॥ ९३

किरीटमग्निः प्रायच्छत् ताटङ्कौ चन्द्रभास्करौ ।
नवरत्नमयीं भूषां प्रादात् रत्नाकरः स्वयम् ॥ ९४

ददौ सुराणामधिपः मधुपात्रमथाक्षयम् ।
चिन्तामणिमयीं मालां कुबेरः प्रददौ तदा ॥ ९५

साम्राज्यसूचकं छत्रं ददौ लक्ष्मीपतिः स्वयम् ।
गङ्गा च यमुना ताभ्यां चामरे चन्द्रभास्वरे ॥ ९६

लक्ष्मीप्रदानसमये नवविद्रुमाभां विद्याप्रदानसमये शरदिन्दुशुभ्राम्।
विद्वेषिवर्गविजये हरिनीलवर्णां अम्बां त्रिलोकजननीं अजनिं प्रपद्ये ॥

शिवे श्रृङ्गारार्द्रा तदितरजने कुत्सनपरा
सरोषा गङ्गायां गिरिशचरिते विस्मयवती।
हराहिभ्यो भीता सरसिरुहसौभाग्यजननी
सखीषु स्मेरा ते मयि जननि दृष्टिः सकरुणा ॥

अष्टौ च वसवो रुद्राः आदित्याश्चाश्विनौ तथा ।
दिक्पालाः मरुतः साध्याः गन्धर्वाः प्रमथेश्वराः ॥ ९७
स्वानि स्वान्यायुधान्यस्यै प्रददुः परितोषिताः ।
रथांश्च तुरगान्नागान् महावेगान्महाबलान् ॥ ९८
उष्ट्रानरोगानश्वान् तान् क्षुत्तृष्णापरिवर्जितान् ।
ददुर्वज्रोपमाकारान् सायुधान् सपरिच्छदान् ॥ ९९
अथाभिषेकं आतेनुः साम्राज्ये शिवयोःशिवम् ।
अथाकरोद्विमानं च नाम्ना तु कुसुमाकरम् ॥ १००
विधाता अम्लानमालं वै नित्यं चाभेद्यमायुधैः ।
दिवि भुव्यन्तरिक्षे च कामगं सुसमृद्धिमत् ॥ १०१
यद्गन्धघ्राणमात्रेण भ्रान्तिरोगक्षुधार्तयः ।
तत्क्षणादेव नश्यन्ति मनोह्लादकरं शुभम ॥ १०२
तद्विमानमथारोप्य तावुभौ दिव्यदम्पती ।
चामरव्यजनच्छत्रध्वजयष्टिमनोहरम् ॥ १०३
वीणावेणुमृदङ्गादिविविधैस्तौर्यवादनैः ।
सेव्यमाना सुरगणैः निर्गत्य नृपमन्दिरात् ॥ १०४
ययौ वीथीं विहारेशा शोभयन्ती निजौजसा ।
प्रतिहर्म्याग्रसंस्थाभिः अप्सरोभिः सहस्रशः ॥ १०५
सलाजाक्षतहस्ताभिः पुरन्ध्रीभिश्च वर्षिता ।
गाथाभिर्मङ्गळार्थाभिः वीणावेण्वादिनिस्वनैः ॥ १०६

तुष्यन्ती वीथिवीथीषु मन्दमन्दमथाऽययौ ।
प्रतिगृह्याप्सरोभिस्तु कृतं नीराजनाविधिम् ॥ १०७

अवरुह्य विमानाग्रात् प्रविवेश महासभाम् ।
सिंहासनं अधिष्ठाय सह देवेन शम्भुना ॥ १०८

यद्यद्वाञ्छन्ति तत्रस्थाः मनसैव महाजनाः ।
सर्वज्ञा सा अक्षिपातेन तत्तत्कामानपूरयत् ॥ १०९

तद् दृष्ट्वा चरितं देव्याः ब्रह्मा लोकपितामहः ।
कामाक्षीति तदाभिख्यां ददौ कामेश्वरीति च ॥ ११०

ववर्षाश्चर्यमेघोऽपि पुरे तस्मिन् तदाज्ञया ।
महार्हाणि च वस्तूनि दिव्यान्याभरणानि च ॥ १११

चिन्तामणिः कल्पवृक्षः कमला कामधेनवः ।
प्रतिवेश्म ततस्तस्थुः पुरो देव्या जयाय ते ॥ ११२

तां सेवैकरसाकारां विमुक्तान्यक्रियागुणाः ।
सर्वकामार्थसंयुक्ता हृष्यन्तः सार्वकालिकम् ॥ ११३

पितामहो हरिश्चैव महादेवश्च वासवः ।
अन्ये दिशामधीशास्तु सकला देवतागणाः ॥ ११४

देवर्षयो नारदाद्याः सनकाद्याश्च योगिनः ।
महर्षयश्च मन्वाद्याः वसिष्ठाद्यास्तपोधनाः ॥ ११५

गन्धर्वाप्सरसो यक्षाः याश्चान्या देवजातयः ।
दिवि भुव्यन्तरिक्षेषु ससम्बाधं वसन्ति ये ॥ ११६

ते सर्वे चाप्यसंबाधं निवसन्ति स्म तत्पुरे ।
एवं तद्भक्तवत्सला देवीं नान्यत्रैत्यखिलाज्जनात् ॥ ११७
तोषयामास सततं अनुरागेण भूयसा ।
राज्ञो महति भूर्लोके विदुषः सकलेप्सिताम् ॥ ११८
राज्ञी दुदोहाभीष्टानि सर्वभूतलवासिनाम् ।
एतदाख्यानमायुष्यं सर्वमङ्गळकारणम् ॥ ११९
आविर्भावं महादेव्याः तस्याः राज्याभिषेचनम् ।
यः प्रातरुत्थितो विद्वान् भक्तिश्रद्धासमन्वितः ॥ १२०
जपेद्धनसमृद्धस्स्यात् सुधासम्मितवाग्भवेत् ।
नाशुभं विद्यते तस्य परत्रेह च धीमतः ॥ १२१
यशः प्राप्नोति विपुलं समाजोत्तमतामपि ।
अचला श्रीर्भवेत्तस्य श्रेयश्चैव पदे पदे ॥ १२२
कदाचिन्न भयं तस्य तेजस्वी वीर्यवान्भवेत् ।
तापत्रयविहीनश्च पुरुषार्थैश्च पूर्यते ॥ १२३
त्रिसन्ध्यं यो जपेन्नित्यं ध्यात्वा सिंहासनेश्वरीम् ।
षण्मासान्महतीं लक्ष्मीं प्राप्नुयाज्जापकोत्तमः ॥ १२४

इति श्री ब्रह्माण्डपुराणे उत्तरभागे हयग्रीवागस्त्यसंवादे
ललितोपाख्याने ललिताकल्याणं सम्पूर्णम्
पञ्चदशोऽध्यायः सम्पूर्णः ॥

---

॥ श्रीः ॥

शुभं अस्तु

# श्री देवसेनाकल्याणम्

( शङ्करसंहिताया उद्धृतम् )

कल्याणं ददतं कटाक्षलवतो भक्ताय हत्वा रिपून्
कल्याणाचलकार्मुकस्य तनुजं कारुण्यपाथोनिधिम् ।
कल्याणाकृतिमव्ययं गिरिसुताप्रेमास्पदं पावनं ।
कल्याणाय भजेऽनुजं गणपतेः श्रीदेवसेनापतिम् ॥ १

भजेतरामहं वल्लीदेवसेनापतिं गुहम्
मयूरवाहनं शक्तिधरं तारकमारकम् ॥ २

अथावेक्ष्य गुहो देवान् जयन्तप्रमुखानिह ।
बन्धितानानयेत्याह वीरबाहुं तदाऽसुरैः ॥ ३

स तथेति विनिर्गत्य गुहाज्ञां शिरसा वहन् ।
जयन्तादीनवाप्यायं वन्दितरतैः महाबलः ॥ ४

वृत्तान्तमुक्त्वा तान् शीघ्रादानयित्वा समागतः ।
प्रणम्य ते गुहं दृष्ट्वा स्तुतिश्चक्रुस्तरां तदा ॥ ५

तानुवाच कृपाम्भोधिः सुखिनो भवताधुना ।
स्वर्गभोगान्यथापूर्वं भुक्त्वा यूयमिति द्विजाः ॥ ६

कृताशिषो जयन्तादिदेवाः परमया मुदा ।
प्रणेमुरिन्द्रमभ्याशे स्थितमग्निभुवस्तदा ॥ ७

परितुष्टः सुरेशानः जयन्तादीन् सुरानिमान् ।
आलिङ्ग्य प्रणयेनायं उवाच वचनञ्च तान् ॥ ८

यानि भूतानि वीराश्च मृताः पूर्वं रणस्थले ।
उत्तिष्ठन्तु पुनः शीघ्रादिति सस्मार षण्मुखः ॥ ९

तदाज्ञया मृतास्सर्वे नमिताः प्राप्तचेतनाः ।
अपां पतिमवेक्ष्याथ गुहः परनिषूदनः ॥ १०

महेन्द्रनगरन्दैत्यकृतवासं मदाज्ञया ।
कबलीकुरु शीघ्रात्त्वं इत्याज्ञां कृतवान् द्विजाः ॥ ११

स तथैव चकाराशु सम्प्रीत्याम्भोनिधिः पुरम् ।
विनिर्गत्य ततो देवैः वीरैरन्यैश्च षण्मुखः ॥ १२

श्रीसन्धिनगरं रम्यमाप वाद्यमहारवैः ।
तत्र गत्वा मयूरात्स्वादवरुह्यासनं महत् ॥ १३

सैह्ममध्यारुरोहायं सूर्यश्चास्तं गतस्तदा ।
कुमारं तत्र ते भक्त्या देवा देवमपूजयन् ॥ १४

तदानीं तेषु कृपया दृष्टिञ्चक्रे सुरेश्वरः ।
उदिते तु पुनः सूर्ये परेद्युष्षण्मुखः स्वयम् ॥ १५

अपूजयन्महेशानं जगतां पितरं तदा ।
पूजयित्वा पुरारातिं षण्मुखो हृष्टमानसः ॥ १६

आरुह्य बर्हिणं रम्यं नानालङ्कारमण्डितम् ।
श्रीसन्धिनगराद्वीरैः सेनेशैः स्यन्दनस्थितः ॥ १७

प्रतस्थे परया प्रीत्या पराचलमभि द्विजाः ।
गुहाज्ञया तदा विष्णुब्रह्ममुख्याः सुरेश्वराः ॥ १८

स्वं स्वं वाहनमारुह्य निर्ययुः सहसा द्विजाः ।
छत्र चामर सङ्घाश्च निर्ययुः व्यजनैः सह ॥ १९

ध्वजा महोन्नतास्तद्वत् वाद्यानि विविधान्यपि ।
चञ्चुना भूमिमुल्लिख्य मयूरो भीषयन्नहिम् ॥ २०

केकारावैः महाघोरैः विचचाल क्षणात् द्विजाः ।
कुक्कुटोऽपि महामेघानशनिन्निजचञ्चुना ॥ २१

लेलिहानो महारावो निरगाद्भूसुराः तदा ।
मृगाणाञ्चापि भूतानां आरावैस्तु मृगाः परे ॥ २२

गुहां प्रविविशुः त्रस्ताः पर्वतस्य समन्ततः ।
केकीकुक्कुट शब्देभ्यः भृशं त्रस्ता महोरगाः ॥ २३

बिलानि विविशुः शीघ्रं गम्भीराणि तदा द्विजाः ।
समजायत वेदानामारावोऽपि ऋषीश्वराः ॥ २४

अस्तुवन् गुहमीशानं स्तोत्रवर्यैः स्तुतिप्रियम् ।
तदा किन्नरमुख्यानां गानासक्तमना गुहः ॥ २५

पराचलं महारावैः आपायं दानवान्तकः ।
ऋषयः षट् विधात्राद्या देवा अपि गुहं तदा ॥ २६

स्थातव्यमत्र देवेश भवता पर्वतोत्तमे ।
एवमप्रार्थयन् स्तुत्या सुब्रह्मण्यं सुरेश्वरम् ॥ २७

तानुवाच गुहो वीक्ष्य युष्माभिः सम्यगीरितम् ।
याथाज्ञातं मया पूर्वं तदेतत्स्मारितं किल ॥ २८
इत्युदीर्य गिरेरूर्ध्वं आरुरोह सुरेश्वरः ।
तत्र गत्वा गुहो वीक्ष्य विश्वकर्माणमग्रतः ॥ २९
निर्मातव्यं त्वयां रम्यं पुरं मम सुरप्रिय ।
इति सम्भाषयामास कारुण्यामृतविग्रहः ॥ ३०
स तस्य भवनं मूर्ध्नि कृत्वा तक्षा च नाकिनाम् ।
निर्ममेऽथ पुरं रम्यं नानावृक्षोपशोभितम् ॥ ३१
गोपुराट्टालसंयुक्तं प्राकारवलभीवृतम् ।
नानाश्चर्यसमोपेतं नानालङ्कारमण्डितम् ॥ ३२
एवं निर्मितमन्वीक्ष्य त्वष्ट्रा सन्तुष्टमानसः ।
बीथीषु वीरान् भूतानि विनियोज्य बलाधिपैः ॥ ३३
प्रविश्य स्वालयं रम्यं मयूरादवरुह्य सः ।
सिह्मासनं समारुह्य पार्श्वयोश्च सुरांस्तदा ॥ ३४
स्थापयित्वा स्वयं वीरैः कृतनानोपचारवान् ।
ऋषिभिः षड्भिरत्यन्तं पूजितः पार्वतीसुतः ॥ ३५
तदा तेषां सुविज्ञानं उपदेष्टुमनाः सुरान् ।
ब्रह्मादीन्स्वस्वभवनं प्रेरयामास भूसुराः ॥ ३६
प्रेरयित्वा स्वविज्ञानमुपदिश्यात्र संस्थितः ।
ब्रह्मविष्णुमुखानिन्द्रः प्रोवाच स्वसुतामिह ॥ ३७

गुहाय सम्प्रयच्छामि विवाहोक्तविधानतः ।
इति तस्य वचः श्रुत्वा सन्तोषेण तथेति ते ॥ ३८
आपिरे स्वानि वेश्मानि कृतकृत्या इव क्षणात् ।
स्वगृहं प्राप्य मघवान् इन्द्राणीं स्वसुताङ्गजाम् ॥ ३९
आनेतुं प्रेषयामास तथेति स्वभटांस्तदा ।
त इमे शीघ्रमेवैनां इन्द्राणीं मेरुवासिनीम् ॥ ४०
प्रणम्य शूरमुख्यानां संहारं देवमोचनम् ।
पराचलप्रवेशञ्च गुहस्य परमात्मनः ॥ ४१
सुतोद्वाहप्रसङ्गञ्च यथेन्द्रेण सुभाषितम् ।
उक्त्वा तामानयित्वाशु ससुतां सगजां तथा ॥ ४२
प्रापुरिन्द्रस्य भवनं नानालङ्कारशोभितम् ।
तामागतां शचीं दृष्ट्वा बन्दीग्राहमिताश्च याः ॥ ४३
कन्याः प्रणेमुरागत्य परिफुल्लकपोलकाः ।
जयन्तोपि समागत्य नमश्चक्रे स्वमातरम् ॥ ४४
आलिङ्ग्य तं सा रुदती दुःखमाप तदा भृशम् ।
समीचीनामुवाचैषा वाचं स्त्रीणाञ्च नाकिनाम् ॥ ४५
सर्वे जनाः निशम्यैतत् कल्याणं शरजन्मनः ।
तुष्टिमापुः तदात्यन्तं प्रसन्नेनान्तरात्मना ॥ ४६
विनिर्गत्य सुराधीशः समागत्य सुरैस्सह ।
प्रणम्य षण्मुखं प्राह विनयेन नताननः ॥ ४७

शूरपद्ममुखान्दैत्यान् स्वामिन्हत्वा सुरानिमान् ।
रस्क्षिथ कृपासिन्धो दत्वास्मभ्यं पदं स्वकम् ॥ ४८

प्रयच्छामः ततः किं वा लीलमङ्गलविग्रह ।
तथापि देवदेवश भक्तानामिष्टपूरक ॥ ४९

रक्षायै देवतानान्त्वं मत्पुत्र्याः पाणिसङ्ग्रहम् ।
कुरु सर्वामरेशान रक्ष रक्ष दयानिधे ॥ ५०

इत्युक्त्वा प्रणनामायं दण्डवत्पृथिवीतले ।
तमाह देवसेनेशः तथेत्युक्त्वा पुरन्दरम् ॥ ५१

परेद्युरेव कल्याणं भवत्वत्र मदाज्ञया ।
उत्तिष्ठ शीघ्रं गच्छ त्वं तदर्थं यत्नमाचर ॥ ५२

इत्युक्त्वा प्रेषयामास सन्तोषेणामराधिपम् ।
ततोऽमरेशो निर्गत्य तुष्ट्या परमया युतः ॥ ५३

स्वगेहं प्राप्य दूतान् स्वान् प्रेषयामास शीघ्रतः ।
भूपतीन्मुचुकुन्दादीन् गन्धर्वाधिपतीन् सुरान् ॥ ५४

आनयध्वं गुहस्यात्र श्वः कल्याणमिति द्विजाः ।
पुनश्च विश्वकर्माणं कुरु कल्याणमण्टपम् ५५

वापी कूपतटाकदीन् अन्यानि करणान्यपि ।
इति सञ्चोदयामास मघवान्त्सुरवर्द्धकिम् ॥ ५६

स तथेति चकाराशु तत्सर्वं सुरवर्द्धकिः ।
एवमिन्द्रस्तदा कृत्वा कल्याणापेक्षितः स्थितः ॥ ५७

मुचकुन्दमुखान्दूताः भूपतीनमरानपि ।
व्यजिज्ञिपन्निदं सर्वं वृत्तान्तं ब्राह्मणोत्तमाः ॥ ५८

मुचुकुन्दः समाकर्ण्य कल्याणं षण्मुखस्य सः ।
प्रीत्या परमयाभ्यर्च्य दूतांस्तानुपचारतः ५९

स बन्धुभिर्नागरैश्च स्वदेशस्थैर्विलासिभिः ।
नागरीभिश्च योषाभिः पुरन्ध्रीभिर्विनिर्गतः ॥ ६०

प्रापतत्पत्तनं रम्यं यत्र स्कन्दो विराजते ।
अन्येऽपि पृथिवीपालाः दिगन्तेषु स्थिता द्विजाः ॥ ६१

चन्द्रसूर्यौ तथा देवाः ऋषयः पुण्यशालिनः ।
श्रुत्वा दूतमुखेभ्यस्ते कल्याणं शरजन्मनः ॥ ६२

प्रहृष्टमनसः सर्वे नानालङ्कारमन्धराः ।
चतुरङ्गबलैस्साकं वाद्यानाञ्च महारवैः ॥ ६३

शिबिकान्दोलिकारूढैः प्रभुभिश्च समन्ततः ।
सुन्दरीभिः सुरम्याभिः विनिर्गत्य महाबलाः ॥ ६४

पराचलबहिर्भूषु स्वावासञ्चक्रिरे मुदा ।
पुष्पारामेषु वृक्षाणामारामेषु सरित्स्वपि ॥ ६५

प्रपासु मण्टपेष्वत्र संबाधेन महीसुराः ।
मुचकुन्दमुखा भूपाः देवाश्च ऋषयस्तदा ॥ ६६

शतक्रतोर्गृहं गत्वा दृष्ट्वा तं त्वरया सह ।
मिथः कृतोपचारास्ते कृतसल्लापिनोऽवसन् ॥ ६७

समागतास्तु देवानां भूपानाञ्च वरस्त्रियः ।
इन्द्राणीनिकटं गत्वा प्रणम्यैनाञ्च तत्सुताम् ॥ ६८
कल्याणवेषां तां देव्यो गजनायिकसंज्ञिकाम् ।
अलञ्चक्रुस्ततस्तास्तां दिव्याम्बरविभूषणैः ॥ ६९
ततो विधात्रा निर्दिष्टः समयोऽयमिति द्विजाः ।
कल्याणाय निशम्यैतत् इन्द्रो विष्ण्वादिभिः सह ॥ ७०
सुब्रह्मण्यस्य भवनं गत्वा देवं प्रणम्य सः ।
आगच्छ देवदेवेश विवाहाय गृहं मम ॥ ७१
समयोऽयं समीचीनः त्रायस्वैनान् कृपानिधे ।
इत्युक्तवन्तं तं प्रेक्ष्य परमात्मा गुहस्तदा ॥ ७२
विहस्य किञ्चित्सन्तोषात् अवरुह्यासनात्स्वकात् ।
आरुह्य बर्हिणं रम्यं नानालङ्कारमन्धरम् ॥ ७३
नवाधिकैर्महावीरैः लक्षपर्यन्तगामिभिः ।
कृतात्मपावनस्तोत्रैः देवैरञ्जलिपाणिभिः ॥ ७४
विकीर्यत्पुष्पवर्षाभ्यां भक्ताभ्यां परया मुदा ।
अजनारायणाभ्याञ्च प्रतस्थे सहसा द्विजाः ॥ ७५
तदानीञ्चन्द्रसूर्यौ च छत्रे दधतुरुज्वले ।
चामरव्यजनाभ्याञ्च वायुप्राचेतसावुभौ ॥ ७६
कालोऽपि भीषणं खड्गं आदाय निरगात्तदा ।
वेदघोषोऽभवच्छ्राव्यो वाद्यानाञ्च महारवाः ॥ ७७

ऋषयस्तु स्तदास्तोत्रैः अस्तुवन्स्तुत्यमव्ययम् ।
कुक्कुटोपि तदारावानकरोद्भीषणं भृशम् ॥ ७८

जगुर्गानानि रम्याणि किन्नराः कलवाङ्मयाः ।
ऊर्वशी मेनका रम्भा ननृतुर्गानतत्पराः ॥ ७९

पूर्णकुम्भान् समादाय ऋषयोऽग्रे समागताः ।
एवन्नानोपचारेण वीथीरुल्लङ्घ्य षण्मुखः ॥ ८०

मरुत्वतो गृहद्वारवीथीमापामरैः सह ।
तदा सरस्वतीलक्ष्मीमुखा देववरस्त्रियः ॥ ८१

नीराजनक्रियाश्चक्रुः अष्टमङ्गलकान्यपि ।
प्रदक्षिणत्रयं कृत्वा विविशुर्भवनान्तरम् ॥ ८२

ततस्तु भगवान् देवो मयूरादवरुह्य सः ।
कल्याणशालानिकटं आप मङ्गलसंरवैः ॥ ८३

तदा समागता देवी शक्रस्य परया मुदा ।
अप्सरोभिः गुहन्नत्वा क्षीरैः पादावपूजयत् ॥ ८४

आनर्च पुष्पैर्दिव्यैस्सा कृत्वा दीपावलिं पुनः ।
प्रदक्षिणप्रणामानि कृत्वा भवनमाप सा ॥ ८५

सुवर्णपादुके रम्ये नानारत्नविचित्रिते ।
धृत्वा गुहश्शनैर्देवो ययौ कल्याणमण्टपम् ॥ ८६

समारुरोह तत्रस्थन्दिव्यं सिंहासनं पुनः ।
विष्णवादिदेवाः स्कन्दस्य नियोगात् स्वासनानि ते ॥ ८७

भेजिरे मुचुकुन्दाद्याः प्रणम्याञ्जलिपाणयः ।
वीरबाहुमुखा वीरा विदधुर्गुहसत्क्रियाम् ।
एवन्नानोपचारेण पूज्यमानस्सुरेश्वरः ॥ ८८

अथ निरगमदीशस्यन्दनं व्योमयानं
कनकमणिविचित्रं सार्द्धमद्रीन्द्रपुत्र्या ।
वियति परिविशुद्धे वाद्यघोषैरनेकैः
जितघनघनरावैरास्थितो द्रष्टुमेतत् ॥ ८९

तत्र दृष्ट्वा महादेवं समुत्थाय गुहादयः ।
प्रणम्य परया भक्त्या तुष्टुवुर्बद्धपाणयः ॥ ९०

अवरुह्य विमानात्स्वात् निरगादम्बया शिवः ।
तौ गुहः पुरतो गत्वा पार्वतीपरमेश्वरौ ॥ ९१

प्रणम्य पादयोर्मूर्ध्ना तुष्टाव विनयेन सः ।
समालिङ्ग्य गुहं शम्भुः समाघ्रायाशु तच्छिरः ॥ ९२

तृप्तिन्नाप तदात्यन्तं पुनः पुनरहो द्विजाः ।
विष्णुब्रह्मादयो देवा नत्वा देवं त्रियंबकम् ॥ ९३

अस्तुवन्विविधैः स्तोत्रैः बद्धाञ्जलिपुटास्तदा ।
कृपया तान्विलोक्येशः प्राप कल्याणमण्टपम् ॥ ९४

अनुसृत्य सुराः सर्वे परमेशन्तदा गताः ।
तत्र सिंहासनं दिव्यं आगतन्तच्छिवाज्ञया ॥ ९५

अलञ्चकार तद्देवः परमानन्दविग्रहः ।
सुब्रह्मण्यं महादेवः स्वाङ्कमारोपयत्तदा ॥ ९६

प्रणेमुरम्बिकानाथं ससुतं सकलास्सुराः ।
त्वदाज्ञया गुहस्वामी हत्वा दैत्यान् सुरद्रुहः ॥ ९७
मोचयित्वामरान्बद्धान् आगतोऽत्र पराचले ।
प्रीतये षण्मुखस्यायं मरुत्वान् स्वसुतामिह ॥ ९८
पाणिं ग्राहयति स्वस्य कुलस्योद्भूतये प्रभो ।
एवं प्रणम्य देवेशं ब्रह्मा वृत्तान्तमुक्तवान् ॥ ९९
तदङ्गीकृत्य शिरसश्चालनेन महेश्वरः ।
द्रष्टुमभ्यागतोऽत्राहं कल्यणमितिचावदत् ॥ १००
पुरन्दरं तदा विष्णुः आनयात्र सुतां तव ।
कल्याणवेषां परमां जगादैवं द्विजोत्तमाः ॥ १०१
गत्वामरेश्वरश्शीघ्रादानिनायात्मजां तदा ।
कल्याणमण्टपे लक्ष्मीवाणिभ्यां सह सुन्दरीम् ॥ १०२
ससुत्थाय ततो देवाः प्रणेमुस्तां वराङ्गनाम् ।
पार्वतीपरमेशानौ श्वशुरौ प्रणनाम सा ॥ १०३
अवलोक्य तदा लज्जामाप षण्मुखमग्रतः ।
तदानीं पार्वतीनाथः कृपाञ्चक्रेऽवलोक्य ताम् ॥ १०४
करेणामृश्य तामेनां गौरी सञ्चुम्ब्य गण्डयोः ।
कृपया वीक्ष्य देवेशी जगताञ्जननी स्नुषाम् ॥ १०५
स्वपुत्रञ्चासने सैह्मे स्थापयित्वा गता स्वयम् ।
एकासनस्थितावेतौ देवसेनागुहावुभौ ॥ १०६

कल्याणानां निधानं कलयतु कुशलं कुन्तलैः भ्राजमानं
शक्तिं जप्याक्षमालां कमलं अथ कटौ दत्तहस्तं दधानम् ।
वल्ली-सेना-समेतं गलवरनिहितं स्वर्णसूत्रं च बिभ्रत्
सिन्धोस्तीरे विराजत् करुणितनयनोपान्तं एकं महस्तत् ॥

वीक्ष्य सर्वे सुरा नत्वा सन्तोषं प्रापिरे तदा ।
चकार षण्मुखस्याथ पादप्रक्षालनं शुचिः ॥ १०७

शचीपाणिस्थभृङ्गारात् जलैरिन्द्रो विनिर्गतैः ।
अभ्यर्च्य चन्दनैः पुष्पैः धूपदीपादिभिस्तदा ॥ १०८

कृतनानोपचारौघः पादोदं पावनं तदा ।
कुत्रचित्स्थापयामास स्वीकर्तुन्तदनन्तरम् ॥ १०९

जलमादाय हस्तेन गुहस्येयं कुटुम्बिनी ।
इति ब्रुवन् तदा धाराञ्चकार मघवान् द्विजाः ॥ ११०

ततो माङ्गल्यसूत्रञ्च सम्पाद्य मनसा विधिः ।
प्रादाद्गुहकराब्जे तत् स्वेच्छामङ्गलहेतवे ॥ १११

बबन्ध देवसेनायाः कण्ठे तद्देवनायकः ।
सुगन्धिकुसुमस्रग्भिः पुनः कण्ठमभूषयत् ॥ ११२

ततः पुरन्दरः पुत्रीजामात्रोस्सुरसायनम् ।
अमृतं फलमन्यच्च नैवेद्यमकरोत्सुधीः ॥ ११३

वाद्यघोषस्तदात्यन्तं बभूव घननादवत् ।
आशीः प्रयुज्य तत्रस्थाः तुष्टिमापुः तदा भृशम् ॥ ११४

जुहाव समिदन्नाज्याहुतीभिः पावके ततः ।
प्रदक्षिणार्चिषि विधिः विधिना ब्राह्मणोत्तमाः ॥ ११५

प्रदक्षिणीकृत्य वह्निं तया स्कन्दः स्वयं प्रभुः ।
पाणिनारोपयामास पत्न्याः पादन्तदाश्मनि ॥ ११६

ददर्शतुस्तदात्वेतौ दम्पती तावरुन्धतीम् ।
ततो महेश्वरं गौरीं पितरौ जगतामुभौ ॥ ११७

त्रीणि प्रदक्षिणान्यत्र कृत्वा नेमतुरञ्जसा ।
स्थापयामासतुर्गौरीपरमेशौ निजासने ॥ ११८

समालिङ्ग्य स्नुषां पुत्रं कृपादृष्ट्या विलोक्य तौ ।
अथ विष्णुमुखा देवा भद्रसिंहासनस्थितान् ॥ ११९

प्रणम्य तुष्टुवुर्भक्त्या दृष्ट्वा तान् लोचनप्रियान् ।
अन्तर्दधतुरम्बेशौ तदानीमेव भूसुराः ॥ १२०

आश्चर्येण ततो देवाः स्तोत्रञ्चक्रुरुमेशयोः ।
तदानीं भार्यया साकं स्वालयं प्राप षण्मुखः ।
शृण्वन्मङ्गलवाद्यानि स्तोत्राणि विविधान्यपि ॥ १२१

यस्त्वेतत्पठते शृणोति परमं श्राव्यं शुभं सुन्दरं
गौरीपुत्रविवाहमङ्गलकथासारं महाश्रद्धया ।
दीर्घायुस्स भवेत् सदारपशुपुत्राद्यैस्सदाप्येधते
सत्यं सत्यमिहोक्तमत्र च गुहस्साक्षी महाब्राह्मणाः ॥

इति श्री स्कान्दपुराणे शङ्करसंहितायां शिवरहस्यखण्डे
देवकाण्डे देवसेनाकल्याणं सम्पूर्णम् ॥

---

|| श्रीः ||

शुभं अस्तु

# श्री वल्लीकल्याणम्

( शङ्करसंहिताया उद्धृतम् )

काञ्चीपुरं जगत्स्थानं वर्तते यन्महत्स्थलम् ।
तत्समीपे पुरं रम्यं मूर्द्धास्फाटीति विश्रुतम् ॥ १

लवलीनिलयः कश्चित् गिरिस्तत्र विराजते ।
तत्र व्याधोऽवसच्छ्रीमान् निरपत्यस्तपोधनाः ॥ २

व्याधानामधिपो नित्यं ऐच्छत्स्वस्य सुतं परम् ।
गिरौ तस्मिन् महारण्ये शिवाख्यो मुनिसत्तमः ॥ ३

तपश्चचार पुण्यात्मा तपस्वी सत्यवर्द्धनः ।
स कदाचिन्मृगीं रम्यां स्वसमीपे स्थितामृषिः ॥ ४

विलोक्य कामवशगो मुमोह नितरान्तदा ।
तदालोकनमात्रेण गर्भन्धत्ते स्म सा मृगी ॥ ५

लवलीकुञ्जमध्ये सा सुषुवे स्त्रियमुत्तमाम् ।
विलोक्य तां विजातीयां दुद्राव भयविह्वला ॥ ६

रुरोद तत्र सा बाला सुस्वरेण तदा द्विजाः ।
तां दृष्ट्वा व्याधवर्योयं रुदन्तीं आगतः क्वचित् ॥ ७

प्रियङ्गुव्रीहिसम्पन्नकेदारालोकनाय सः ।
प्रीत्या परमया युक्तो गृहीत्वा तां मनोहराम् ॥ ८

गत्वा स्वस्य कुटुम्बिन्याः हस्तयोर्दत्तवान्मुदा ।
पुत्र्युत्सवक्रियां कृत्वा तदानीं व्याधनायकः ॥ ९

स्वस्त्रियानुदिनं कन्यामपोषयदहो द्विजाः ।
ववृधे सा क्रमेणैव कन्या द्वादशवत्सरम् ॥ १०

रेणुक्रियाविलासेन बालचेष्टासमन्विता ।
ततस्तु तां व्याधनाथः सम्पन्नप्रौढशेमुषीम् ॥ ११

केदारे कुत्रचिद्रम्ये स्थापयामास रक्षितुम् ।
शाकुन्ताद्युपघातेभ्यः प्रियङ्गून्व्रीहिणो वरान् ॥ १२

सच्छायां तत्र कृत्वेयं भर्त्सयन्ती पतत्रिणः ।
ऊर्ध्वस्वरैश्शब्दभेदैः न्यवसत्सुमनोहरा ॥ १३

आलवाले लवल्या सा यत्तदाख्या बभूव हि ।
तामेनां रक्षितुं स्कन्दो मुक्त्वा स्कन्दगिरिन्तदा ॥ १४

प्राप श्रीपरिपूर्णाख्यं गिरिं परमशोभनम् ।
तदानीन्नारदो दृष्ट्वा लवलीनायिकामिमाम् ॥ १५

प्रणम्य स्कन्दपत्नीति ज्ञात्वा सर्वत्र सञ्चरन् ।
प्राप्य श्रीपरिपूर्णाख्यं गिरिं परममद्भुतम् ॥ १६

तत्र दृष्ट्वा गुहं देवदेवन्नत्वा ऋषीश्वरः ।
दृष्ट्वागतोस्मि लवलीमित्युक्त्वा देवनायकम् ॥ १७

विशेषेण प्रणम्यायं प्रतस्थे स्वेच्छया पुनः ।
व्याधवेषं गृहित्वाथ निरगात् षण्मुखस्तदा ॥ १८

समागत्य जवेनायं लवलीनायिकान्तिकम् ।
का त्वं बाले सुता कस्य किन्नामा ते क वा जनिः ॥१९

कथमेतादृशीं व्याधाः स्त्रीरत्नमतिसुन्दरम् ।
आस्थापयन्निमे त्वां हि प्रियङ्गुं रक्षितुं वने ॥ २०

मार्गो वाच्यो जन्मभूमेः मुक्त्वा लज्जां वरानने ।
वद किञ्चिद्विहस्यैनं अवलोकय मामिह ॥ २१

जानासि विजनस्य त्वमुचितं काननस्य च ।
वनेषु नितरां भ्रान्त्या खिन्नस्यास्या सुनायिके ॥ २२

अमृतस्य पिपासा मे सुधापूर्णनिजाधरे ।
एवं वादिनि देवेशे तत्पिता व्याधनायकः ॥ २३

सेवितो बहुभिर्व्याधैः क्रूररूपैर्धनुर्धरैः ।
बाद्यानामारवैर्भीमैः प्रतस्थे पुरतो द्विजाः ॥ २४

तदानीमेव देवोपि गृहीत्वासन्नशाखिनः ।
अनन्तवेदशाखस्य रूपं परममद्भुतम् ॥ २५

तस्थे केदारनिकटे छायां कृत्वा सुशीतलाम् ।
व्याधस्समागतः पुत्र्याः फलानि विविधानि च ॥ २६

प्रियङ्गुपिष्टं समधु वात्सल्येन ददौ द्विजाः ।
अन्येऽनुजीविनस्तस्य वृक्षमेतं विलोक्य ते ॥ २७

इतः पूर्वं न दृष्टोयमिति छेत्तुं तदागताः ।
तान्निवार्य प्रधानोयं व्याधः पुत्रीमवेक्ष्य सः ॥ २८

वत्सेयं कागतो वृक्षः सुच्छायस्तवसङ्गतः ।
इत्युक्तवन्तं जनकं न जानेऽहमिमं पितः ॥ २९
मायेव भाति नितरामित्युवाच वरानना ।
मास्तु ते भीतिरेतस्माद्वरवृक्षात्सुशीतलात् ॥ ३०
भवत्वयं सहायस्ते कानने सुखदोऽनिशम् ।
इत्युक्त्वा प्रययौ व्याधो वनानि विविधानि च ॥ ३१
गते सपरिवारेऽस्मिन् जग्राह प्राक्तनुं गुहः ।
धनुष्पाणिर्महारूपो युवा नेत्रप्रियो वरः ॥ ३२
चाटुवाक्यानि भूयांसि जगादालिङ्गनोत्सुकः ।
आलिङ्गनाय तामेनां अवदत्कण्ठतो द्विजाः ॥ ३३
तमेनं सा भयोद्विग्ना प्राह वाचन्नतानना ।
अहं हीनकुलोद्भूता त्वन्तु राजकुलोद्भवः ॥ ३४
प्रियङ्गुपालिका राजन् आवयोः कियदन्तरम् ।
तवेद्दशमिहायुक्तं गच्छ गच्छ यथागतम् ॥ ३५
यदि दृष्टः पुळिन्दैस्त्वं तदा बाधा भवेद् ध्रुवम् ।
इत्युक्तवत्यामेतस्यां तदानीं व्याधनायकः ॥ ३६
समागतः पुनर्व्याधैः बहुभिस्सुमहारवैः ।
समादाय गुहश्शीघ्रं स्थाविरं रूपमद्भुतम् ॥ ३७
जरापलितसर्वाङ्गं दण्डमालम्ब्य पाणिना ।
व्याधस्य तस्य भस्मानि ददावाशीः प्रयुज्य सः ॥ ३८

गन्तव्यं कुत्र भवतः किमपेक्षितमत्र च ।
इति पृष्टस्तदानेन वृद्धः प्राह वचो द्विजाः ॥ ३९
किमप्यपेक्षितं व्याध वरम्मे नास्ति वस्तुषु ।
स्नातुं मां कुमरीतीर्थमागतं विद्धि ते गिरौ ॥ ४०
इति तस्य वचः श्रुत्वा तथेति व्याधनायकः ।
स्नात्वा त्वमत्र मत्पुत्र्या वस साहाय्यतां गतः ॥ ४१
इत्युक्त्वा पूर्ववत्तस्याः फलादीनि प्रदाय सः ।
ययौ स्वकीयैः पुरुषैः व्याधोयं ब्राह्मणोत्तमाः ॥ ४१
ततो वृद्धस्तु तां कन्यां क्षुत्पीडा वर्तते मम ।
इत्युक्त्वादाय तद्धस्तात् फलपिष्टमधून्ययम् ॥ ४३
भक्षयित्वा पिपासा मे वर्ततेचेत्युवाच ताम् ।
इतस्तटाकस्सुमहांस्तीर्त्वा सप्तगिरीन् भवान् ॥ ४४
पीत्वा जलानि स्वादूनि पुनरागच्छतु क्षणात् ।
इति तस्या वचः श्रुत्वा न वेद्मि सरणीमहम् ॥ ४५
वृद्धस्ततस्त्वं साहाय्यं प्राप्य मार्गं प्रदर्शय ।
सा तथेति विनिर्गत्य तटाकान्तं निनाय तम् ॥ ४६
पीत्वाकण्ठं जलान्येष तत्र गत्वा सरोवरे ।
पुनरागत्य तां बालां तृष्णा मे जलकांक्षिणी ॥ ४७
निवृत्ता वर्तते तृष्णा भवत्संभोगलक्षणा ।
तान्निवारय सर्वाङ्गसुन्दरे दयया मयि ॥ ४८

त्वान्नतोस्मि सुधापूर्णमधुराधरशालिनीम् ।
अङ्गीकुरु त्वं विजने वने मां बाधते स्मरः ॥
इति तस्य वचःश्रुत्वा लवली वृद्धमीक्ष्य तम् ।
वृद्धस्त्वं तापसोथापि यत्किञ्चिद्वदसीह माम् ॥ ५०
वयोधिको नमस्कारः क्रियतेद्येति चोक्तवान् ।
अस्मदीयैर्यदि भवान् दृष्टस्त्वेतादृशस्तदा ॥ ५१
बाध्यते नितरां तत्त्वं पश्चादागच्छ सम्प्रति ।
पुरो गच्छाम्यहं शीघ्रात् इत्युक्त्वा प्रययौ पुरः ॥ ५२
तदानीं षण्मुखो ज्येष्ठं गजवक्त्रमचिन्तयत् ।
स तु गन्धद्विपाकारो महावेगेन निर्ययौ ॥ ५३
तं दृष्ट्वा गजमल्लं सा भीतभीता महाजवात् ।
आगत्य वृद्धमालिङ्ग्य त्वदुक्तं तत् शृणोम्यहम् ॥ ५४
रक्ष रक्ष गजात्तस्मात् शरणागतवत्सल ।
इति तस्या वचःश्रुत्वा प्रणम्य गणनायकम् ॥ ५५
तुष्टाव परया भक्त्या षण्मुखो वृद्धवेषवान् ।
उपसंहृत्य तद्रूपं विघ्नेशोऽन्तर्दधे द्विजाः ॥ ५६
ततस्तु तां महारामे रम्ये तस्मिन्रराम सः ।
केशसंयमनं कृत्वा दृष्ट्वा दन्तच्छदं रदैः ॥ ५७
स्वरूपं दर्शयामास सम्भोगानन्तरं द्विजाः ।
तं दृष्ट्वा षण्मुखं भीता प्रीत्या परमया युता ॥ ५८

प्रणम्याञ्जलिहस्ता सा प्रागेव तव सुन्दरम् ।
वपुरेतादृशं देव न प्रदर्शितवानसि ॥ ५९

प्रतारणं कृतं तूष्णीं अहो लीला तवेदृशी ।
इत्यादि वचनञ्चोक्त्वा तुष्टाव लवली गुहम् ॥ ६०

ततस्तामाह देवेशो मन्दस्मितमुखाम्बुजः ।
विष्णोस्त्वन्तनया पूर्वं तपः कृतवती महत् ॥ ६१

तपसा तेन सन्तुष्टः परां प्रीतिमवाप्य ते ।
त्वयि स्नेहरसाधिक्यादेवं संयुक्तवानहम् ॥ ६२

तत्वं प्रियङ्गुकेदारे पुरो गच्छ ममाधुना ।
आगमिष्यामि तत्रापि महाभागे जवादहम् ॥ ६३

इति गुहवचनं निशम्य वल्ली
तदुपरि सन्निहितात्ममानसेयम् ।
विहितवरनमस्क्रिया गुहस्य
द्रुतमपि पूर्वमवाप तत्स्थलं सा ॥ ६४

ततस्तु तत्सखी काचित् प्रियङ्गुव्रीहिपालिनी ।
पप्रच्छ च क गता कालमियन्तमिति तां द्विजाः ॥ ६५

तामाहेयं तटाकेस्मिन् स्नात्वा भूयस्समागता ।
क वर्तते तटाकोयमधरस्य विशुद्धिदः ॥ ६६

सुरक्ते लोचने रम्ये केशास्स्रंसन्ति सर्वतः ।
प्रवर्तन्ते मुखे स्वेदबिन्दवोपि मनोहराः ॥ ६७

तवेत्युक्तवतीं ज्ञात्वा शङ्कमानां निजक्रियाम् ।
आरोपयसि निन्दां त्वं सखि हे मयि सम्प्रति ॥ ६८

एवमन्योन्यमनयोर्वदत्योरुत्तरोत्तरम् ।
समागतस्तत्र गुहो धृतकार्मुकशस्त्रवान् ॥ ६९

कृत्वा खेटमतिश्रान्त इव ते वाचमुक्तवान् ।
युवां बाले गजश्रेष्ठं किं ददर्शथुरुन्नतम् ॥ ७०

मच्छराविद्धसर्वाङ्गं पलायनमिहाश्रितम् ।
इति वाचन्निशम्यास्य सखी सापि जगाद तम् ॥ ७१

तद्वीर्यन्तव तुल्यस्य भटस्य वद मा च नौ ।
इत्युक्त्वा चिन्तयामास मनस्येषा द्विजोत्तमाः ॥ ७२

उभयोरनयोर्दृष्टी ख्यातोस्याश्चर्यमार्गणम् ।
गजादीनान्तथा तस्याः प्रियङ्गुव्रीहिरक्षिताम् ॥ ७३

एनं सा वीक्षते तामप्ययमन्वीक्षतेतराम् ।
इति सन्दिह्य तावेतौ लवलीषण्मुखौ सखी ॥ ७४

स्वकेदारे गता वेगात् मन्युना च समन्युना ।
अनुसृत्याशु तां देवः प्राप्यैनां ब्राह्मणोत्तमाः ॥ ७५

मास्तु कोपो वरारोहे युवयोर्यदपेक्षितम् ।
तत्प्रयच्छामि शीघ्रेण दयां कुरु वरानने ॥ ७६

समाकर्ण्य वचस्तस्य राजानो व्याधकन्यकाम् ।
वाञ्छन्ति वा भवानेनां कथमिच्छति बालिकाम् ॥ ७७

इयं विष्णोर्वराल्लब्धममृतं स्त्रीषु चोत्तमा।
तमोमहिम्ना व्याधस्य बभूव तनुजा ननु॥ ७८
मया नियोजयस्येनां परेद्युस्सुन्दरे यदि।
पटे लिखित्वा तां बालां भद्रां पश्याम्यसंशयम्॥ ७९
इति तस्य वचः श्रुत्वा सखी प्राह गिरन्तदा।
न युक्तमीदृशं तेऽद्य वचनं मानिनां वर॥ ८०
आनयिष्यामि तां शीघ्राद् वृक्षारामे मनोरमे।
तिष्ठ तत्र यदि व्याधैरीदृशो वीक्षितस्तदा॥ ८१
परिपीडा भवेत्तत्वं सावधानेन तिष्ठ भो।
इत्युक्त्वाऽभ्याशमागत्य लवल्यास्सा सखी क्षणात्॥ ८२
प्रणम्य वाञ्छा तस्यैवमुक्त्वा तस्यै विशेषितः।
आनीय वृक्षारामेऽस्मिन् कुत्रचित्स्थाप्य सुन्दरीम्॥ ८३
स्वयं पुष्पापहारस्य व्याजेनान्यत्र निर्गता।
ततस्समागतो वीक्ष्य तामेनां लवलीं गुहः॥ ८४
द्रुतमुत्थाय सा तस्मै प्रणनाम स्मरातुरा।
तां समालिङ्ग्य देवेशः सम्पीड्य स्तनकुड्मले॥ ८५
दष्ट्वाधरं कृतनखक्षतरेखो रराम ताम्।
ततस्समागता पुष्पाण्याहृत्यैतत्सखी क्षणात्॥ ८६
आबद्ध्य चिकुरेष्वस्याः कुसुमानि बहूनि सा।
आहूय तां पुनः क्षेत्रं प्रियङ्गून् रक्षितुं ययौ॥ ८७

तत्र सा लवली तस्थे संयोगष्षण्मुखस्य मे ।
कदा भवेदितितरां विरहाकुलितान्तरा ॥ ८८

अथ व्याधास्समागत्य सुपक्केषु प्रियङ्गुषु ।
निन्यिरे लवलीं बालां गेहं परमशोभनाम् ॥ ८९

तत्सखी स्वगृहं प्राप साप्यनन्तरमुज्वला ।
पक्षिणां तत्र यातानां वृक्षाणां गिरिणामहो ॥ ९०

मृगाणामपि चान्येषामुक्त्वोक्त्वागमनं द्विजाः ।
स्मृत्वा तु लवली देवं मदनेन निपीडिता ॥ ९१

विहाय कन्दुकक्रीडामन्यामपि शिशुक्रियाम् ।
मुमूर्च्छ कामवशगा भृशमुद्विग्नमानसा ॥ ९२

ततो मातृमुखास्तस्याः परिवृत्य समन्ततः ।
आशङ्क्यावेशमेतस्या निवृत्यै कुलदैवतम् ॥ ९३

गुहं महोपचारेण नैवेद्यैरप्यतोषयत् ।
ततो धात्रीं समाविश्य गुहस्यामिततेजसः ॥ ९४

संयोगोऽभवद् आहैवमावेशो ब्राह्मणोत्तमाः ।
श्रुत्वेयं गुहनामानि समुत्तस्थे जवेन सा ॥ ९५

एवं बहुप्रकारेण तस्थे विरहविह्वला ।
ततो व्याधाः प्रियङ्गूंस्तानलुनन्पक्वतां गतान् ॥ ९६

सम्प्राप्य षण्मुखस्तत्र तामदृष्ट्वा निजप्रियाम् ।
इतस्ततश्च वीक्ष्यैनां विरहेण समन्वितः ॥ ९७

पप्रच्छ पर्वतान् वृक्षान् काननानि मृगानपि ।
वापीकूपतटाकादीन् क्व गता प्राणनायिका ॥ ९८

इति पृष्ट्वा रसेनाथं सायाह्नेऽस्तं गते रवौ ।
गृहपृष्ठप्रदेशेऽस्या गत्वा रात्रावुमासुतः ॥ ९९

निर्यास्यति कदा रम्या संवीक्ष्यात्र स्थितो द्विजाः ।
तदा समागता तस्यास्सखी सा वीक्ष्य षण्मुखम् ॥ १००

न लभ्यतेऽवकाशोऽत्र संयोगाय तवाधुना ।
न युक्तः खलु संयोगः गेहेऽस्मिन् बालया सह ॥ १०१

तदन्यत्रानयित्वैनां गच्छेत्युक्त्वा स्वयं सखी ।
समेत्य तत्समीपं सा स्वपतीं मातरं तथा ॥ १०२

पितृनन्यानाप्तनिद्रान्विज्ञायैषा क्षणेन ताम् ।
निरर्गलं कवाटञ्च कृत्वैनां गुहसन्निधिम् ॥ १०३

प्रापयित्वा सखी स्कन्दं प्राह वाचं द्विजोत्तमाः ।
दृष्टो यदि भवान्व्याधैः परिपीड्यो भविष्यति ॥ १०४

संरक्ष्यैनां तदन्यत्र गच्छेत्युक्त्वा करौ तदा ।
लवल्याः करयोस्तस्य गुहस्य परमात्मनः ॥ १०५

अर्पयित्वा गुहेनेयं सन्तुष्टेनान्तरात्मना ।
कृतनानोपचाराशु प्रणम्य लवलीमपि ॥ १०६

परिरभ्य स्वयं गेहं प्रापानुमतिमाप्य सा ।
वल्ली गुहं प्रणम्याथ घने तमसि साहसात् ॥ १०७

कथमभ्यागतस्त्वत्र रक्षितुं मां कृपावशात् ।
इत्युवाच ततः स्नेहाच्चारुवाक्यैर्मनोहरैः ॥ १०८

श्रुत्वा सुविस्मितां पश्चात् ग्रामपालैरलक्षितः ।
दूरे कस्मिन् महारामे गत्वा साकं तया गुहः ॥ १०९

रेमे समदहासेन रतिशास्त्रविचक्षणः ।
व्यतीतायान्ततो रात्र्यां लवल्या जननी तदा ॥ ११०

समुत्थाय सुतां पार्श्वे वीक्ष्यादृष्ट्वा ससम्भ्रमम् ।
पप्रच्छ तत्सखीं गत्वा लवली क्व गतेति ताम् ॥ १११

विज्ञायते मया नैषा प्रातरेवेति साब्रवीत् ।
प्रवृत्ते पत्तने हाहाकारे सर्वत्र भूसुराः ॥ ११२

व्याधनाथस्ततो व्याधैः निरगाद्वीक्षितुं रुषा ।
चोरयित्वा सुतां बालां को जीवेत्प्राणभृज्जनः ॥ ११३

इति व्याधान् बहून् घोरान् मार्गेषु प्रैरयत्तदा ।
स्वयं वनेषु रम्येषु पर्वतेषु सरित्स्वपि ॥ ११४

परिभ्रमन्क्रमेणायं वृक्षाराममवाप तम् ।
तत्र दृष्ट्वाशु तान् व्याधान् लवली भयकम्पिता ॥ ११५

समायान्त्यत्र देवेश रक्ष मां शस्त्रपाणयः ।
इत्युक्त्वा प्रणतामेनां वीक्ष्य किञ्चित्स्मिताननः ॥ ११६

मास्तु भीतिर्वरारोहे मयि तिष्ठति वल्लभे ।
तिष्ठ मत्पृष्ठदेशे त्वं योद्धुं शक्तिश्च वर्तते ॥ ११७

समाकर्ण्य वचस्तस्य पृष्ठभागमगाद्यदा ।
तदैव ते समागत्य पुत्रीचोर इति क्रुधा ॥ ११८

जल्पन्तः कटुवाचोऽस्मिन् ववर्षुः सायकान् बहून् ।
वल्ली तदा भयोद्विग्ना संहरैतान् महाबलान् ॥ ११९

पालयस्व भयादस्मात् रक्ष मां प्राणनायक ।
इत्युवाच ततो देवं सर्वभूतहितोद्यतम् ॥ १२०

तच्छ्रुत्वा कुक्कुटं देवः तदास्मार्षीदुमासुतः ।
समागत्य जवेनायं महारावश्चकार हि ॥ १२१

निशम्य तं महारावं प्रलयाम्बुदनिस्वनम् ।
पतित्वा भूतले सर्वे जहुः प्राणान्भयातुराः ॥ १२२

हत्वा तानखिलान्व्याधान् निरगाद्देवनायकः ।
अनुसृत्य गुहं वल्ली प्रितृदुःखसमन्विता ॥ १२३

अवकुण्ठितसर्वाङ्गी चेलेनानुययौ द्विजाः ।
मध्ये मार्गं समागत्य तदा ब्रह्मात्मसम्भवः ॥ १२४

नारदस्तपतां श्रेष्ठो लीलामानुषविग्रहम् ।
प्रणम्य गुहमाकर्ण्य वृत्तान्तमनुपूर्वशः ॥ १२५

प्रार्थयामास देवेशं, सञ्जीव्य शबरान्मृतान् ।
एतत्पितृमुखान्स्वामिन् सर्वमङ्गलसंयुतः ॥ १२६

वल्लीपाणिग्रहं पश्चात् विधिना कुरु देवप ।
इति तस्य वचः श्रुत्वा लोकयात्राविधित्सया ॥ १२७

निवृत्तो नारदो नायं लवलीं वीक्ष्य सुन्दरीम् ।
मदाज्ञया त्वमेवाद्य त्वत्पितृप्रमुखान् मृतान् ॥ १२८
उज्जीवय वरारोहे वीक्ष्य दृष्ट्या दयान्विता ।
तथैवोज्जीवयामास सर्वानेतान् गुहप्रिया ॥ १२९
उत्थितेषु पुलिन्देषु स्वापादिव महीसुराः ।
स्वरूपन्दर्शयामास लीलामानुषविग्रहः ॥ १३०
देवसेनापतिन्दिव्यं षण्मुखं द्वादशेक्षणम् ।
युगव्यायतमन्दारमालाद्वादशसच्छयम् ॥ १३१
महोरस्कं महाग्रीवं अप्राकृतमनुत्तमम् ।
तं दृष्ट्वा ते गुहं व्याधाः प्रणेमुर्भयविह्वलाः ॥ १३२
तुष्टुवुः परया भक्त्या परिवृत्य समन्ततः ।
यदीदृशं कृतं देव मर्यादोल्लङ्घनं त्वया ॥ १३३
अपकीर्तिर्भवेदस्मत्कुलस्य खलु गर्हिता ।
तत्त्वमेनां विधानेन वोढुमर्हसि विश्वप ॥ १३४
इत्युक्त्वा ते प्रणेमुस्तं कुमारं जगतां गुरुम् ।
अङ्गीकृत्य वचस्तेषां कृपया देवनायकः ॥ १३५
नारदेन समं गत्वा पक्कणं व्याधसेवितम् ।
तस्थे व्याघ्रासने दिव्ये तद्दत्ते ब्राह्मणोत्तमाः ॥ १३६
तदा ददर्शुस्तां बालां दिव्यरूपां वरासने ।
त्यक्त्वा तन्मानुषं रूपं त्वचञ्जीर्णामिवोरगः ॥ १३७

परिणयविधौ भङ्क्त्वा अनङ्गद्विषो धनुरग्रतः
जनकसुतया दत्तां कण्ठे स्रजं हृदि धारयन् ।
कुसुमधनुषा पाशेनेव प्रसह्य वशीकृतः
अवनतवदनो रामः पायात् त्रपाविनयान्वितः ॥

शृङ्गारं क्षितिनन्दिनीविहरणे वीरं धनुर्भञ्जने
कारुण्यं बलिभोजनेऽद्भुतरसं सिन्धौ गिरिस्थापने ।
हास्यं शूर्पणखामुखे भयमघे बीभत्सं अन्यामुखे
रौद्रं रावणमर्दने मुनिजने शान्तं वपुः पातु माम् ॥

जलमादाय हस्तेन तदा धारां पुलिन्दपः ।
गुहाय वरवर्याय विधानेन द्विजोत्तमाः ॥　　१३८

अग्निकार्यन्तु ऋषिवरो नारदोऽप्यकरोत्तदा ।
प्रादुरासीत्तदा व्योम्नि पार्वतीसहितश्शिवः ॥　　१३९

ब्रह्मविष्ण्वादिभिः देवैः स्तूयमानपदाम्बुजः ।
स्थित्वा तत्र महादेवः कल्याणवपुषं गुहम् ॥　　१४०

अवलोकयदद्रीन्द्रसुतया लवलीमपि ।
नमश्चकार पत्न्या तं गुहो वेगात्समुत्थितः ॥　　१४१

ववर्षुरमरास्सर्वे पुष्पाणि शरजन्मनि ।
प्रणेमुर्दम्पती वल्लीगुहौ तौ विष्णुपूर्वकाः ॥　　१४२

अन्तर्दधे महादेवः क्षणेनैतैस्सुरोत्तमैः ।
व्याधनाथस्ततो व्याधैः स्त्रीभिर्देवाधिपं गुहम् ॥　　१४३

प्रणम्य प्राप सन्तोषं हृदयेऽयं भृशन्तदा ।
ववर्ष व्याधनाथोपि कुसुमानि गुहोपरि ॥　　१४४

एवन्नानोपचारेण पूजितो देवनायकः ।
प्रतस्थे श्रीपरीपूर्णं गिरिं परमशोभनम् ॥　　१४५

इति श्री स्कान्दे महापुराणे शङ्करसंहितायां शिवरहस्यखण्डे
देवकाण्डे वल्लीकल्याणं नाम पञ्चमोध्यायः सम्पूर्णः ॥

---

॥ श्रीः ॥

शुभं अस्तु

II

# श्री अरुन्धतीकल्याणम्

(शिवपुराणात् उद्धृतम्)

ब्रह्मोवाच—

वरं दत्वा मुने तस्मिन् शम्भावन्तर्हिते तदा ।
संध्याप्यगच्छत्तत्रैव यत्र मेधातिथिर्मुनिः ॥ १

तत्र शंभोः प्रसादेन न केनाप्युपलक्षिता ।
सस्मार वर्णिनं तं वै स्वोपदेशकरं तपः ॥ २

वसिष्ठेन पुरा सा तु वर्णी भूत्वा महामुने ।
उपदिष्टा तपश्चर्तुं वचनात्परमेष्ठिनः ॥ ३

तमेव कृत्वा मनसा तपश्चर्योपदेशकम् ।
पतित्वेन तदा सन्ध्या ब्राह्मणं ब्रह्मचारिणम् ॥ ४

समिद्धेऽग्नौ महायज्ञे मुनिभिर्नोपलक्षिता ।
दृष्टा शंभुप्रसादेन सा विवेश विधेः सुता ॥ ५

तस्याः पुरोडाशमयं शरीरं तत्क्षणात्ततः ।
दग्धं पुरोडाशगन्धं तस्तार यदलक्षितम् ॥ ६

वह्निस्तस्याश्शरीरं तु दग्ध्वा सूर्यस्य मण्डलम् ।
शुद्धं प्रवेशयामास शम्भोरेवाज्ञया पुनः ॥ ७

सूर्यो ह्यर्धं विभज्याथ तच्छरीरं तदा रथे ।
स्वके संस्थापयामास प्रीतये पितृदेवयोः ॥ ८

तदोर्ध्वभागस्तस्यास्तु शरीरस्य मुनीश्वर ।
प्रातस्सन्ध्याभवत्सा तु अहोरात्रादिमध्यगा ॥ ९

तच्छेषभागस्तस्यास्तु अहोरात्रान्तमध्यगा ।
सा सायमभवत्सन्ध्या पितृप्रीतिप्रदा सदा ॥ १०

सूर्योदयात्तु प्रथमं यदा स्यादरुणोदयः ।
प्रातस्सन्ध्या तदोदेति देवानां प्रीतिकारिणी ॥ ११

अस्तं गते ततः सूर्ये शोणिपद्मनिभे सदा ।
उदेति सायं सन्ध्यापि पितृणां मोदकारिणी ॥ १२

तस्याः प्राणास्तु मनसा शंभुनाऽथ दयालुना ।
दिव्येन तु शरीरेण चक्रिरे हि शरीरिणः ॥ १३

मुनेर्यज्ञावसाने तु संप्राप्ते मुनिना तु सा ।
प्राप्ता पुत्री वह्निमध्ये तप्तकाञ्चनसुप्रभा ॥ १४

तां जग्राह तदा पुत्रीं मुनिरामोदसंयुतः ।
यज्ञार्थं तां तु संस्नाप्य निजक्रोडे दधौ मुने ॥ १५

अरुन्धतीति तस्यास्तु नाम चक्रे महामुनिः ।
शिष्यैः परिवृतस्तत्र महामोदमवाप ह ॥ १६

न रुणद्धि यतो धर्मं सा कस्मादपि कारणात् ।
अतस्त्रिलोके विदितं नाम संप्राप तत्स्वयम् ॥ १७

यज्ञं समाप्य स मुनिः कृतकृत्यभावं
आसाद्य संमदयुतस्तनयाप्रलंभात् ।
तस्मिन्निजाश्रमपदे सह शिष्यवर्गैः
तामेव सन्ततमसौ दयते सुरर्षे ॥ १८

अथ सा ववृधे देवी तस्मिन् मुनिवराश्रमे ।
चन्द्रभागानदीतीरे तापसारण्यसंज्ञके ॥ १९

संप्राप्ते पञ्चमे वर्षे चन्द्रभागां तदा गुणैः ।
तापसारण्यमपि सा पवित्रमकरोत्सती ॥ २०

विवाहं कारयामासुः तस्याः ब्रह्मसुतेन वै ।
वसिष्ठेन ह्यरुन्धत्याः ब्रह्मविष्णुमहेश्वराः ॥ २१

तद्विवाहे महोत्साहो बभूव सुखवर्धनः ।
सर्वे सुराश्च मुनयः सुखमापुः परं मुने ॥ २२

ब्रह्मविष्णुमहेशानां करनिस्सृततोयतः ।
सप्त नद्यः समुत्पन्नाः शिप्राद्यास्सुपवित्रकाः ॥ २३

उरुन्धती महासाध्वी साध्वीनां प्रवरोत्तमा ।
वसिष्ठं प्राप्य संरेजे मेधातिथिसुता मुने ॥ २४

यस्याः पुत्राः समुत्पन्नाः श्रेष्ठाः शक्त्यादयः शुभाः ।
वसिष्ठं प्राप्य तं कान्तं संरेजे मुनिसत्तम ॥ २५

पवित्रं पावनं दिव्यं सर्वकामफलप्रदम् ।
य इदं शृणुयान्नारी पुरुषो वा शुभव्रतः ।
सर्वान्कामानवाप्नोति नात्र कार्या विचारणा ॥ २६

इति श्री शिवमहापुराणे द्वितीयायां रुद्रसंहितायां सतीखण्डे
अरुन्धतीकल्याणं नाम सप्तमोध्यायः सम्पूर्णः ॥

---

# श्री लोपामुद्राकल्याणम्

(महाभारत वनपर्वण उद्धृतम्)

अगस्त्यश्चापि भगवान् एतस्मिन् काल एव तु ।
पितॄन् ददर्श गर्ते वै लम्बमानान् अधोमुखान् ॥ १

सोऽपृच्छत् लम्बमानान् तान् भगवन्तश्च किं पराः ।
किमर्थं वेह लम्बध्वे गर्ते यूयमधोमुखाः ॥ २

संतानहेतोरिति ते प्रत्यूचुः ब्रह्मवादिनः ।
ते तस्मै कथयामासुः वयं ते पितरः स्वकाः ॥ ३

गर्तमेतं अनुप्राप्ताः लम्बामः प्रसवार्थिनः ।
यदि नो जनथेयास्त्वं अगस्त्यापत्यमुत्तमम् ॥ ४

स्यात् नोऽस्मात् निरयात् मोक्षः त्वं च पुत्राप्नुया गतिम् ।
स तानुवाच तेजस्वी सत्यधर्मपरायणः ।
करिष्ये पितरः कामं व्येतु वो मानसः ज्वरः ॥ ५

ततः प्रसवसन्तानं चिन्तयन् भगवान् ऋषिः ।
आत्मनः प्रसवस्यार्थे नापश्यत् सदृशीं स्त्रियम् ॥ ६

स तस्य तस्य सत्वस्य तत् तत् अङ्गमनुत्तमम् ।
संगृह्य तत्समैरङ्गैः निर्ममे स्त्रियमुत्तमाम् ॥ ७

स तां विदर्भराजाय पुत्रकाम्याय ताम्यते ।
निर्मितामात्मनोऽर्थाय मुनिः प्रादात् महातपाः ॥ ८

स तत्र जज्ञे सुभगा विद्युत्सौदामिनी यथा ।
विभ्राजमाना वपुषा व्यवर्धत शुभानना ॥ ९

जातमात्रां च तां दृष्ट्वा वैदर्भः पृथिवीपतिः ।
प्रहर्षेण द्विजातिभ्यः न्यवेदयत भारत ॥ १०

अभ्यनन्दत तां सर्वे ब्राह्मणा वसुधाधिप ।
लोपामुद्रेति तस्याश्च चक्रिरे नाम वै द्विजाः ॥ ११

ववृधे सा महाराज बिभ्रती रूपमुत्तमम् ।
अप्सु इव उत्पालिनी शीघ्रं अग्नेरिव शिखा शुभा ॥ १२

तां यौवनस्थां राजेन्द्र शतं कन्याः स्वलङ्कृताः ।
दास्यश्शतं च कल्याणीं उपतस्थुर्वशानुगाः ॥ १३

सा स्म दासीशतवृता मध्ये कन्याशतस्य च ।
आस्ते तेजस्विनी कन्या रोहिणीव दिवि प्रभा ॥ १४

यौवनस्थामपि च तां शीलाचारसमन्विताम् ।
न वव्रे पुरुषः कश्चित् भयात् तस्य महात्मनः ॥ १५

सातु सत्यवती कन्या रूपेणाप्सरसोऽप्यति ।
तोषयामास पितरं शीलेन स्वजनं तथा ॥ १६

वैदर्भी तु तथायुक्तां युवतीं प्रेक्ष्य वै पिता ।
मनसा चिन्तयामास कस्मै दद्यामिमां सुताम् ॥ १७

यदा तु अमन्यत अगस्त्यो गार्हस्थ्ये तां क्षमामिति ।
तदाभिगम्य प्रोवाच वैदर्भं पृथिवीपतिम् ॥ १८

राजन् निवेशे बुद्धिर्मे वर्तते पुत्रकारणात् ।
वरये त्वां महीपाल लोपामुद्रां प्रयच्छ मे ॥ १९

एवमुक्तः स मुनिना महीपालो विचेतनः ।
प्रत्याख्यानाय चाशक्तः प्रदातुं चैव नैच्छत ॥ २०

ततः स भार्यामभ्येत्य प्रोवाच पृथिवीपतिः ।
महर्षिः वीर्यवान् एषः क्रुद्धः शापाग्निना दहेत् ॥ २१

तं तथा दुःखितं दृष्ट्वा सभार्यं पृथिवीपतिम् ।
लोपामुद्राभिगम्येदं काले वचनमब्रवीत् ॥ २२

न मत्कृते महीपाल पीडामभ्येतुमर्हसि ।
प्रयच्छ मां अगस्त्याय त्राहि आत्मानं मया पितः ॥ २१

दुहितुर्वचनात् राजा सोऽगस्त्याय महात्मने ।
लोपामुद्रां ततः प्रादात् विधिपूर्वं विशांपते ॥ २४

प्राप्य भार्यामगस्त्यस्तु लोपामुद्रां अभाषत ।
महार्हाणि उत्सृजैतानि वासांस्याभरणानि च ॥ २५

ततः सा दर्शनीयानि महार्हाणि तनूनि च ।
समुत्ससर्ज रम्भोरूः वसनान्यायतेक्षणा ॥ २६
ततश्चीराणि जग्राह वल्कलान्यजिनानि च ।
समानव्रतचर्या च बभूवायतलोचना ॥ २७
सा प्रीत्या बहुमानाच्च मतिं पर्यचरत्तदा ।
अगस्त्यश्च परां प्रीतिं भार्यायां अगमत् प्रभुः ॥ २८

इति महाभारतात् उद्धृतं लोपामुद्राकल्याणं संपूर्णम् ॥

---

# श्री अहल्याकल्याणम्

( ब्राह्मपुराणात् उद्धृतम् )

ब्रह्मोवाच—

कौतुकेन अतिमहता मया पूर्वं मुनीश्वर ।
सृष्टाः कन्याः बहुविधा रूपवत्यो गुणान्विताः ॥ १
तासामेकां श्रेष्ठतमां निर्ममे शुभलक्षणाम् ।
तां बालां चारुसर्वाङ्गीं दृष्ट्वा रूपगुणान्विताम् ॥ २
कोऽस्याः पोषणे शक्तः इति मे बुद्धिराविशत् ।
न दैत्यानां सुराणां च न मुनीनां तथैव च ॥ ३
नास्ति अस्याः पोषणे शक्तिः इति मे बुद्धिराविशत् ।
गुणज्येष्ठाय विप्राय तपोयुक्ताय धीमते ॥ ४

सर्वलक्षणयुक्ताय वेदवेदाङ्गवेदिने ।
गौतमाय महाप्राज्ञां अददां पोषणाय ताम् ॥ ५
पालयस्व मुनिश्रेष्ठ यावत् आप्स्यति यौवनम् ।
यौवनस्थां पुनस्साध्वीं आनयेथाः ममान्तिकम् ॥ ६
एवं उक्त्वा गौतमाय प्रादां कन्यां सुमध्यमाम् ।
तामादाय मुनिश्रेष्ठः तपसा हतकल्मषः ॥ ७
तां पोषयित्वा विधिवत् अलङ्कृत्य ममान्तिकम् ।
निर्विकारो मुनिश्रेष्ठः हि अहल्यां आनयत् ततः ॥ ८
तां दृष्ट्वा विबुधाः सर्वे शक्राग्निवरुणादयः ।
मम देया सुरेशान इत्यूचुस्ते पृथक् पृथक् ॥ ९
तथैव मुनयः साध्याः दानवाः यक्षराक्षसाः ।
तान् सर्वान् आगतान् दृष्ट्वा कन्यार्थमथ सङ्गतान् ॥ १०
इन्द्रस्य तु विशेषेण महान् च अभूत् तदाग्रहः ।
गौतमस्य तु माहात्म्यं गाम्भीर्यं धैर्यमेव च ॥ ११
स्मृत्वा सुविस्मितो भूत्वा ममैवं अभवत् सुधीः ।
देया इयं गौतमायैव न अन्ययोग्या शुभानना ॥ १२
तस्मा एव तु तां दास्ये तथापि एवं अचिन्तयम् ।
सर्वेषां च मतिः धैर्यं मथितं बालया अनया ॥ १३
अहल्येति सुरैः प्रोक्ता मया च ऋषिभिस्तदा ।
देवान् ऋषीन् तदा वीक्ष्य मया तत्रोक्तं उच्चकैः ॥ १४

तस्मै सा दीयते सुभ्रूः यः पृथिव्याः प्रदक्षिणम् ।
कृत्वा उपतिष्ठते पूर्वं न च अन्यस्मै पुनः पुनः ॥ १५
ततः सर्वे सुरगणाः श्रुत्वा वाक्यं मयेरितम् ।
अहल्यार्थं सुरा जग्मुः पृथिव्याश्च प्रदक्षिणे ॥ १६
गतेषु सुरसंघेषु गौतमोऽपि मुनीश्वर ।
प्रयत्नं अकरोत् कश्चित् अहल्यार्थमिमं तथा ॥ १७
एतस्मिन् अन्तरे ब्रह्मन् सुरभिः सर्वकामधुक् ।
अर्धप्रसूता हि अभवत् तां ददर्श स गौतमः ॥ १८
तस्याः प्रदक्षिणं चक्रे इयमुर्वीति संस्मरन् ।
लिङ्गस्य च सुरेशस्य प्रदक्षिणमथाकरोत् ॥ १९
तयोः प्रदक्षिणं कृत्वा गौतमो मुनिसत्तमः ।
सर्वेषां चैव देवानां एकं चापि प्रदक्षिणम् ॥ २०
नैवाभवत् भुवो गन्तुः संजातं द्वितयं मम ।
एवं निश्चित्य स मुनिः ममान्तिकं अथाभ्यगात् ॥ २१
नमस्कृत्वा अब्रवीत् वाक्यं गौतमो मां महामतिः ।
कमलासन विश्वात्मन् नमस्तेऽस्तु पुनः पुनः ॥ २२
प्रदक्षणीकृता ब्रह्मन् मयेयं वसुधा अखिला ।
यदत्र युक्तं देवेश जानीते तत् भवान् स्वयम् ॥ २३
अहं तु ध्यानयोगेन ज्ञात्वा गौतममब्रवम् ।
तथैव दीयते सुभ्रूः प्रदक्षिणमिदं कृतम् ॥ २४

धर्मं जानीहि विप्रर्षे दुर्ज्ञेयं निगमैरपि ।
अर्धप्रसूता सुरभिः सप्तद्वीपवती मही ॥ २५

कृता प्रदक्षिणा तस्याः पृथिव्यास्सा कृता भवेत् ।
लिङ्गं प्रदक्षिणीकृत्य तदेव फलमाप्नुयात् ॥ २६

तस्मात् सर्वप्रयत्नेन मुने गौतम सुव्रत ।
तुष्टोऽहं तव धैर्येण ज्ञानेन तपसा तथा ॥ २७

दत्ता इयं ऋषिशार्दूल कन्या लोकवरा मया ।
इत्युक्त्वाहं गौतमाय अहल्यां अददां मुने ॥ २८

जाते विवाहे ते देवाः कृत्वा इलायाः प्रदक्षिणम् ।
शनैः शनैः अथागत्य ददृशुः सर्व एव ते ॥ २९

तं गौतमं अहल्यां च दाम्पत्यं प्रीतिवर्धनम् ।
ते च आगत्याथ पश्यन्तो विस्मिताश्चाभवन् सुराः ॥ ३०

इदं यशस्यमायुष्यं सुखदं कीर्तिवर्धनम् ।
बलपुष्टिप्रदं नृणां धन्यं दुःस्वप्ननाशनम् ॥ ३१

त्रिसन्ध्यं यः पठेत् विद्वान् श्रद्धया सुसमाहितः ।
इदं वरिष्ठं आख्यानं स सर्वं ईप्सितं लभेत् ॥ ३२

जातिस्मरत्वं विद्यां च पुत्रान् मेधां पशून् धृतिम् ।
धर्मं चार्थं च कामं च मोक्षं तु लभते नरः ॥ ३३

यान् यान् कामान् अभिप्रेत्य पठेत् प्रयतमानसः ।
तान् तान् सर्वानवाप्नोति पुरुषो नात्र संशयः ॥ ३४

इति व्यासप्रणीते ब्रह्मपुराणे सप्ताशीतितमेऽध्याये अहल्याकल्याणं सम्पूर्णम् ॥

---

## श्रीं शान्ताकल्याणम्

(महाभारत वनपर्वण उद्धृतम्)

विभाण्डकस्य ब्रह्मर्षेः तपसा भावितात्मनः ।
अमोघवीर्यस्य सतः प्रजापतिसमद्युतेः ॥ १

शृणु पुत्रो यथा जातः ऋष्यशृङ्गः प्रतापवान् ।
महास्थिरः महातेजाः बालः स्थविरसम्मतः ॥ २

महाह्रदं समासाद्य काश्यपः तपसि स्थितः ।
दीर्घकालं परिश्रान्तः ऋषिः देवर्षिसम्मतः ॥ ३

तस्य रेतः प्रचस्कन्द दृष्ट्वा अप्सरसं उर्वशीम् ।
अप्सूपस्पृशतो राजन् मृगी तच्च अपिबत् तदा ॥ ४

सह तोयेन तृषिता गर्भिणी च अभवत् ततः ।
सा पुरोक्ता भगवता ब्रह्मणा लोककर्तृणा ॥ ५

देवकन्या मृगी भूत्वा मुनिं सूय विमोक्ष्यसे ।
अमोघत्वात् विधेश्चैव भावित्वात् दैवनिर्मितात् ॥ ६

तस्यां मृग्यां समभवत् तस्य पुत्रो महान् ऋषिः ।
ऋष्यशृङ्गः तपोनित्यः वन एव अभ्यवर्तत ॥ ७

तस्य शृङ्गं शिरसि वै राजन् आसीत् महात्मनः ।
तेन ऋष्यशृङ्ग इत्येवं तदा स प्रतिथोऽभवत् ॥    ८

न तेन दृष्टपूर्वोऽन्यः पितुरन्यत्र मानुषः ।
तस्मात् तस्य मनो नित्यं ब्रह्मचर्येऽभवत् नृप ॥    ९

एतस्मिन्नेव काले तु सखा दशरथस्य वै ।
लोमपाद इति ख्यातः अङ्गानां ईश्वरोऽभवत् ॥    १०

पुरोहितापचाराच्च तस्य राज्ञो यदृच्छया ।
न ववर्ष सहस्राक्षः ततोऽपीड्यन्त वै प्रजाः ॥    ११

स ब्राह्मणान् पर्यपृच्छत् तपोयुक्तान् मनीषिणः ।
कथं प्रवर्षेत् पर्जन्यः उपायः परिमृश्यताम् ॥    १२

तत्र तु एको मुनिवरः तं राजानं उवाच ह ।
ऋश्यशृङ्गं मुनिवरं आनयस्व च पार्थिव ॥    १३

ऐणेयं अनभिज्ञं च नारीणां, आर्जवे रतम् ।
स चेत् अवतरेत् राजन् विषयं ते महातपाः ॥    १४

सद्यः प्रवर्षेत् पर्जन्यः इति मे नास्ति संशयः ।
ततश्च आनययामास वारमुख्या महीपतिः ॥    १५

वेश्याः सर्वत्र निष्णाताः ता उवाच स पार्थिवः ।
ऋश्यशृङ्गं ऋषेः पुत्रं आनयध्वं उपायतः ॥    १६

तत्र तु एका जरद्योषा राजनमिदं अब्रवीत् ।
प्रयतिष्ये महाराज तमानेतुं तपोधनम् ॥    १७

ततो रूपेण सम्पन्नाः वयसा च महीपते ।
स्त्रिय आदाय काश्चित् सा जगाम वनं अञ्जसा ॥ १८
सा तु नाव्याश्रमं चक्रे राजकार्यार्थसिद्धये ।
सन्देशाच्चैव नृपतेः स्वबुद्धया चैव भारत ॥ १९
नानापुष्पफलैः वृक्षैः कृत्रिमैः उपशोभितैः ।
नानागुल्मलतोपेतैः स्वादुकामफलप्रदैः ॥ २०
अतीव रमणीयं तत् अतीव च मनोहरम् ।
चक्रे नाव्याश्रमं रम्यं अद्भुतोपमदर्शनम् ॥ २१
ततो निबध्य सा नावं अदूरे काश्यपाश्रमात् ।
चारयामास पुरुषैः विहारं तस्य वै मुनेः ॥ २२
ततो दुहितरं वेश्यां समाधायेतिकार्यताम् ।
दृष्ट्वाऽन्तरं काश्यपस्य प्राहिणोत् बुद्धिसम्मताम् ॥ २३
सा तत्र गत्वा कुशला तपोनित्यस्य सन्निधौ ।
आश्रमं तं समासाद्य ददर्श तं ऋषेः सुतम् ॥ २४
कच्चिन्मुने कुशलं तापसानां
कच्चिच्च वो मूलफलं प्रभूतम् ।
कच्चित् भवान् रमते च आश्रमेऽस्मिन्
त्वां वै द्रष्टुं साम्प्रतमागतास्मि ॥ २५
कच्चित् तपो वर्धते ब्राह्मणानां
पिता च ते कच्चित् अहीनतेजाः ।

कच्चित् त्वया प्रीयते चैव विप्र
कच्चित् स्वाध्यायः क्रियते च ऋश्यशृङ्ग ॥ २६

ऋश्यशृङ्ग उवाच—

ऋद्धया भवान् ज्योतिरिव प्रकाशते
मन्ये चाहं त्वां अभिवादनीयम् ।
पाद्यं वै ते संप्रदास्यामि कामात्
यथा धर्मं फलमूलानि चैव ॥ २७
कौश्यां बृस्यां आस्व यथोपजोषं
कृष्णाजिनेनावृतायां सुखाय ।
क्व च आश्रमः तव किं नाम चेदम्
व्रतं ब्रह्मन् चरसि हि देववत् त्वम् ॥ २८

वेश्या उवाच—

ममाश्रमः काश्यपपुत्र रम्यः
त्रियोजनं शैलमिमं परेण ।
तत्र स्वधर्मोऽनभिवादनं नो
न च उदकं पाद्यं उपस्पृशामः ॥ २९
भवता नाभिवाद्योऽहं अभिवाद्यो भवान् मया ।
व्रतं एतादृशं ब्रह्मन् परिष्वज्यो भवान् मया ॥ ३०
फलानि पक्वानि ददानि तेऽहं
भल्लातकानि आमलकानि चैव ।

करूषकानि इङ्गुदधन्वनानि
प्रियालानां कांक्षितं वै कुरुष्व ॥ ३१
सा तानि सर्वाणि विसर्जयित्वा
भक्ष्याणि अनर्हाणि ददौ ततोऽस्मै ।
तानि ऋश्यश्रृङ्गाय महारसानि
भृशं सुरूपाणि च मोदकानि ॥ ३२
ददौ च माल्यानि सुगन्धवन्ति
चित्राणि वासांसि च भानुमन्ति ।
पेयानि च अग्र्याणि ततो मुमोद
चिक्रीड चैव प्रजहास चैव ॥ ३३
सा कन्दुकेनारमतास्य मूले
विभज्यमाना फलिता लतेव ।
गात्रैश्च गात्राणि निषेवमाणा
समाश्लिषत् च असकृत् ऋश्यश्रृङ्गम् ॥ ३४
अथ ऋश्यश्रृङ्गं विकृतं समीक्ष्य
पुनः पुनः पीड्य च कायमस्य ।
अवेक्ष्यमाणा शनकैर्जगाम
कृत्वा अग्निहोत्रस्य तदापदेशम् ॥ ३५
तस्यां गतायां मदनेन मत्तः विचेतनश्चाभवदृश्यश्रृङ्गः ।
तामेव भावेन गतेन शून्ये विनिश्वसन् आर्तरूपो बभूव ॥

ततो मुहूर्तात् हरिपिङ्गलाक्षः
प्रवेष्टितो रोमभिरानखाग्रात् ।
स्वाध्यायवान् वृत्तसमाधियुक्तः
विभाण्डकः काश्यपः प्रादुरासीत् ॥ ३७

सोऽपश्यदासीनं उपेत्य पुत्रं
ध्यायन्तमेकं विपरीतचित्तम् ।
विनिःश्वन्तं मुहुरूर्ध्वदृष्टिं
विभाण्डकः पुत्रमुवाच दीनम् ॥ ३८

न कल्पिताः समिधः किं नु तात
कच्चिद्धुतं चाग्निहोत्रं त्वयाऽद्य ।
न संसृष्टं क्रियते द्वारभागे
सुवृक्षाणां खण्डने कः प्रवृत्तः ॥ ३९

सुनिर्णिक्तं स्रुक्स्रुवं होमधेनुः
कच्चित् सवत्साद्य कृता त्वया च ।
कोऽप्यागतः शुश्रूषणायेह पुत्र
कुतश्चित्रं माल्यमिदं प्रवृद्धम् ॥ ४०

न वै यथापूर्वमिवासि पुत्र
चिन्तापरश्चासि विचेतनश्च ।
दीनोऽतिमात्रं किमिवाद्य खिन्नः
पृच्छामि त्वां क इहागतोऽभूत् ॥ ४१

ऋश्यशृङ्ग उवाच—

इहागतो जटिलो ब्रह्मचारी
न वै ह्रस्वो नातिदीर्घो मनस्वी।
सुवर्णवर्णः कमलायताक्षः सुतः
सुराणामिव शोभमानः॥ ४२

समृद्धरूपः सवितेव दीप्तः
सुश्लक्षणवाक् कृष्णतारश्चकोरात्।
नीलाः प्रसन्नाश्च जटाः सुगन्धाः
हिरण्यरज्जुग्रथिताः सुदीर्घाः॥ ४३

अधारभूता पुनरस्य कण्ठे
विभ्राजते विद्युदिवान्तरिक्षे।
द्वौ चास्य पिण्डौ अधरेण कण्ठात्
अजातरोमौ सुमनोहरौ च॥ ४४

विलग्नमध्यश्च स नाभिदेशे
कटिश्च तस्यातिकृतप्रमाणा।
तथाऽस्य चीरान्तरतः प्रभाति
हिरण्मयी मेखला मे यथेयम्॥ ४५

अन्यच्च तस्याद्भुतदर्शनीयं
विकूजितं पादयोः संप्रभाति।
पाण्योश्च तद्वत्स्वनवत् निबद्धौ
कलापकावक्षमाला यथेयम्॥ ४६

विचेष्टमानस्य च तस्य तानि
कूजन्ति हंसा सरसीव मत्ताः ।
चीराणि तस्य अद्भुतदर्शनानि
नेमानि तद्वन्मम रूपवन्ति ॥ ४७

वक्त्रं च तस्याद्भुतदर्शनीयं
प्रव्याहृतं ह्लादयतीव चेतः ।
पुंस्कोकिलस्येव च तस्य वाणी
तां शृण्वतो मे व्यथितोऽन्तरात्मा ॥ ४८

यथा वनं माधवमासिमध्ये
समीरितं श्वसनेनेव भाति ।
तथा स भात्युत्तमपुण्यगन्धी
निषेव्यमाणः पवनेन तात ॥ ४९

सुसंयताश्चापि जटा विभक्ता
द्वैधीकृता भाति ललाटदेशे ।
कर्णौ च चित्रैरिव चक्रवाकैः
समावृतौ तस्य सुरूपवद्भिः ॥ ५०

तथा फलं वृत्तमथो विचित्रं
समाहतं पाणिना दक्षिणेन ।
तत् भूमिमासाद्य पुनः पुनश्च
समुत्पतत्यद्भुतरूपमुच्चैः ॥ ५१

तच्चाभिहत्वा परिवर्ततेऽसौ
वातेरितो वृक्ष इवावघूर्णन् ।
तं प्रेक्षतः पुत्रमिवामराणां
प्रीतिः परा तात रतिश्च जाता ॥ ५२

स मे समाश्लिष्य पुनः शरीरं
जटासु गृह्याभ्यवनाम्य वक्त्रम् ।
वक्त्रेण वक्त्रं प्रणिदाय शब्दं
चकार तत् मेऽजनयत् प्रहर्षम् ॥ ५३

न चापि पाद्यं बहुमन्यतेऽसौ
फलानि चेमानि मयाहृतानि ।
एवं व्रतोऽस्मीति च मामवोचत् ।
फलानि चान्यानि नवान्यदान्मे ॥ ५४

मयोपयुक्तानि फलानि यानि
नेमानि तुल्यानि रसेन तेषाम् ।
न चापि तेषां त्वगियं यथैषां
साराणि नैषामिव सन्ति तेषाम् ॥ ५५

तोयानि चैवातिरसानि मह्यं
प्रादात् स वै पातुं उदाररूपः ।
पीत्वैव यान्यभ्यधिकः प्रहर्षः
ममाभवत् भूः चलितेव चासीत् ॥ ५६

इमानि चित्राणि च गन्धवन्ति
　　माल्यानि तस्योद्ग्रथितानि पट्टैः ।
यानि प्रकीर्येह गतस्स्वमेव
　　स आश्रमं तपसा द्योतमानः ॥ ५७

गतेन तेनास्मि कृतो विचेताः
　　गात्रं च मे सम्परिदह्यतीव ।
इच्छामि तस्यान्तिकमाशु गन्तुं
　　तं चेह नित्यं परिवर्तमानम् ॥ ५८

इच्छामि तस्यान्तिकमेव तात
　　का नाम च ब्रह्मचर्या च तस्य ।
इच्छाम्यहं चरितुं तेन सार्धं
　　यथा तपः स चरत्यार्यधर्मा ॥ ५९

बिभाण्डक उवाच—

रक्षांसि चैतानि चरन्ति पुत्र
　　रूपेण तेनाद्भुतदर्शनेन ।
अतुल्यवीर्याण्यभिरूपवन्ती
　　विघ्नं सदा तपसः चिन्तयन्ति ॥ ६०

सुरूपरूपाणि च तानि तात
　　प्रलोभयन्ते विविधैरुपायैः ।
सुखाच्च लोकाच्च निपातयन्ति ।
　　तान्युग्ररूपाणि मुनीन् वनेषु ॥ ६१

न तानि सेवेत मुनिर्यतात्मा
सतां लोकान् प्रार्थयानः कथञ्चित् ।
कृत्वा विघ्नं तापसानां रमन्ते
पापाचारास्तापसास्तान्न पश्येत् ॥ ६२

असज्जनेनाचरितानि पुत्र
पानान्यपेयानि मधूनि तात ।
माल्यानि चैतानि न वै मुनीनां
स्मृतानि चित्रोज्ज्वलगन्धवन्ति ॥ ६३

रक्षांसि तानीति निवार्य पुत्रं
विभाण्डकस्तां मृगयाम्बभूव ।
नासादयामास यदा त्र्यहेण
तदा स पर्यावावृते आश्रमाय ॥ ६४

यदा पुनः काश्यपो वै जगाम
फलान्याहर्तुं विधिनाश्रमेऽसौ ।
तदा पुनर्लोभयितुं जगाम
सा वेशयोषा मुनिमृश्यश्रृङ्गम् ॥ ६५

दृष्ट्वैव तां ऋश्यश्रृङ्गः प्रहृष्टः
स भ्रान्तरूपोऽभ्यपतत् तदानीम् ।
प्रोवाच चैनां भवतः श्रमाय
गच्छाव यावन्न पिता ममैति ॥ ६६

ततो राजन् कश्यपस्यैकपुत्रं
प्रवेश्य वेगेन विमुच्य नावम् ।
प्रलोभयन्त्यो विविधैरुपायैः
आजग्मुरङ्गाधिपतेस्समीपम् ॥ ६७

संस्थाप्य तामाश्रमदर्शने तु
संतारितां नावमथातिशुभ्राम् ।
नीरादुपादाय तथैव चक्रे
नाव्याश्रमं नाम वनं विचित्रम् ॥ ६८

अन्तःपुरे तं तु निवेश्य राजा
विभाण्डकस्यात्मजमेकपुत्रम् ।
ददर्श मेघैः सहसा प्रवृष्टं
आपूर्यमाणं च जगत् जलेन ॥ ६९

स रोमपादः परिपूर्णकामः
सुतां ददौ ऋश्यशृङ्गाय शान्ताम् ।
क्रोधप्रतीकारकरं च चक्रे
गोभिश्च मार्गेषु अभिकर्षणञ्च ॥ ७०

विभाण्डकस्याव्रजतः स राजा
पशून् प्रभूतान् पशुपांश्च वीरान् ।
समादिशत् पुत्रगृद्धी महर्षिः
विभाण्डकः परिपृच्छेत् यदा वः ॥ ७१

स वक्तव्यः प्राञ्जलिभिः भवद्भिः
पुत्रस्य ते पशवः कर्षणं च ।
किं ते प्रियं वै क्रियतां महर्षे
दासाः स्म सर्वे तव वाचि बद्धाः ॥ ७२

अथोपयात् स मुनिश्चण्डकोपः
स्वमाश्रमं मूलफलं गृहीत्वा ।
अन्वेषमाणश्च न तत्र पुत्रं
ददर्श चुक्रोध ततो भृशं सः ॥ ७३

ततः स कोपेन विदीर्यमाणः
आशङ्कमानो नृपतेर्विधानम् ।
जगाम चम्पां प्रतिधक्ष्यमाणः
तमङ्गराजं सपुरं सराष्ट्रम् ॥ ७४

स वै श्रान्तः क्षुधितः काश्यपस्तान्
घोषान् समासादितवान् समृद्धान् ।
गोपैश्च तैः विधिवत् पूज्यमानः
राजेव तां रात्रिमुवास तत्र ॥ ७५

अवाप्य सत्कारमतीव हृष्टः
प्रोवाच कस्य प्रथिताः स्थ गोपाः ।
ऊचुस्ततस्तेऽभ्युपगत्य सर्वे
धनं तवेदं विहितं सुतस्य ॥ ७६

देशेषु देशेषु स पूज्यमानः
तांश्चैव शृण्वन् मधुरान् प्रलापान् ।
प्रशान्तभूयिष्ठरजाः प्रहृष्टः
समाससाद अङ्गपतिं पुरस्थम् ॥ ७७

स पूजितस्तेन नरर्षभेण
ददर्श पुत्रं दिवि देवं यथेन्द्रम् ।
शान्तां स्नुषां चैव ददर्श तत्र
सौदामिनीमुच्चरन्तीं यथैव ॥ ७८

ग्रामांश्च घोषांश्च सुतस्य दृष्ट्वा
शान्तां च शान्तोऽस्य परः स कोपः ।
चकार तस्यैव परं प्रसादं
विभाण्डको भूमिपतेः नरेन्द्र ॥ ७९

स तत्र निक्षिप्य सुतं महर्षिः
उवाच सूर्याग्निसमप्रभावः ।
जाते च पुत्रे वनमेवाव्रजेथाः
राज्ञः प्रियाणि अस्य सर्वाणि कृत्वा ॥ ८०

स तद्वचः कृतवानृश्यशृङ्गः
ययौ च यत्रास्य पिता बभूव ।
शान्ता चैनं पर्यचरत् नरेन्द्र
खे रोहिणी सोममिवानुकूला ॥ ८१

अरुन्धती वा सुभगा वसिष्ठं
लोपामुद्रा वा यथा हि अगस्त्यम् ।
नलस्य वै दमयन्ती यदाभूत्
यथा शची वज्रधरस्य चैव ॥ ८२

नलायनी चेन्द्रसेना बभूव वश्या नित्यं मुद्गलस्याजमीढ ।
यथा सीता दाशरथेर्महात्मनः यथा तव द्रौपदी पाण्डुपुत्र ।
तथा शान्ता ऋश्यश्रृङ्गं वनस्थं प्रीत्या युक्ता पर्यचरत् नरेन्द्र ॥

इति महाभारतात् उद्धृतं वनपर्वीयं शान्ताकल्याणं संपूर्णम् ॥

---

## श्री सावित्रीकल्याणम्

(महाभारतवनपर्वण उद्धृतम्)

आसीन्मद्रेषु धर्मात्मा राजा परमधार्मिकः ।
ब्रह्मण्यश्च महात्मा च सत्यसन्धो जितेन्द्रियः ॥ १

यज्वा दानपतिर्दक्षो पौरजानपदप्रियः ।
पार्थिवोऽश्वपतिर्नाम सर्वभूतहिते रतः ॥ २

क्षमावान् अनपत्यश्च सत्यवाक् विजितेन्द्रियः ।
अतिक्रान्तेन वयसा संतापमुपजग्मिवान् ॥ ३

अपत्योत्पादनार्थं च तीव्रं नियममास्थितः ।
काले परिमिताहारः ब्रह्मचारी जितेन्द्रियः ॥ ४

हुत्वा शतसहस्रं च सावित्र्या राजसत्तम ।
षष्ठे षष्ठे तदा काले बभूव मितभोजनः ॥ ५

एतेन नियमेनासीत् वर्षाण्यष्टादशैव तु ।
पूर्णे तु अष्टादशे वर्षे सावित्री तुष्टिमभ्यगात् ॥ ६

रूपिणी तु तदा राजन् दर्शयामास तं नृपम् ।
अग्निहोत्रात् समुत्थाय हर्षेण महतान्विता ॥ ७

उवाच चैनं वरदा वचनं पार्थिवं तदा ।
सा तं अश्वपतिं राजन् सावित्रीनियमे स्थितम् ॥ ८

ब्रह्मचर्येण शुद्धेन दमेन नियमेन च ।
सर्वात्मना च भक्त्या च तुष्टास्मि तव पार्थिव ॥ ९

वरं वृणीष्व अश्वपते मद्रराज यदीप्सितम् ।
न प्रमादश्च धर्मेषु कर्तव्यस्ते कथञ्चन ॥ १०

अश्वपतिरुवाच—

अपत्यार्थः समारम्भो कृतो धर्मेप्सया मया ।
पुत्रा मे बहवो देवि भवेयुः कुलभावनाः ॥ ११

तुष्टासि यदि मे देवि वरमेत वृणोम्यहम् ।
सन्तानं परमो धर्म इत्याहुर्मां द्विजातयः ॥ १२

सावित्र्युवाच—

पूर्वमेव मया राजन् अभिप्रायमिमं तव ।
ज्ञात्वा पुत्रार्थमुक्तो वै भगवांस्ते पितामहः ॥ १३

प्रसादाच्चैव तस्मात्ते स्वयं विहितवत्यहम् ।
कन्या तेजस्विनी सौम्य क्षिप्रमेव भविष्यति ॥ १४
उत्तरञ्च न ते किञ्चित् व्याहर्तव्यं कथञ्चन ।
पितामहनियोगेन तुष्टा हि एतत् ब्रवीमि ते ॥ १५
स तथेति प्रतिज्ञाय सावित्र्या वचनं नृपः ।
प्रसादयामास पुनः क्षिप्रं एतत् भविष्यति ॥ १६
अन्तर्हितायां सावित्र्यां जगाम स्वपुरं नृपः ।
स्वराज्ये च अवसद्वीरः प्रजा धर्मेण पालयन् ॥ १७
कास्मिंश्चित्तु गते काले स राजा नियतव्रतः ।
ज्येष्ठायां धर्मचारिण्यां महिष्यां गर्भमादधे ॥ १८
राजपुत्र्यास्तु गर्भस्सः मानव्या भरतर्षभ ।
व्यवर्धत तदा शुक्ले तारापतिरिवाम्बरे ॥ १९
प्राप्ते काले तु सुषुवे कन्यां राजीवलोचनाम् ।
क्रियाश्च मुदितश्चक्रे यथाविधि नृपोत्तमः ॥ २०
सावित्र्या प्रीतया दत्ता सावित्र्या हुतया हि अपि ।
सावित्रीत्येव नामास्याः चक्रुर्विप्रास्तथा पिता ॥ २१
सा विग्रहवतीव श्रीः व्यवर्धत नृपात्मजा ।
कालेन चापि सा कन्या यौवनस्था बभूव ह ॥ २२
तां सुमध्यां पृथुश्रोणीं प्रतिमां काञ्चनीमिव ।
प्राप्तेयं देवकन्येति दृष्ट्वा संमेनिरे जनाः ॥ २३

तां तु पद्मपलाशाक्षीं ज्वलन्तीमिव तेजसा ।
न कश्चित् वरयामास तेजसा प्रतिवारितः ॥ २४

अथोपोष्य शिरःस्नाता देवतामभिगम्य सा ।
हुत्वाग्निं विधिवत् विप्रान् वाचयामास पर्वणि ॥ २५

ततः सुमनसः शेषाः प्रतिगृह्य महात्मनः ।
पितुस्समीपमगमत् देवी श्रीरिव रूपिणी ॥ २६

सा अभिवाद्य पितुः पादौ शेषाः पूर्वं निवेद्य च ।
कृताञ्जलिः वरारोहा नृपतेः पार्श्वमास्थिता ॥ २७

यौवनस्थां तु तां दृष्ट्वा स्वां सुतां देवरूपिणीम् ।
अयाच्यमानां च वरैः नृपतिर्दुःखितोऽभवत् ॥ २८

राजोवाच—

पुत्रि प्रदानकालस्ते न च कश्चित् वृणोति माम् ।
स्वयमन्विच्छ भर्तारं गुणैस्सदृशमात्मनः ॥ २९

प्रार्थितः पुरुषो यश्च स निवेद्यस्त्वया मम ।
विमृश्याहं प्रदास्यामि वरय त्वं यथेप्सितम् ॥ ३०

श्रुतं हि धर्मशास्त्रेषु पठ्यमानं द्विजातिभिः ।
तथा त्वमपि कल्याणि गदतो मे वचः शृणु ॥ ३१

अप्रदाता पिता वाच्यो वाच्यश्चनुपयन्पतिः ।
मृते पितरि पुत्रश्च वाच्यो मातुररक्षिता ॥ ३२

इदं मे वचनं श्रुत्वा भर्तुरन्वेषणे त्वर ।

देवतानां यथा वाच्यो न भवेयं तथा कुरु ॥ ३३
एवमुक्त्वा दुहितरं तथा वृद्धांश्च मन्त्रिणः ।
व्यादिदेशानुयात्रं च गम्यतां चेत्यचोदयत् ॥ ३४
सा अभिवाद्य पितुः पादौ व्रीडितेव मनस्विनी ।
पितुर्वचनमाज्ञाय निर्जगामाविचारितम् ॥ ३५
सा हैमं रथमास्थाय स्थविरैस्सचिवैर्वृता ।
तपोवनानि रम्याणि राजर्षीणां जगाम ह ॥ ३६
मान्यानां तत्र वृद्धानां कृत्वा पादाभिवादनम् ।
वनानि क्रमशस्तात सर्वाण्येवाभ्यगच्छत ॥ ३७
एवं सर्वेषु तीर्थेषु धनोत्सर्गं नृपात्मजा ।
कुर्वती द्विजमुख्यानां तं तं देशं जगाम ह ॥ ३८
ततोऽभिगम्य तीर्थानि सर्वाण्येवाश्रमांस्तथा ।
आजगाम पितुर्वेश्म सावित्री सह मन्त्रिभिः ॥ ३९
नारदेन सहासीनं सा दृष्ट्वा पितरं शुभा ।
उभयोरेव शिरसा चक्रे पादाभिवन्दनम् ॥ ४०
सा ब्रूहि विस्तरेणेति पित्रा संचोदिता शुभा ।
तथैव तस्य वचनं प्रतिगृह्येदमब्रवीत् ॥ ४१
आसीत्साल्वेषु धर्मात्मा क्षत्रियः पृथिवीपतिः ।
द्युमत्सेन इति ख्यातः पश्चात् च अन्धो बभूव ह ॥ ४२
विनष्टचक्षुषस्तस्य बालपुत्रस्य धीमतः ।

सामीप्येन हृतं राज्यं छिद्रेऽस्मिन् पूर्ववैरिणा ॥ ४३
स बालवत्सया सार्धं भार्यया प्रस्थितो वनम् ।
महारण्यं गतश्चापि तपस्तेपे महाव्रतः ॥ ४४
तस्य पुत्रः पुरे जातः संवृद्धश्च तपोवने ।
सत्यवान् अनुरूपो मे भर्तेति मनसा वृतः ॥ ४५

नारद उवाच—

अहो बत महत्पापं सावित्र्या नृपते कृतम् ।
अजानन्त्या यदनया गुणवान् सत्यवान् वृतः ॥ ४६
सत्यं वदति अस्य पिता सत्यं माता प्रभाषते ।
तथास्य ब्राह्मणाश्चक्रुः नामैतत् सत्यवानिति ॥ ४७
बालस्याश्वाः प्रियाश्चास्य करोत्यश्वांश्च मृन्मयान् ।
चित्रेऽपि विलिखत्यश्वान् चित्राश्व इति चोच्यते ॥ ४८

राजोवाच—

अपीदानीं स तेजस्वी बुद्धिमान् वा नृपात्मजः ।
क्षमावानपि वा शूरः सत्यवान् पितृवत्सलः ॥ ४९

नारद उवाच—

विवस्वानिव तेजस्वी बृहस्पतिसमो मतौ ।
महेन्द्र इव वीरश्च वसुधेव क्षमान्वितः ॥ ५०

अश्वपतिरुवाच—

अपि राजात्मजो दाता ब्रह्मण्यश्चापि सत्यवान् ।
रूपवान् अपि उदारो वा अप्यथवा प्रियदर्शनः ॥ ५१

नारद उवाच—

सांकृते रन्तिदेवस्य स्वशक्त्या दानतः समः ।
ब्रह्मण्यस्सत्यवादी च शिबिरौशीनरो यथा ॥ ५२

ययातिरिव चोदारः सोमवत् प्रियदर्शनः ।
रूपेणान्यतमोऽश्विभ्यां द्युमत्सेनसुतो बली ॥ ५३

स वदान्यः स तेजस्वी धीमांश्चैव क्षमान्वितः ।
स दान्तः स मृदुः शूरः स सत्यः संयतेन्द्रियः ॥ ५४

सन्मैत्रः सोऽनसूयश्च सह्रीमान् द्युतिमांश्च सः ।
नित्यशश्चार्जवम् तस्मिन् धृतिस्तत्रैव च ध्रुवा ॥ ५५

संक्षेपतस्तपोवृद्धैः शीलवृद्धैश्च कथ्यते ।
एक एवास्य दोषोऽस्ति गुणानाक्रम्य तिष्ठति ॥ ५६

स च दोषः प्रयत्नेन न शक्यमतिवर्तितुम् ।
एको दोषोऽस्ति नान्योऽस्य सोऽद्यप्रभृति सत्यवान् ।
संवत्सरेण क्षीणायुः देहन्यासं करिष्यति ॥ ५७

राजोवाच—

एहि सावित्रि गच्छस्व अन्यं वरय शोभने ।
तस्य दोषो महानेकः गुणानाक्रम्य च स्थितः ॥ ५८

यथा मे भगवानाह नारदो देवसत्कृतः ।
संवत्सरेण सोऽल्पायुः देहन्यासं करिष्यति ॥ ५९

सावित्री उवाच—

संकृदम्शो निपतति सकृत्कन्या प्रदीयते ।
सकृदाह ददानीति त्रीणि एतानि सकृत् सकृत् ॥
दीर्घायुः अथवा अल्पायुः सगुणो निर्गुणोऽपि वा ।
सकृत् वृतो मया भर्ता न द्वितीयं वृणोम्यहम् ॥ ६१
मनसा निश्चयं कृत्वा ततो वाचाभिधीयते ।
क्रियते कर्मणा पश्चात् प्रमाणं मे मनस्ततः ॥ ६२

नारद उवाच—

स्थिरा बुद्धिः नरश्रेष्ठ सावित्र्याः दुहितुस्तव ।
नैषा वारयितुं शक्या धर्मादस्मात् कथञ्चन ॥ ६३
नान्यस्मिन् पुरुषे सन्ति ये सत्यवति वै गुणाः ।
प्रदानमेव तस्मान्मे रोचते दुहितुस्तव ॥ ६४

राजोवाच—

अविचाल्यमेतत् उक्तं तथ्यं च भवता वचः ।
करिष्याम्येतदेवं च गुरुर्हि भगवान् मम ॥ ६५

नारद उवाच—

अविघ्नं अस्तु सावित्र्याः प्रदाने दुहितुस्तव ।
साधयिष्याम्यहं तावत् सर्वेषां भद्रं अस्तु वः ॥ ६६
एवमुक्त्वा खं उत्पद्य नारदस्त्रिदिवं गतः ।
राजापि दुहितुः सज्जं वैवाहिकमकारयत् ॥ ६७

अथ कन्या प्रदाने च तमेवार्थं विचिन्तयन् ।
समानिन्ये च तत्सर्वं भाण्डं वैवाहिकं नृपः ॥ ६८
ततो वृद्धान् द्विजान् सर्वान् ऋत्विग्सभ्यपुरोहितान् ।
समाहूय दिने पुण्ये प्रययौ सह कन्यया ॥ ६९
मेध्यारण्यं स गत्वा च द्युमत्सेनाश्रमं नृपः ।
पद्भ्यामेव द्विजैस्सार्धं राजर्षिं तमुपागमत् ॥ ७०
तत्रापश्यत् महाभागं सालवृक्षमुपाश्रितम् ।
कौश्यां बृस्यां समासीनं चक्षुर्हीनं नृपं तदा ॥ ७१
स राजा तस्य राजर्षेः कृत्वा पूजां यथार्हतः ।
वाचा सुनियतो भूत्वा चकारात्मनिवेदनम् ॥ ७२
तस्यार्घ्यमासनं चैव गाञ्चावेद्य स धर्मवित् ।
किमागमनमित्येवं राजा राजानमब्रवीत् ॥ ७३
तस्य सर्वमभिप्रायं इतिकर्तव्यतां च ताम् ।
सत्यवन्तं समुद्दिश्य सर्वमेव न्यवेदयत् ॥ ७४
सावित्री नाम राजर्षे कन्येयं मम शोभना ।
तां स्वधर्मेण धर्मज्ञ स्नुषार्थे त्वं गृहाण मे ॥ ७५

द्युमत्सेन उवाच—

च्युताः स्म राज्यात् वनवासमाश्रिताः
चराम धर्मं नियतास्तपस्विनः ।
कथं तु अनर्हा वनवासं आश्रमे
सहिष्यति क्लेशमिमं सुता तव ॥ ७६

अश्वपतिरुवाच—

सुखं च दुखं च भवाभवात्मकं
यदा विजानाति सुताहमेव च।
न मद्विधे युज्यति वाक्यमीदृशं
विनिश्चयेनाभिगतोऽस्मि ते नृप ॥ ७७

आशां नार्हसि मे हन्तुं सौहृदात् प्रणतस्य च।
अभितश्चागतं प्रेम्णा प्रत्याख्यातुं न माऽर्हसि ॥ ७८

अनुरूपो हि युक्तश्च त्वं ममाहं तवापि च।
स्नुषां प्रतीच्छ मे कन्यां भार्यां सत्यवतस्ततः ॥ ७९

द्युमत्सेन उवाच—

पूर्वमेवाभिलषितः सम्बन्धो मे त्वया सह।
भ्रष्टराज्यस्त्वहमिति तत एतद्विचारितम् ॥ ८०

अभिप्रायस्त्वयं यो मे पूर्वमेवाभिकाङ्क्षितः।
स निर्वर्तयितुं मेऽद्यैव काङ्क्षितो हि असि मेऽतिथिः ॥

ततः सर्वान् समानाय्य द्विजान् आश्रमवासिनः।
यथाविधि समुद्वाहं कारयामासतुः नृपौ ॥ ८२

दत्वा सोऽश्वपतिः कन्यां यथार्हं सपरिच्छदम्।
ययौ स्वमेव भवनं युक्तः परमया मुदा ॥ ८३

सत्यवानपि तां भर्यां लब्ध्वा सर्वगुणान्विताम्।
मुमुदे सा च तं लब्ध्वा भर्तारं मनसेप्सितम् ॥ ८४

यश्चेदं शृणुयात् भक्त्या सावित्र्याख्यानमुत्तमम् ।
स सुखी सर्वसिद्धार्थः न दुःखं प्राप्नुयात् नरः ॥ ८५

इति महाभारतात् उद्धृतं वनपर्वीयं सावित्रीकल्याणं संपूर्णम् ॥

---

# श्री कावेरीकल्याणम्

( कावेरीमाहात्म्यात् उद्धृतम् )

अथ सञ्चोदितो वायुः वरुणेन महात्मना ।
प्रत्युज्जगाम कावेरीं अप्सरोभिः समन्ततः ॥ १

देवदुन्दुभिघोषश्च स्वस्तिवाचो द्विजन्मनाम् ।
साधुवादस्सुराणाञ्च शुश्रुवे च दिशो दश ॥ २

नमस्त इति शब्दश्च कृतार्थोऽस्मीति च ध्वनिः ।
सर्वलोकाश्च तुष्टास्स्युरितिशब्दो महानभूत् ॥ ३

सनकाद्याश्च योगीन्द्राः शक्राद्याश्च सुरास्तथा ।
अभिजग्मुश्च कावेरीं कृतार्थेनान्तरात्मना ॥ ४

ततः श्वेतवने श्रीमान् दिव्यो वैवाहिकोत्सवः ।
सम्बभूव समुद्रस्य पावनः परमात्मनः ॥ ५

ब्रह्मा शर्वश्च भगवान् चक्रपाणिः जगत्पतिः ।
तत्रागमन् सुरैस्साकं प्रशशंसुः महोत्सवम् ॥ ६

ततो ब्रह्मा महातेजाः पुरस्कृत्य महेश्वरम् ।
कारयित्वा यथान्यायं सर्वं वैवाहिकं शुभम् । ७

कावेरीं प्रददौ कन्यां सागराय महात्मने ।
पुरे स्वर्गोपमे तत्र नानासौधोपशोभिते ॥ ८

जगतां मङ्गलार्थाय सोऽभवत्सुमहोत्सवः ।
दिवि मङ्गलतूर्यनिस्स्वना ननृतुश्चाप्सरसां गणास्सुराः ।
ववृषुः कुसुमानि चारणाः जगुरुच्चैश्च कवेरजायशः ॥ ९

इत्थं प्रवृत्ते तु महोत्सवे तदा
कवेरजायाः क्षितिमण्डले महान् ।
गृहे गृहेऽभूत् गृहमेधिनां महो
विश्वम्भरा चापि यथार्थनाम्न्यभूत् ॥ १०

पाणिग्रहणकाले तु कावेर्याः वरुणस्स्वयम् ।
दशकोटिसुवर्णानां रत्नानि विविधानि च ॥ ११

अलंकृतेभ्यो विप्रेभ्यो ददौ श्रीमान् महामनाः ।
एवं उद्वाह्य कावेरीं सर्वलोकनमस्कृताम् ॥ १२

ततो वरमदात् देव्यै कावेर्यै भगवान् हरः ।
अत्र स्नानेन देव्यास्तु सप्ताब्धिस्नानजं फलम् ॥ १३

यत्र कुत्र त्वयि स्नानं तिरश्चामपि तद् स्रवेत् ।
दिशति स्म वरं ब्रह्मा कावेर्यै प्रीतमानसः ॥ १४

स्नात्वा तुलार्के ये तीर्थे शृणुयुस्तव वैभवम् ।
तेषां भोगश्च मोक्षश्च सम्भूयात् मदनुग्रहात् ।
ततो श्रीमान् हरिः प्रादात् वरं प्रीतो हि अनुत्तमम् ॥ १५

# श्री द्रौपदीकल्याणम्

( महाभारतादिपर्वण उद्धृतम् )

तत्रोपविष्टान्ददृशुः महासत्वान्पृथग्जनाः ।
राजसिंहान्महाभागान् कृष्णागुरुविभूषितान् ॥ १

महाप्रसादान्ब्रह्मण्यान् स्वराष्ट्रपरिरक्षिणः ।
प्रियान्सर्वस्य लोकस्य सुकृतैः कर्मभिः शुभैः ॥ २

मञ्चेषु च परार्ध्येषु पौरजानपदा जनाः ।
कृष्णादर्शनसिद्ध्यर्थं सर्वतः समुपाविशन् ॥ ३

ब्राह्मणैस्ते च सहिताः पाण्डवाः समुपाविशन् ।
ऋद्धिं पञ्चालराजस्य पश्यन्तस्तामनुत्तमाम् ॥ ४

ततः समाजो ववृधे स राजन्दिवसान्बहून् ।
रत्नप्रदानबहुलः शोभितो नटनर्तकैः ॥ ५

वर्तमाने समाजे तु रमणीयेऽह्नि षोडशे ।
मैत्रे मुहूर्ते तस्याश्च राजदाराः पुराविदः ॥ ६

पुत्रवत्यः सुवसनाः प्रतिकर्मोपचक्रमुः ।
वैडूर्यमयपीठे तु निविष्टां द्रौपदीं तदा ॥ ७

सतूर्यं स्नापयाञ्चक्रुः स्वर्णकुम्भस्थितैर्जलैः ।
तां निवृत्ताभिषेकाञ्च दुकूलद्वयधारिणीम् ॥ ८

निन्युर्मणिस्तम्भवर्ती वेदिं च सुपरिष्कृताम् ।
निवेश्य प्राङ्मुखीं हृष्टां विस्मिताक्ष्यः प्रसाधिकाः ॥ ९

केनालङ्करणेनेमामित्यन्योन्यं व्यलोकयन् ।
धूपोष्मणा च केशानामार्द्रभावं व्यपोहयन् ॥ १०

बबन्धुरस्याः धम्मिल्लं माल्यैः सुरभिगन्धिभिः ।
दूर्वामधूकरचितं माल्यं तस्या ददुः करे ॥ ११

चक्रुश्च कृष्णागरुणा पत्रसङ्गं कुचद्वये ।
रेजे सा चक्रवाकाङ्का स्वर्णदीर्वा सरिद्वरा ॥ १२

अलकैः कुटिलैः तस्याः मुखं विकसितं बभौ ।
आसक्तभृङ्गं कुसुमं शशिबिम्बं जिगाय तत् ॥ १३

कालाञ्जनं नयनयोः आचारार्थं समादधुः ।
भूषणं रत्नखचितैः अलञ्चक्रुर्यथोचितम् ॥ १४

माता च तस्याः पृषती हरितालमनश्शिलाम् ।
अङ्गुलीभ्यामुपादाय तिलकं विदधे मुखे ॥ १५

अलङ्कृतां वधूं दृष्ट्वा योषितो मुदमाययुः ।
माता न मुमुदे तस्याः पतिः कीदृग्भविष्यति ॥ १६

सौविदल्लाः समागम्य द्रुपदस्याज्ञया ततः ।
एनामारोपयामासुः करिणीं कुथभूषिताम् ॥ १७

ततोऽवाद्यन्त वाद्यानि मङ्गलानि दिवि स्पृशन् ।
विलासिनीजनाश्चापि प्रवरं करिणीशतम् ॥ १८

माङ्गल्यगीतं गायन्त्यः पार्श्वयोरुभयोर्ययुः ।
जनापसरणे व्यग्राः प्रतिहार्यः पुरा ययुः ॥ १९

कोलाहलो महानासीत् तस्मिन्पुरवरे तदा ।
धृष्टद्युम्नो ययावग्रे हयमारुह्य भारत ॥ २०

द्रुपदो रङ्गदेशे तु बलेन महता युतः ।
तस्थौ व्यूह्य महानीकं पालितं दृढधन्विभिः ॥ २१

आप्लुताङ्गीं सुवसनां सर्वाभरणभूषिताम् ।
मालां च समुपादाय काञ्चनीं समलङ्कृताम् ॥ २२

आगतां ददृशुः सर्वे रङ्गभूमिमलङ्कृताम् ।
अवतीर्णा ततो रङ्गं द्रौपदी भरतर्षभ ॥ २३

तस्थौ प्रमुदितान्सर्वान् नृपतीन् रङ्गमण्डले ।
प्रेक्षन्ती व्रीडितापाङ्गी द्रष्टॄणां सुमनोहरा ॥ २४

पुरोहितः सोमकानां मन्त्रविद्ब्राह्मणः शुचिः ।
परिस्तीर्य जुहावाग्निमाज्येन विधिवत्तदा ॥ २५

सन्तर्पयित्वा ज्वलनं ब्राह्मणान् स्वस्ति वाच्य च ।
वारयामास सर्वाणि वादित्राणि समन्ततः ॥ २६

निःशब्दे तु कृते तस्मिन् धृष्टद्युम्नो विशांपते ।
कृष्णामादाय विधिवत् मेघदुन्दुभिनिःस्वनः ॥ २१

रङ्गमध्यं गतस्तत्र मेघगम्भीरया गिरा ।
वाक्यमुच्चैर्जगादेदं श्लक्ष्णमर्थवदुत्तमम् ॥ २८

इदं धनुर्लक्ष्यमिमे च बाणाः
　　शृण्वन्तु मे भूपतयः समेताः ।
छिद्रेण यन्त्रस्य समर्पयध्वं
　　शरैः शितैर्व्योमचरैर्दशार्धैः ॥ २९

एतन्महत्कर्म करोति यो वै
　　कुलेन रूपेण बलेन युक्तः ।
तस्याद्य भार्या भगिनी ममेयं
　　कृष्णा भवित्री न मृषा ब्रवीमि ॥ ३०

अथाययुर्देवगणा विमानैः
　　रुद्रादित्या वसवोऽथाश्विनौ च ।
साध्याश्च सर्वे मरुतस्तथैव
　　यमं पुरस्कृत्य धनेश्वरं च ॥ ३१

दैत्याः सुपर्णाश्च महोरगाश्च
　　देवर्षयो गुह्यकाश्चारणाश्च ।
विश्वावसुर्नारदपर्वतौ च
　　गन्धर्वमुख्याः सहसाप्सरोभिः ॥ ३२

हलायुधस्तत्र जनार्दनश्च
　　वृष्ण्यन्धकाश्चैव यथा प्रधानम् ।
प्रेक्षां स्म जक्रुर्यदुपुङ्गवास्ते
　　स्थिताश्च कृष्णस्य मते महान्तः ॥ ३३

दृष्ट्वा तु तान्मत्तगजेन्द्ररूपान्
पञ्चाभिपद्मानिव वारणेन्द्रान् ।
भस्मावृताङ्गानिव हव्यवाहान्
कृष्णः प्रदध्यौ यदुवीरमुख्यः ॥ ३४

शशंस रामाय युधिष्ठिरं स
भीमं सजिष्णुं च यमौ च वीरौ ।
शनैः शनैस्तान्प्रसमीक्ष्य रामो
जनार्दनं प्रीतमना ददर्श ह ॥ ३५

ततो वैकर्तनः कर्णो वृषा वै सूतनन्दनः ।
धनुरभ्याशमागम्य तोलयामास तद्धनुः ॥ ३६

तं चाप्यारोच्यमाणं तद्रोममात्रेऽभ्यताडयत् ।
त्रैलोक्यविजयी कर्णः सत्वे त्रैलोक्यविश्रुतः ॥ ३७

धनुषा सोऽपि निर्धूत इति सर्वे भयाकुलाः ।
एवं कर्णे विनिर्धूते धनुषा च नृपोत्तमाः ॥ ३८

चक्षुर्भिरपि नापश्यन् विनम्रमुखपङ्कजाः ।
दृष्ट्वा कर्णं विनिर्धूतं लोके वीरा नृपोत्तमाः ।
निराशा धनुरुद्धारे द्रौपदीसङ्गमेऽपि च ॥ ३९

तस्मिंस्तु सम्भ्रान्तजने समाजे
निक्षिप्तवादेषु जनाधिपेषु ।

कुन्तीसुतो जिष्णुरियेष कर्तुं
सज्यं धनुस्तत्सशरं च वीरः ॥ ४०

ततो वरिष्ठः सुरदानवाना–
मुदारधीर्वृष्णिकुलप्रवीरः ।
जहर्ष रामेण स पीड्य हस्तं
हस्तङ्गतां पाण्डुसुतस्य मत्वा ॥ ४१

न जज्ञिरेऽन्ये नृपविप्रमुख्याः
संछन्नरूपानथ पाण्डुपुत्रान् ।
विना हि लोके च यदुप्रवीरौ
धौम्यं हि धर्मं सह सोदरांश्च ॥ ४२

यदा निवृत्ता राजानो धनुषः सज्यकर्मणः ।
अथोदतिष्ठद्विप्राणां मध्याज्जिष्णुरुदारधीः ॥ ४३

उदक्रोशन्विप्रमुख्याः विधुन्वन्तोऽजिनानि च ।
दृष्ट्वा सम्प्रस्थितं पार्थमिन्द्रकेतुसमप्रभम् ॥ ४४

केचिदासन्विमनसः केचिदासन्मुदान्विताः ।
आहुः परस्परं केचिन्निपुणा बुद्धिजीविनः ॥ ४५

यत्कर्णशल्यप्रमुखैः क्षत्रियैर्लोकविश्रुतैः ।
नानतं बलवद्भिर्हि धनुर्वेदपरायणैः ॥ ४६

तत्कथं त्वकृतास्त्रेण प्राणतो दुर्बलीयसा ।
वटुमात्रेण शक्यं हि सज्यं कर्तुं धनुर्द्विजाः ॥ ४७

अवहास्या भविष्यन्ति ब्राह्मणाः सर्वराजसु ।
कर्मण्यस्मिन्नसंसिद्धे चापलादपरीक्षिते ॥ ४८

यद्येष दर्पाद्धर्षाद्वाप्यथ ब्राह्मणचापलात् ।
प्रस्थितो धनुरायन्तुं वार्यतां साधु मा गमत् ॥ ४९

नावहास्या भविष्यामो न च लाघवमास्थिताः ।
न च विद्विष्टतां लोके गमिष्यामो महीक्षिताम् ॥ ५०

केचिदाहुर्युवा श्रीमान् नागराजकरोपमः ।
पीनस्कन्धोरुबाहुश्च धैर्येण हिमवानिव ॥ ५१

सिंहखेलगतिः श्रीमान्मत्तनागेन्द्रविक्रमः ।
सम्भाव्यमस्मिन्कर्मेदमुत्साहाच्चानुमीयते ॥ ५२

शक्तिरस्य महोत्साहा न ह्यशक्तः स्वयं व्रजेत् ।
न च तद्विद्यते किञ्चित् कर्म लोकेषु यद्भवेत् ॥ ५३

ब्राह्मणानामसाध्यं च नृषु संस्थानचारिषु ।
अब्भक्षा वायुभक्षाश्च फलाहारा दृढव्रताः ॥ ५४

दुर्बला अपि विप्रा हि बलीयांसः स्वतेजसा ।
जामदग्न्येन रामेण निर्जिताः क्षत्रिया युधि ॥ ५५

पीतः समुद्रोऽगस्त्येन अगाधो ब्रह्मतेजसा ।
तस्माद् ब्रुवन्तु सर्वेऽत्र वटुरेष धनुर्महान् ॥ ५६

आरोपयतु शीघ्रं वै तथेत्यूचुर्द्विजर्षभाः ।

वैशम्पायन उवाच—

एवं तेषां विलपतां विप्राणां विविधा गिरः ॥ ५७

अर्जुनो धनुषोऽभ्याशे तस्थौ गिरिरिवाचलः ।
अर्जुनः पाण्डवश्रेष्ठो धृष्टद्युम्नमथाब्रवीत् ॥ ५८

एतद्धनुर्ब्राह्मणानां सज्यं कर्तुमलं नु किम् ।
तस्य तद्वचनं श्रुत्वा धृष्टद्युम्नोऽब्रवीद्वचः ॥ ५९

ब्राह्मणो वाथ राजन्यो वैश्यो वा शूद्र एव वा ।
एतेषां यो धनुःश्रेष्ठं सज्यं कुर्याद्द्विजोत्तम ॥ ६०

तस्मै प्रदेया भगिनी सत्यमुक्तं मया वचः ।
ततः पश्चान्महातेजाः पाण्डवो रणदुर्जयः ॥ ६१

स तद्धनुः परिक्रम्य प्रदक्षिणमथाकरोत् ।
प्रणम्य शिरसा देवीमीशानं वरदं प्रभुम् ।
कृष्णं च मनसा कृत्वा जगृहे चार्जुनो धनुः ॥ ६२

यत्पार्थिवै रुक्मसुनीथवक्त्रैः
राधेयदुर्योधनशल्यसाल्वैः ।
तदा धनुर्वेदपरैर्नृसिंहैः
कृतं न सज्यं महतोऽपि यत्नात् ॥ ६३

तदर्जुनो वीर्यवतां सदर्पः
तदैन्द्रिरिन्द्रावरजप्रभावः ।
सज्यं च चक्रे निमिषान्तरेण
शरांश्च जग्राह दशार्धसङ्ख्यान् ॥ ६४

विव्याध लक्ष्यं निपपात तच्च
छिद्रेण भूमौ सहसातिविद्धम् ।
ततोऽन्तरिक्षे ह बभूव नादः
समाजमध्ये च महान्निनादः ॥ ६५

पुष्पाणि दिव्यानि ववर्ष देवः ।
पार्थस्य मूर्ध्नि द्विषतां निहन्तुः ॥ ६६

चेलानि विव्यधुस्तत्र ब्रह्मणाश्च सहस्रशः ।
विलक्षितास्ततश्चक्रुः हाहाकारांश्च सर्वशः ।
न्यपतंश्चात्र नभसः समन्तात्पुष्पवृष्टयः ॥ ६७

शताङ्गानि च तूर्याणि वादकाः समवादयन् ।
सूतमागधसङ्घाश्चाप्यस्तुवंस्तत्र सुस्वराः ॥ ६८

तं दृष्ट्वा द्रुपदः प्रीतो बभूव रिपुसूदनः ।
सह सैन्यैश्च पार्थस्य साहाय्यार्थमियेष सः ॥ ६९

तस्मिंस्तु शब्दे महति प्रवृद्धे
युधिष्ठिरो धर्मभृतां वरिष्ठः ।
आवासमेवोपजगाम शीघ्रं
सार्धं यमाभ्यां पुरुषोत्तमाभ्याम् ॥ ७०

विद्धं तु लक्ष्यं प्रसमीक्ष्य कृष्णा
पार्थं च शक्रप्रतिमं निरीक्ष्य ।

स्वभ्यस्तरूपापि नवेव नित्यं
विनापि हासं हसतीव कन्या ७१
मदादृतेऽपि स्खलतीव भावैः
वाचा विना व्याहरतीव दृष्ट्या ।
आदाय शुक्लं वरमाल्यदाम
जगाम कुन्तीसुतमुत्स्मयन्ती ॥ ७२
गत्वा च पश्चात्प्रसमीक्ष्य कृष्णा
पार्थस्य वक्षस्यविशङ्कमाना ।
क्षिप्त्वा स्रजं पार्थिववीरमध्ये
वराय वव्रे द्विजसङ्घमध्ये ॥ ७३
शचीव देवेन्द्रमथाग्निदेवं
स्वाहेव लक्ष्मीश्च यथा मुकुन्दम् ।
उषेव सूर्यं मदनं रतीव
महेश्वरं पर्वतराजपुत्री ॥ ७४
स तामुपादाय विजित्य रङ्गे
द्विजातिभिस्तैरभिपूज्यमानः ।
रङ्गान्निरक्रामदचिन्त्यकर्मा
पत्न्या तयाचाप्यनुगम्यमानः ॥ ७५
तत आजग्मतुस्तत्र तौ व्यासद्रुपदावुभौ ।
कुन्ती सपुत्रा यत्रास्ते धृष्टद्युम्नश्च पार्षतः ।
ततो द्वैपायनः कृष्णो युधिष्ठिरमथागमत् ॥ ७६

ततोऽब्रवीद्भगवान् धर्मराजं
अद्यैव पुण्येऽहनि पाण्डवेय ।
पुण्ये पुष्ये योगमुपैति चन्द्रमाः
पाणिं कृष्णायास्त्वं गृहाणाद्य पूर्वम् ॥ ७७

एवमुक्त्वा धर्मराजं भीमादीनप्यभाषत ।
क्रमेण पुरुषव्याघ्राः पाणिं गृह्णन्तु पाणिभिः ।
एवमेव मया सर्वं दृष्टमेतत्पुराऽनघाः ॥ ७८

ततो राजा यज्ञसेनः सपुत्रो
जन्यार्थमुक्तं बहु तत्तदुग्र्यम् ।
समर्थयामास महानुभावो
हृष्टः सपुत्रः सहबन्धुवर्गः ॥ ७९

समानयामास सुतां च कृष्णां
आप्लाव्य रत्नैर्बहुभिर्विभूष्य ।
ततस्तु सर्वे सुहृदो नृपस्य
समाजग्मुः सहिता मन्त्रिणश्च ॥ ८०

द्रष्टुं विवाहं परमप्रतीताः
द्विजाश्च पौराश्च यथाप्रधानाः ।
ततोऽस्य वेश्माग्र्यजनोपशोभितं
विस्तीर्णपद्मोत्पलभूषिताजिरम् ॥ ८१

बलौघरत्नौघविचित्रमाबभौ
　　नभो यथा निर्मलतारकान्वितम् ।
ततस्तु ते कौरवराजपुत्रा
　　विभूषिताः कुण्डलिनो युवानः ॥　　८२
महार्हवस्त्राम्बरचन्दनोक्षिताः
　　कृताभिषेकाः कृतमङ्गलक्रियाः ।
पुरोहितेनाग्निसमानवर्चसा
　　सहैव धौम्येन यथाविधि प्रभो ॥　　८३
क्रमेण सर्वे विविशुस्ततः सदो
　　महर्षभाः गोष्ठमिवाभिनन्दिनः ।
ततः समाधाय स वेदपारगो
　　जुहाव मन्त्रैर्ज्वलितं हुताशनम् ॥　　८४
युधिष्ठिरं चाप्युपनीय मन्त्रवित्
　　नियोजयामास सहैव कृष्णया ।
प्रदक्षिणं तौ प्रगृहीतपाणी
　　समानयामास स वेदपारगः ॥　　८५
विप्रांश्च सन्तर्प्य युधिष्ठिरो धनैः
　　गोभिश्च रत्नैर्विविधैश्च पूर्वम् ।
तदा स राजा द्रुपदस्य पुत्रिका-
　　पाणिं प्रजग्राह हुताशनाग्रतः ॥　　८६

धौम्येन मन्त्रैर्विधिवद्धुतेऽग्नौ
सहाग्निकल्पैर्ऋषिभिः समेत्य ।
ततोन्तरिक्षात्कुसुमानि पेतुः
ववौ च वायुः सुमनोज्ञगन्धः ॥ ८७

ततोऽभ्यनुज्ञाप्य समाजशोभितं
युधिष्ठिरं राजपुरोहितस्तदा ।
विप्रांश्च सर्वान्सुहृदश्च राज्ञः
समेत्य राजानमदीनसत्वम् ॥ ८८

जगाद भूयोऽपि महानुभावो
वचोऽर्थयुक्तं मनुजेश्वरं तम् ।
गृह्णन्त्वथान्ये नरदेव कन्या-
पाणिं यथावन्नरदेवपुत्राः ॥ ८९

तमभ्यनन्दद् द्रुपदस्तदा द्विजं
तथा कुरुष्वेति तमादिदेश ।
पुरोहितस्यानुमतेन राज्ञः
ते राजपुत्रा मुदिता बभूवुः ॥ ९०

क्रमेण चान्ये च नराधिपात्मजाः
वरस्त्रियास्ते जगृहुः करं सदा ।
अहन्यहन्युत्तमरूपधारिणो
महारथाः कौरववंशवर्धनाः ॥ ९१

इदं च तत्राद्भुतरूपमुत्तमं
जगाद देवर्षिरतीतमानुषम् ।
महानुभवा किल सा सुमध्यमा
बभूव कन्यैव गते गतेऽहनि ॥ ९२

पतिश्वशुरता ज्येष्ठे पतिदेवरताऽनुजे ।
मध्यमेषु च पाञ्चाल्यास्त्रितयं त्रितयं त्रिषु ॥ ९३

कृते विवाहे द्रुपदो धनं ददौ
महारथेभ्यो बहुरूपमुत्तमम् ।
शतं रथानां वरहेममालिनां
चतुर्युजां हेमखलीनमालिनाम् ॥ ९४

शतं गजानामपि पद्मिनां तथा
शतं गिरीणामिव हेमशृङ्गिणाम् ।
तथैव दासीशतमग्र्ययौवनं
महार्हवेषाभरणाम्बरस्रजम् ॥ ९५

पृथक् पृथग्दिव्यदृशां पुनर्ददौ
तदा धनं सौमकिरग्निसाक्षिकम् ।
तथैव वस्त्राणि विभूषणानि
प्रभावयुक्तानि महानुभावः ॥ ९६

कृते विवाहे च ततस्तु पाण्डवाः
प्रभूतरत्नामुपलभ्य तां श्रियम् ।

विजह्रुरिन्द्रप्रतिमा महाबलाः ।
परे तु पाञ्चालनृपस्य तस्य ह ॥ ९७

पाण्डवैः सह संयोगं गतस्य द्रुपदस्य ह ।
न बभूव भयं किञ्चित् देवेभ्योऽपि कथञ्चन ॥ ९८

कुन्तीमासाद्य ता नार्यो द्रुपदस्य महात्मनः ।
नाम संकीर्तयन्त्योऽस्या जग्मुः पादौ स्वमूर्धभिः ॥ ९९

कृष्णा च क्षौमसंवीता कृतकौतुकमङ्गला ।
कृताभिवादना श्वश्र्वास्तस्थौ प्रह्वा कृताञ्जलिः ॥ १००

रूपलक्षणसम्पन्नां शीलाचारसमन्विताम् ।
द्रौपदीमवदत्प्रेम्णा पृथाशीर्वचनं स्नुषाम् ॥ १०१

यथेन्द्राणी हरिहये स्वाहा चैव विभावसौ ।
रोहिणी च यथा सोमे दमयन्ती यथा नले ॥ १०२

यथा वैश्रवणे भद्रा वसिष्ठे चाप्यरुन्धती ।
यथा नारायणे लक्ष्मीः तथा त्वं भव भर्तृषु ॥ १०३

जीवसूर्वीरसूर्भद्रे बहुसौख्यसमन्विता ।
सुभगा भोगसम्पन्ना यज्ञपत्नी पतिव्रता ॥ १०४

अतिथीनागतान्साधून्वृद्धान्बालांस्तथा गुरून् ।
पूजयन्त्या यथान्यायं शश्वद्गच्छन्तु ते समाः ॥ १०५

कुरुजाङ्गलमुख्येषु राष्ट्रेषु नगरेषु च ।
अनु त्वमभिषिच्यस्व नृपतिं धर्मवत्सला ॥ १०६

पतिभिर्निर्जितामुर्वीं विक्रमेण महाबलैः ।
कुरु ब्राह्मणसात्सर्वामश्वमेधे महाक्रतौ ॥ १०७

पृथिव्यां यानि रत्नानि गुणवन्ति गुणान्विते ।
तान्याप्नुहि त्वं कल्याणि सुखिनी शरदां शतम् ॥ १०८

यथा च त्वामभिनन्दामि वध्वद्य क्षौमसंवृताम् ।
तथा भूयोऽभिनन्दिष्ये जातपुत्रां गुणान्विताम् ॥ १०९

ततस्तु कृतदारेभ्यः पाण्डुभ्यः प्राहिणोद्धरिः ।
वैडूर्यमणिचित्राणि हैमान्याभरणानि च ॥ ११०

वासांसि च महार्हाणि नानादेश्यानि माधवः ।
कम्बलाजिनरत्नानि स्पर्शवन्ति शुभानि च ॥ १११

शयनासनयानानि विविधानि महान्ति च ।
वैडूर्यवज्रचित्राणि शतशो भाजनानि च ॥ ११२

रूपयौवनदाक्षिण्यैरुपेताश्च स्वलङ्कृताः ।
प्रेष्याः सम्प्रददौ कृष्णो नानादेश्याः स्वलङ्कृताः ॥ ११३

गजान्विनीतान्भद्रांश्च सदश्वांश्च स्वलङ्कृतान् ।
रथांश्च दान्तान्सौवर्णैः शुभ्रैः पट्टैरलङ्कृतान् ॥ ११४

कोटिशश्च सुवर्णं च तेषामकृतकं तथा ।
वीथीकृतममेयात्मा प्राहिणोन्मधुसूदनः ॥ ११५

तत्सर्वं प्रतिजग्राह धर्मराजो युधिष्ठिरः ।
मुदा परमया युक्तो गोविन्दप्रियकाम्यया ॥ ११६

इति महाभारतादिपर्वण उद्धृतं द्रौपदीकल्याणं संपूर्णम् ॥

# श्री सुकन्याकल्याणम्

( महाभारतवनपर्वणः श्रीमद्भागवताच्च उद्धृतम् )

भृगोर्महर्षेः पुत्रोऽभूत् च्यवनो नाम भारत ।
समीपे सरसः (पयोष्ण्याः) तस्य तपस्तेपे महाद्युतिः । १
स्थाणुभूतो महातेजाः वीरस्थानेन पाण्डव ।
अतिष्ठत चिरं कालं एकदेशे विशांपते ॥ २
स वल्मीकोऽभवत् ऋषिः लताभिरिव संवृतः ।
कालेन महता राजन् समाकीर्णः पिपीलिकैः ॥ ३
तथा स संवृतो धीमान् मृत्पिण्ड इव सर्वशः ।
तप्यते स्म तपो घोरं वल्मीकेन समावृतः ॥ ४
अथ दीर्घस्य कालस्य शर्यातिर्नाम पार्थिवः ।
आजगाम सरो रम्यं विहर्तुमिदं उत्तमम् ॥ ५
तस्य स्त्रीणां सहस्राणि चत्वार्यासन् परिग्रहः ।
एकैव च सुता सुभ्रूः सुकन्या नाम भारत ॥ ६
सा सखीभिः परिवृता दिव्याभरणभूषिता ।
चङ्क्रम्यमाणा वल्मीकं भार्गवस्य समासदत् ॥ ७
सा वै वसुमतीं तत्र पश्यन्तीं सुमनोरमाम् ।
वनस्पतीन् प्रचिन्वन्ती विजहार सखीवृता ॥ ८
रूपेण वयसा चैव मदनेन मदेन च ।
बभञ्ज वनवृक्षाणां शाखाः परमपुष्पिताः ॥ ९

तां सखीरहितां एकां एकवस्त्रां अलंकृताम् ।
ददर्श भार्गवो धीमान् चरन्तीमिव विद्युतम् ॥ १०
तां पश्यमानो विजने स रेमे परमद्युतिः ।
क्षामकण्ठश्च विप्रर्षिः तपोबलसमन्वितः ॥ ११
तामाबभाषे कल्याणीं सा चास्य न शृणोति वै ।
ततः सुकन्या वल्मीके दृष्ट्वा भार्गवचक्षुषी ॥ १२
कौतूहलात् कण्टकेन बुद्धिमोहबलात्कृता ।
किं नु खल्विदमित्युक्त्वा निर्बिभेदास्य लोचने ॥ १३
अक्रुध्यत् स तथा विद्धे नेत्रे परममन्युमान् ।
ततः शर्यातिसैन्यस्य शकृन्मूत्रे समावृणोत् ॥ १४
ततो रुद्धे शकृन्मूत्रे सैन्यमासीत् सुदुःखितम् ।
तथागतमभिप्रेक्ष्य पर्यपृच्छत् स पार्थिवः ॥ १५
तपोनित्यस्य वृद्धस्य रोषणस्य विशेषतः ।
केनापकृतमद्येह भार्गवस्य महात्मनः ॥ १६
ज्ञातं वा यदि वा अज्ञातं तत् द्रुतं ब्रूत मा चिरम् ।
तमूचुः सैनिकास्सर्वे न विद्मोऽपकृतं वयम् ॥ १७
सर्वोपायैर्यथाकामं भवांस्तदधिगच्छतु ।
ततः स पृथिवीपालः साम्ना चोग्रेण च स्वयम् ॥ १८
पर्यपृच्छत् सुहृद्वर्गं पर्यजानन् नचैव ते ।
आनाहार्तं ततो दृष्ट्वा तत्सैन्यमसुखार्दितम् ॥ १९

पितर दुःखितं दृष्ट्वा सुकन्येदमथाब्रवीत् ।
मयाटन्त्येह वल्मीके दृष्टं सत्वमभिज्वलत् ।
खद्योतवदमिज्ञातं यन्मया तत् विद्धमन्तिकात् ॥ २०

एतत् श्रुत्वा तु वल्मीकं शर्यातिस्तूर्णमभ्यगात् ।
तत्रापश्यत्तपोवृद्धं चन्द्रादित्यसमप्रभम् ॥ २१

अयाचदथ सैन्यार्थं प्राञ्जलिः पृथिवीपातिः ।
अज्ञानात् बालया यत्ते कृतं तत् क्षन्तुमर्हति ॥ २२

ततोऽब्रवीन्महीपालं च्यवनो भार्गवस्तदा ।
अपमानादहं विद्धो हि अनया दर्पपूर्णया ॥ २३

रूपौदार्यसमायुक्तां लोभमोहबलात्कृताम् ।
तामेव प्रतिगृह्याहं राजन् दुहितरं तव ॥ २४

क्षंस्यामीति महिपाल सत्यमेतत् ब्रवीमि ते ।
ऋषेर्वचनमाज्ञाय शर्यातिरविचारयन् ॥ २५

ददौ दुहितरं तस्मै च्यवनाय महात्मने ।
प्रतिगृह्य च तां कन्यां भगवान् प्रससाद ह ॥ २६

प्राप्तप्रसादो राजा वै ससैन्यः पुरमाव्रजत् ।
सुकन्यापि पतिं लब्ध्वा तपस्विनमनिन्दिता ॥ २७

नित्यं पर्यचरत् प्रीत्या तपसा नियमेन च ।
समाराधयत क्षिप्रं च्यवनं सा शुभानना ॥ २८

कस्यचित्त्वथ कालस्य नासत्यावाश्रमागतौ ।
तौ पूजयित्वा प्रोवाच वयो मे दत्तमीश्वरौ ॥ २९

ग्रहं ग्रहीष्ये सोमस्य यजे वामप्यसोमपोः ।
क्रियतां मे वयो रूपं प्रमदानां यदीप्सितम् ॥ ३०

बाढमित्यूचतुर्विप्रमभिनन्द्य भिषक्तमौ ।
निमज्जतां भवानस्मिन् ह्रदे सिद्धविनिर्मिते ॥ ३१

इत्युक्त्वा जरया ग्रस्तदेहो धमनिसंततः ।
ह्रदं प्रवेशितोऽश्विभ्यां वलीपलितविप्रियः ॥ ३२

पुरुषास्त्रय उत्तस्थुरपीच्या वनिताप्रियाः ।
पद्मस्रजः कुण्डलिनस्तुल्यरूपाः सुवाससः ॥ ३३

तान् निरीक्ष्य वरारोहा सरूपान् सूर्यवर्चसः ।
अजानती पतिं साध्वी अश्विनौ शरणं ययौ ॥ ३४

दर्शयित्वा पतिं तस्यै पातिव्रत्येन तोषितौ ।
ऋषिमामन्त्र्य ययतुर्विमानेन त्रिविष्टपम् ॥ ३५

यक्ष्यमाणोऽथ शर्यातिश्च्यवनस्याश्रमं गतः ।
ददर्श दुहितुःपार्श्वे पुरुषं सूर्यवर्चसम् ॥ ३६

राजा दुहितरं प्राह कृतपादाभिवन्दनाम् ।
आशिषश्चाप्रयुञ्जानो नातिप्रीतमना इव ॥ ३७

चिकीर्षितं ते किमिदं पतिस्त्वया
प्रलम्भितो लोकनमस्कृतो मुनिः ।

यत् त्वं जराग्रस्तमसत्यसम्मतं
विहाय जारं भजसेऽमुमध्वगम् ॥ ३८

कथं मतिस्तेऽवगतान्यथा सतां
कुलप्रसूते कुलदूषणं त्विदम् ।
बिभर्षि जारं यदपत्रपा कुलं
पितुश्च भर्तुश्च नयस्यधस्तमः ॥ ३९

एवं ब्रुवाणं पितरं स्मयमाना शुचिस्मिता ।
उवाच तात जामाता तवैष भृगुनन्दनः ॥ ४०

शशंस पित्रे तत् सर्वं वयोरूपाभिलम्भनम् ।
विस्मितः परमप्रीतस्तनयां परिषस्वजे ॥ ४१

महाभारतवनपर्वणः श्रीमद्भागवताच्च सङ्कलितं सुकन्याकल्याणं सम्पूर्णम् ॥

---

# श्री कामरतिकल्याणम्

( शिवपुराणात् उद्धृतम् )

एवं चिन्तयतो मे हि ब्रह्मणो मुनिसत्तम ।
मानसः पुरुषो मञ्जुः आविर्भूतो महाद्भुतः ॥ १

काञ्चनीकृतजाताभः पीनोरस्कस्सुनासिकः ।
आरक्तपाणिनयनमुखपादकरोद्भवः ॥ २

क्षीणमध्यश्चारुदन्तः प्रमत्तगजगन्धनः ।
प्रफुल्लपद्मपत्राक्षः कशरघ्राणतर्पणः ॥ ३

कम्बुग्रीवो मीनकेतुः प्रांशुर्मकरवाहनः ।
पञ्चपुष्पायुधो वेगी पुष्पकोदण्डमण्डितः ॥ ४

कान्तः कटाक्षपातेन भ्रमायन्नयनद्वयम् ।
सुगन्धिमारुतो तात शृङ्गाररससेवितः ॥ ५

तं वीक्ष्य पुरुषं सर्वे दक्षाद्या मत्सुताश्च ते ।
औत्सुक्यं परमं जग्मुः विस्मयाविष्टमानसाः ॥ ६

अभवद्विकृतं तेषां मत्सुतानां मनो द्रुतम् ।
धैर्यं नैवालभत्तात कामाकुलितचेतसाम् ॥ ७

मां सोऽपि वेधसं वीक्ष्य स्रष्टारं जगतां पतिम् ।
प्रणम्य पुरुषः प्राह विनयानतकन्धरः ॥ ८

किं करिष्याम्यहं कर्म ब्रह्मंस्तत्र नियोजय ।
मान्योऽद्य पुरुषो यस्मात् उचितः शोभितो विधे ॥ ९

अभिमानं च योग्यं च स्थानं पत्नी च या मम ।
तन्मे वद त्रिलोकेश त्वं स्रष्टा जगतां पतिः ॥ १०

ब्रह्मोवाच—

एवं तस्य वचः श्रुत्वा पुरुषस्य महात्मनः ।
क्षणं न किंचित्प्रोवाच स्वस्रष्टा चातिविस्मितः ॥ ११
अतो मनस्सुसंयम्य सम्यगुत्सृज्य विस्मयम् ।
अवोचत् पुरुषं ब्रह्मा तत्कामं च समावहन् ॥ १२
अनेन त्वं स्वरूपेण पुष्पबाणैश्च पञ्चभिः ।
मोहयन् पुरुषान् स्त्रींश्च कुरु सृष्टिं सनातनीम् ॥ १३
अस्मिञ्जीवाश्च देवाद्यास्त्रैलोक्यं सचराचरं ।
एते सर्वे भविष्यन्ति न क्षमास्तव लङ्घने ॥ १४
अहं वा वासुदेवो वा स्थाणुर्वा पुरुषोत्तम ।
भविष्यामस्तव वशे किमन्ये प्राणधारकाः ॥ १५
प्रच्छन्नरूपो जन्तूनां प्रविशन् हृदयं सदा ।
सुखहेतुः स्वयं भूत्वा सृष्टिं कुरु सनातनीम् ॥ १६
त्वत्पुष्पबाणस्य सदा सुखलक्ष्यं मनोऽद्भुतम् ।
सर्वेषां प्राणिनां नित्यं सदा मदकरो भवान् ॥ १७
इति ते कर्म कथितं सृष्टिप्रावर्तकं पुनः ।
नामान्येते वदिष्यन्ति सुता मे तव तत्वतः ॥ १८
इत्युक्त्वाहं सुरश्रेष्ठ स्वसुतानां सुखानि च ।

आलोक्य स्वासने पार्श्वे प्रोपविष्टोऽभवं क्षणम् ॥ १९
ततस्ते मुनयस्सर्वे तदभिप्रायवेदिनः ।
चक्रुस्तदुचितं नाम मरीचिप्रमुखाः सुताः ॥ २०
मुखावलोकनादेव ज्ञात्वा वृत्तान्तमन्यतः ।
दक्षादयश्च स्रष्टारः स्थानं पत्नीं च ते ददुः ॥ २१
ततो निश्चित्य नामानि मरीचिप्रमुखाः द्विजाः ।
ऊचुः सङ्गतमेतस्मै पुरुषाय ममात्मजाः ॥ २२

ऋषय ऊचुः—

यस्मात्प्रमथसे तत्त्वं जातोऽस्माकं यथा विधेः ।
तस्मान्मन्मथनामा त्वं लोके ख्यातो भविष्यसि ॥ २३
जगत्सु कामरूपस्त्वं त्वत्समो न हि विद्यते ।
अतस्त्वं कामनामाऽपि ख्यातो भव मनोभव ॥ २४
मदनान्मदनाख्यस्त्वं जातो दर्पात्सदर्पकः ।
कन्दर्पनामाऽपि लोके ख्यातो भविष्यसि ॥ २५
त्वत्समं सर्वदेवानां यद्वीर्यं न भविष्यति ।
ततस्थानानि सर्वाणि सर्वव्यापी भवांस्ततः ॥ २६
दक्षोयं भवतः पत्नीं स्वयं दास्यति कामिनीम् ।
आद्यः प्रजापतिर्यो हि यथेष्टं पुरुषोत्तम ॥ २७
एषा च कन्यका चारुरूपा ब्रह्ममनोभवा ।
सन्ध्या नाम्नेति विख्याता सर्वलोके भविष्यति ॥ २८

ब्रह्मणो ध्यायतो यस्मात् सम्यग्जाता वराङ्गना ।
अतः सन्ध्येति विख्याता कान्ताभा तुल्यमल्लिका ॥ २९

ब्रह्मोवाच—

कौसुमानि तथास्त्राणि पञ्चादाय मनोभवः ।
प्रच्छन्नरूपी तत्रैव चिन्तयामास निश्चयम् ॥ ३०
हर्षणं रोचनाख्यं च मोहनं शोषणं तथा ।
मारणं चेति प्रोक्तानि मुनेर्मोहकराण्यपि ॥ ३१
ब्रह्मणा मम यत्कर्म समुद्दिष्टं सनातनम् ।
तदिहैव करिष्यामि मुनीनां सन्निधौ विधेः ॥ ३२
तिष्ठन्ति मुनयश्चात्र स्वयं चापि प्रजापतिः ।
एतेषां साक्षिभूतं मे भविष्यत्यद्य निश्चयम् ॥ ३३
सन्ध्याऽपि ब्रह्मणा प्रोक्ता चेदानीं प्रेषयद्वचः ।
इह कर्म परीक्ष्यैव प्रयोगान्मोहयाम्यहम् ॥ ३४
इति संचिन्त्य मनसा निश्चित्य च मनोभवः ।
पुष्पजं पुष्पजातैश्च योजयामास मार्गणैः ॥ ३५
आलीढस्थानमासाद्य धनुराकृष्य यत्नतः ।
चकार वलयाकारं कामो धन्विवरस्तदा ॥ ३६
संहिते तेन कोदण्डे मारुताश्च सुगन्धयः ।
ववुस्तत्र मुनिश्रेष्ठ सम्यगाह्लादकारिणः ॥ ३७
ततस्तानपि धात्रादीन् सर्वानेव च मानसान् ।

पृथक् पुष्पशरैस्तीक्ष्णैः मोहयामास मोहनः ॥ ३८

ततस्ते मुनयस्सर्वे मोहिताश्चाप्यहं मुने ।
संहितो मनसा किंचित् विकारं प्रापुरादितः ॥ ३९

सन्ध्यां सर्वे निरीक्षन्तः सविकारं मुहुर्मुहुः ।
आसन् प्रवृद्धमदनाः स्त्री यस्मान्मदनैधनी ॥ ४०

ततस्सर्बान् समदनो मोहयित्वा पुनः पुनः ।
यथेन्द्रियविकारं ते प्रापुस्तानकरोत्तदा ॥ ४१

उदीरितेन्द्रियो धाता वीक्ष्याहं स यदा च ताम् ।
तदैव चोनपञ्चाशद्भावा जातारशरीरतः ॥ ४२

साऽपि तैर्वीक्ष्यमाणाऽथ कन्दर्पशरपातनात् ।
चक्रे मुहुर्मुहुर्भावान् कटाक्षावरणादिकान् ॥ ४३

निसर्गसुन्दरी सन्ध्या तान्भावान्मानसोद्भवान् ।
कुर्वन्त्यतितरां रेजे स्वर्नदीव तनूर्मिभिः ॥ ४४

अथ भावयुतां सन्ध्यां वीक्ष्याकार्षं प्रजापतिः ।
घर्माभिभूरिततनुः अभिलाषामहं मुने ॥ ४५

ततस्ते मुनयस्सर्वे मरीच्यत्रिमुखा अपि ।
दक्षाद्याश्च द्विजश्रेष्ठ प्रापुर्वैकारिकेन्द्रियम् ॥ ४६

दृष्ट्वा तथाविधा दक्षमरीचिप्रमुखाश्च माम् ।
सन्ध्यां च कर्मणि निजे श्रद्दधे मदनस्तथा ॥ ४७

यदिदं ब्रह्मणः कर्म ममोद्दिष्टं मयापि तत् ।
कर्तुं शक्यमिति ह्यद्धा भावितं स्वभुवा तदा ॥ ४८

इत्थं पापगतिं वीक्ष्य भ्रातृणां च पितुस्तदा ।
धर्मस्ससार शम्भुं वै तदा धर्मावनं प्रभुम् ॥ ४९
संस्मरन् मनसा धर्मं शङ्करं धर्मपालकम् ।
तुष्टाव विविधैर्वाक्यैः दीनो भूत्वाजसम्भवः ॥ ५०

धर्म उवाच—

देव देव महादेव धर्मपाल नमोऽस्तु ते ।
सृष्टिस्थितिविनाशानां कर्ता शंभो त्वमेव हि ॥ ५१
सृष्टौ ब्रह्मा स्थितौ विष्णुः प्रलये हररूपधृक् ।
रजस्सत्वतमोभिश्च त्रिगुणैरगुणः प्रभो ॥ ५२
निस्त्रैगुण्यः शिवस्साक्षात्तुर्यश्च प्रकृतेः परः ।
निर्गुणो निर्विकारी त्वं नानालीलाविशारदः ॥ ५३
रक्ष रक्ष महादेव पापान्मां दुस्तरादितः ।
मत्पितायं तथाचेमे भ्रातरः पापबुद्धयः ॥ ५४
इति स्तुतो महेशानो धर्मेणैव परः प्रभुः ।
तत्राजगाम शीघ्रं वै रक्षितुं धर्ममात्मभूः ॥ ५५
जातो वियद्गतः शम्भुः विधिं दृष्ट्वा तथाविधम् ।
मां दक्षाद्यांश्च मनसा जहासोपजहास च ॥ ५६
स साधुवादं तान् सर्वान् विहस्य च पुनः पुनः ।
उवाचेदं मुनिश्रेष्ठ लज्जयन् वृषभध्वजः ॥ ५७

शिव उवाच—

अहो ब्रह्मन् तव कथं कामभावस्समुद्गतः ।

दृष्ट्वा च तनयां नैव योग्यं वेदानुसारिणाम् ॥ ५८
यथा माता च भगिनी भ्रातृपत्नी तथा सुता ।
एताः कुदृष्ट्या द्रष्टव्या न कदापि विपश्चिता ॥ ५९
एष वै वेदमार्गस्य निश्चयस्त्वन्मुखे स्थितः ।
कथं तु काममात्रेण स ते विस्मारितो विधे ॥ ६०
धैर्ये जागरितं ब्रह्मन् मनस्ते चतुरानन ।
कथं क्षुद्रेण कामेन रन्तुं विघटितं विधे ॥ ६१
एकान्तयोगिनस्तस्मात् सर्वदाऽदित्यदर्शिनः ।
कथं दक्षमरीच्याद्याः लोलुपाः स्त्रीषु मानसाः ॥ ६२
कथं कामोपि मन्दात्मा प्राबल्यात्सोऽधुनैव हि ।
विकृतान् बाणैः कृतवान् अकालज्ञोऽल्पचेतनः ॥ ६३
धिक् तं श्रुतं तस्य सदा यस्य कान्ता मनोऽहरत् ।
धैर्यादाकृष्य लौल्येषु मज्जयत्यपि मानसम् । ६४

ब्रह्मोवाच—

इति तस्य वचः श्रुत्वा लोके सोऽहं शिवस्य च ।
व्रीडया द्विगुणीभूतः स्वेदार्द्रस्त्वभवं क्षणात् ॥ ६५
ततो विगृह्यैन्द्रियकं विकारं चात्यजं मुने ।
जिघृक्षुरपि तद्भीत्या तां सन्ध्यां कामरूपणीम् ॥ ६६
मच्छरीरात्तु घर्माम्भो यत्पपात द्विजोत्तम ।
अग्निष्वात्ताः पितृगणाः जाताः पितृगणास्तदा ॥ ६७

भिन्नाञ्जननिभास्सर्वे फुल्लराजीवलोचनाः ।
नितान्तयतयः पुण्याः संसारविमुखाः परे ॥ ६८

सहस्राणां चतुष्षष्ठिरग्निष्वात्ताः प्रकीर्तिताः ।
षडशीतिस्सहस्राणि तथा बर्हिषदो मुने ॥ ६९

घर्माम्भः पतितं भूमौ तदा दक्षशरीरतः ।
समस्तगुणसंपन्ना तस्माज्जाता वराङ्गना ॥ ७०

तन्वङ्गी सममध्या च तनुरोमावली श्रुता ।
मृद्वङ्गी चारुदशना नवकाञ्चनसुप्रभा ॥ ७१

सर्वावयवरम्या च पूर्णचन्द्राननाम्बुजा ।
नाम्ना रतिरिति ख्याता मुनीनामपि मोहिनी ॥ ७२

मरीचिप्रमुखाः षड् वै निगृहीतेन्द्रियक्रियाः ।
ऋते क्रतुं वसिष्ठं च पुलस्त्याङ्गिरसौ तथा ॥ ७३

क्रत्वादीनां चतुर्णां च बीजं भूमौ पपात च ।
तेभ्यः पितृगणाः जाताः अपरे मुनिसत्तम ॥ ॥ ७४

सोमपा आज्यपा नाम्ना तथैवान्ये सुकालिनः ।
हविष्मन्तस्सुतास्सर्वे कव्यवाहाः प्रकीर्तिताः ॥ ७५

क्रतोस्तु सोमपाः पुत्राः वसिष्ठोत्कालिनस्तथा ।
आज्यपाख्याः पुलस्त्यस्य हविष्मन्तोऽङ्गिरास्सुताः ॥ ७६

जातेषु तेषु विप्रेन्द्र अग्निष्वात्तादिकेष्वथ ।
लोकानां पितृवर्गेषु कव्यवाट् स समन्ततः ॥ ७७

सन्ध्यापितृप्रसूर्भूत्वा तदुद्देशयुताऽभवन् ।
निर्दोषाः शंभुसंदृष्टाः धर्मकर्मपरायणाः ॥ ७८

एतस्मिन्नन्तरे शम्भुःअनुगृह्याखिलान् द्विजान् ।
धर्मं संरक्ष्य विधिवत् अन्तर्धानं गतो द्रुतम् ॥ ७९

अथ शङ्करवाक्येन लज्जितोऽहं पितामहः ।
कन्दर्पायाकोपिषं हि भ्रुकुटीकुटिलाननः ८०

दृष्ट्वा मुखमभिप्रायं विदित्वा सोऽपि मन्मथः ।
स्वबाणान् संजहाराशु भीतः पशुपतेर्मुने ॥ ८१

ततः कोपसमायुक्तः पद्मयोनिरहं मुने ।
उज्वलं चातिबलवान् दिधक्षुरिव पावकः ॥ ८२

भवनेत्राग्निनिर्दग्धः कन्दर्पो दर्पमोहितः ।
भविष्यति महादेवे कृत्वा कर्म सुदुष्करम् ॥ ८३

इति वेधास्त्वाह कामं अक्षयं द्विजसत्तम ।
समक्षं पितृसंघस्य मुनीनां च यतात्मनाम् ॥ ८४

इति भीतो रतिपतिः तत्क्षणात् त्यक्तमार्गणः ।
प्रादुर्बभूव प्रत्यक्षं शापं श्रुत्वातिदारुणम् ॥ ८५

ब्रह्माणं मामुवाचेदं सदक्षादिसुतं मुने ।
शृण्वतां पितृसंघानां संध्यायाश्च विगर्वधीः ॥ ८६

काम उवाच—

किमर्थं भवता ब्रह्मन् शप्तोऽहमिति दारुणम् ।

अनागास्तव लोकेश न्यायमार्गानुसारिणः ॥ ८७

त्वया चोक्तं नु मत्कर्म यत्तद् ब्रह्मन् कृतं मया ।
तत्र योग्यो न शापो मे यतो नान्यत्कृतं मया ॥ ८८

अहं विष्णुस्तथा शंभुः सर्वे त्वच्छरगोचराः ।
इति यद्भवता प्रोक्तं तन्मयाऽपि परीक्षितम् ॥ ८९

नापराधो ममाप्यत्र ब्रह्मन्मयि निरागसि ।
दारुणस्समयश्चैषः शापो देव जगत्पते ॥ ९०

इति तस्य वचः श्रुत्वा ब्रह्माहं जगतां पतिः ।
प्रत्यवोचं यतात्मानं मदनं दमयन्मुहुः ॥ ९१

ब्रह्मोवाच—

आत्मजा मम संध्येयं यस्मादेतत्सकामतः ।
लक्ष्यीकृतोऽहं भवता ततश्शापो मया कृतः ॥ ९२

अधुना शान्तरोषोऽहं त्वां वदामि मनोभव ।
शृणुष्व गतसंदेहः सुखी भव भयं त्यज ॥ ९३

त्वं भस्म भूत्वा मदन भर्गलोचनवह्निना ।
तथैवाशु समं पश्चाच्छरीरं प्रापयिष्यसि ॥ ९४

यदा करिष्यति हरः अञ्जसा दारपरिग्रहम् ।
तदा स एव भवतः शरीरं प्रापयिष्यति ॥ ९५

एवमुक्त्वाथ मदनं अहं लोकपितामहः ।
अन्तर्गतो मुनीन्द्राणां मानसानां प्रपश्यताम् ॥ ९६

इत्येवं मे वचः श्रुत्वा मदनस्तेऽपि मानसाः ।
संबभूवुस्सुतास्सर्वे सुखिनोऽरं शमं गतः ॥ ९७
शंभौ गते निजस्थाने वेधस्यन्तर्हिते मयि ।
दक्षः प्राहाऽथ कन्दर्पं संस्मरन् मम तद्वचः ॥ ९८

दक्ष उवाच—

मद्देहजेयं कन्दर्प सद्रूपगुणसंयुता ।
एनां गृह्णीष्व भार्यार्थं भवतः सदृशीं गुणैः ॥ ९९
एषा तव महातेजाः सर्वदा सहचारिणी ।
भविष्यति यथाकामं धर्मतो वशवर्तिनी ॥ १००
इत्युक्त्वा प्रददौ तस्मै देहस्वेदाम्बुसम्भवाम् ।
कन्दर्पायाग्रतः कृत्वा नाम कृत्वा रतीति ताम् ॥
विवाह्य तां स्मरस्सोपि मुमोदातीव नारद ।
दक्षजां तनयां रम्यां मुनीनामपि मोहिनीम् ॥ १०२
अथ तां वीक्ष्य मदनः रत्याख्यां स्वस्त्रियं शुभाम् ।
आत्मा गुणेन विद्धोसौ मुमोह रतिरञ्जितः ॥ १०३
क्षणप्रदाऽभवत्कान्ता गौरी मृगदृशी मुदा ।
लोलापांग्यथ तस्यैव भार्या च सदृशी रतौ ॥ १०४
तस्य भ्रुयुगळं वीक्ष्य संशयं मदनोऽकरोत् ।
उत्सादनं मत्कोदण्डं विधात्रास्या निवेशनम् ॥ १०५
क[illegible]क्षाणां आशुगतिं दृष्ट्वा तस्या द्विजोत्तम ।

आशु गन्तुं निजस्त्रीणां श्रद्दधे न च चारुताम् ॥
तस्याः स्वभावसुरभिधीरश्वासानिलं तथा ।
आघ्राय मदनः श्रद्धां त्यक्तवान् मलयानिले ॥ १०७
पूर्णेन्दुसदृशं वक्त्रं दृष्ट्वा लक्ष्म सुलक्षितम् ।
न निश्चिकाय मदनो भेदं तन्मुखचन्द्रयोः ॥ १०८
सुवर्णपद्मकलिकातुल्यं तस्याः कुचद्वयम् ।
रेजे चूचुकयुग्मेन भ्रमरेणेव वेष्टितम् ॥ १०९
दृढपीनोन्नतं तस्याः स्तनमध्यं विलम्बिनीम् ।
आनाभिप्रतलं मालां तन्वीं चन्द्रायितां शुभाम् ॥
ज्यां पुष्पधनुषः कामः षट्पदावलिसंभ्रमाम् ।
विसस्मार च यस्मात्तां विसृजैनां निरीक्षते ॥ १११
गम्भीरनाभिरंध्रान्तः चतुःपार्श्वत्वगावृतम् ।
आननश्चेऽक्षणो द्वन्द्वं आरक्तकफलं यथा ॥ ११२
क्षीणमध्येन वपुषा निसर्गाष्टापदप्रभा ।
रुक्मवेदीव ददृशे कामेन रमणी हि सा ॥ ११३
रंभास्तंभायतं स्निग्धं यदूरुयुगळं मृदु ।
निजशक्तिसमं कामो वीक्षांचक्रे मनोहरम् ॥ ११४
आरक्तपार्ष्णिपादाग्रप्रान्तभागं पदद्वयम् ।
अनुरागमिवानेन मित्रं तस्याः मनोभवः ॥ ११५
तस्याः करयुगं रक्तं नखरैः किंशुकोपमैः ।

वृत्ताभिरङ्गुलीभिश्च सूक्ष्माग्राभिर्मनोहरम् ॥ ११६

तद्बाहुयुगलं कान्तं मृणालयुगलायतम् ।
मृदु स्निग्धं चिरं राजत्कान्तिलोहप्रवालवत् ॥ ११७

नीलनीरदसंकाशः केशपाशो मनोहरः ।
चमरीबालभरवद्विभाति स्म स्मरप्रिया ॥ ११८

एतादृशीं रतिं नाम्ना प्रालेयाद्रिसमुद्भवाम् ।
गंगामिव महादेवो जग्राहोत्फुल्ललोचनः ॥ ११९

चक्रपद्मां चारुबाहुं मृणालशकलान्विताम् ।
भ्रूयुग्मविभ्रमव्राततनूर्मिपरिराजिताम् ॥ १२०

कटाक्षपाततुंगौघां स्वीयनेत्रोत्पलान्विताम् ।
तनुलोमांबुशैवालां मनोद्रुमविलासिनीम् ॥ १२१

निम्ननाभिहृदां क्षामां सर्वाङ्गरमणीयकाम् ।
सर्वलावण्यसदनां शोभमानां रमामिव ॥ १२२

द्वादशाभरणैर्युक्तां शृङ्गारैः षोडशैर्युताम् ।
मोहिनीं सर्वलोकानां भासयंतीं दिशो दश ॥ १२३

इति तां मदनो वीक्ष्य रतिं जग्राह सोत्सुकः ।
रागादुपस्थितां लक्ष्मीं हृषीकेश इवोत्तमम् ॥ १२४

नोवाच च तदा दक्षं कामो मोदभवात्ततः ।
विस्मृत्य दारुणं शापं विधिदत्तं विमोहितः ॥ १२५

तदा महोत्सवस्तात बभूव सुखवर्धनः ।

दक्षः प्रीततरश्चासीत् मुमुदे तनया मम ॥ १२६

कामोऽतीव सुखं प्राप्य सर्वदुःखक्षयं गतः ।
दक्षजापि रतिः कामं प्राप्य चापि जहर्ष च ॥ १२७

रराज तनया सार्धं भिन्नश्चारुवचाः स्मरः ।
जीमूत इव सन्ध्यायां सौदामन्या मनोज्ञया ॥ १२८

इति रतिपतिरुच्चैर्मोहयुक्तो रतिं तां
हृदुपरि जगृहे वै योगदर्शीव विद्याम् ।
रतिरपि पतिमग्र्यं प्राप्य सा चापि रेजे
हरिमिव कमला वै पूर्णचन्द्रोपमास्या ॥ १२९

इति श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां कामरतिविवाहवर्णनं नाम
चतुर्थोध्यायः सम्पूर्णः ॥

---

# श्री गङ्गाकल्याणम्

( महाभारतस्य आदिपर्वण उद्धृतम् )

एतस्मिन्नेव काले तु प्रतीपः क्षत्रियर्षभः ।
तपस्तेपे सुतस्यार्थे सभार्यः कुरुनन्दन ॥ १

प्रतीपस्य तु भार्यायां गर्भः श्रीमानवर्धत ।
श्रिया परमया युक्तः शरच्छुक्ले यथा शशी ॥ २

ततस्तु दशमे मासि प्राजायत रविप्रभम् ।
कुमारं देवगर्भाभं प्रतीपमहिषी तदा ॥ ३

तयोः समभवत्पुत्रो वृद्धयोः स महाभिषक् ।
शान्तस्य जज्ञे सन्तानस्तस्मदासीत्स शान्तनुः ॥ ४

तस्य जातस्य कृत्यानि प्रतीपोऽकारयत्प्रभुः ।
जातकर्मादि विप्रेण वेदोक्तैः कर्मभिस्तदा ॥ ५

नामकर्म च विप्रास्तु चक्रुः परमसत्कृतम् ।
शान्तनोरवनीपाल वेदोक्तैः कर्मभिस्तदा ॥ ६

ततः संवर्धितो राजा शान्तनुर्लोकधार्मिकः ।
स तु लेभे परां निष्ठां प्राप्य धर्मभृतां वरः ॥ ७

धनुर्वेदे च वेदे च गतिं स परमां गतः ।
यौवनं चापि संप्राप्तः कुमारो वदतां वरः ॥ ८

संस्मरंश्चाक्षयाँल्लोकान् विजातान्स्वेन कर्मणा ।
पुण्यकर्मकृदेवासीच्छान्तनुः कुरुसत्तमः ॥ ९

प्रतीपः शान्तनुं पुत्रं यौवनस्थं ततोऽन्वशात् ।
पुरा स्त्री मां समभ्यागात् शान्तनो भूतये तव ॥ १०

त्वामाव्रजेद्यदि रहः सा पुत्र वरवर्णिनी ।
कामयानाऽभिरूपाढ्य दिव्यस्त्री पुत्रकाम्यया ॥ ११

सा त्वया नानुयोक्तव्या कासि कस्यासि चाङ्गने ।
यच्च कुर्यान्न तत्कर्म सा प्रष्टव्या त्वयाऽनघ ॥ १२

मन्नियोगाद्भजन्तीं तां भजेथा इत्युवाच तम् ।
एवं सन्दिश्य तनयं प्रतीपः शान्तनुं तदा ॥ १३

स्वे च राज्येऽभिच्यैनं वनं राजा विवेश ह ।
स राजा शान्तनुर्धीमान् देवराजसमद्युतिः ॥

बभूव सर्वलोकस्य सत्यवागिति सम्मतः ।
पीनस्कन्धो महाबाहुः मत्तवारणविक्रमः ॥ १५

अन्वितः परिपूर्णार्थैः सर्वैर्नृपतिलक्षणैः ।
अमात्यलक्षणोपेतः क्षत्रधर्मविशेषवित् ॥ १६

वशे चक्रे महीमेको विजित्य वसुधाधिपान् ।
वेदानागमयत्कृत्स्नान् राजधर्मांश्च सर्वशः ॥ १७

ईजे च बहुभिः सत्रैः क्रतुभिर्भूरिदक्षिणैः ।
तर्पयामास विप्रांश्च वेदाध्ययनकोविदान् ॥ १८

रत्नैरुच्चावचैर्गोभिः ग्रामैरश्वैर्धनैरपि ।
वयोरूपेण सम्पन्नः पौरुषेण बलेन च ॥ १९

ऐश्वर्येण प्रतापेन विक्रमेण धनेन च ।
वर्तमानश्च सत्येन सर्वधर्मविशारदः ॥ २०

तं महीपं महीपाला राजराजमकुर्वत ।
वीतशोकभयाबाधाः सुखस्वप्नप्रबोधनाः ॥ २१

श्रिया भरतशार्दूल समपद्यन्त भूमिपाः ।
नियमैः सर्ववर्णानां ब्रह्मोत्तरमवर्तत ॥ २२

ब्राह्मणाभिमुखं क्षत्रं क्षत्रियाभिमुखा विशः ।
ब्रह्मक्षत्रानुकूलांश्च शूद्राः पर्यचरन्विशः ॥ २३

एवं पशुवराहाणां तथैव मृगपक्षिणाम् ।
शान्तनावथ राज्यस्थे नावर्तत वृथा वधः ॥ २४

असुखानामनाथानां तिर्यग्योनिषु वर्तताम् ।
स एव राजा सर्वेषां भूतानामभवत्पिता ॥ २५

स हस्तिनाम्नि धर्मात्मा विहरन्कुरुनन्दनः ।
तेजसा सूर्यकल्पोऽभूद्वायुना च समो बले ॥ २६

अन्तकप्रतिमः कोपे क्षमया पृथिवीसमः ।
बभूव राजा सुमतिः प्रजानां सत्यविक्रमः ॥ २७

स वनेषु च रम्येषु शैलप्रस्रवणेषु च ।
चचार मृगयाशीलः शान्तनुर्वनगोचरः ॥ २८

स मृगान् महिषांश्चैव विनिघ्नन्राजसत्तमः ।
गङ्गामनु चचारैकः सिद्धचारणसेविताम् ॥ २९

स कदाचिन्महाराज ददर्श परमां स्त्रियम् ।
जाज्वल्मानां वपुषा साक्षाच्छ्रियमिवापराम् ॥ ३०

सर्वानवद्यां सुदतीं दिव्याभरणभूषिताम् ।
सूक्ष्माम्बरधरामेकां पद्मोदरसमप्रभाम् ॥ ३१

स्नातगात्रां धौतवस्त्रां गङ्गातीररुहे वने ।
प्रकीर्णकेशीं पाणिभ्यां संस्पृशन्तीं शिरोरुहान् ॥ ३२

रूपेण वयसा कान्त्या शरीरावयवैस्तथा ।
हावभावविलासैश्च लोचनाञ्चलविक्रियैः ॥ ३३

श्रोणीभारेण मध्येन स्तनाभ्यामुरसा दृशा ।
कबरीभरेण पादाभ्यां इङ्गितेन स्मितेन च ॥ ३४

कोकिलालापसल्लापैः न्युक्कुर्वन्तीं त्रिलोकगाम् ।
वाणीं च गिरिजां लक्ष्मीं योषितोऽन्याः सुराङ्गनाः ॥ ३५

सा च शान्तनुमभ्यागादलक्ष्मीमपकर्षती ।
तां दृष्ट्वा हृष्टरोमाऽभूद्विस्मितो रूपसंपदा ॥ ३६

पिबन्निव च नेत्राभ्यां नातृप्यत नराधिपः ।
सा च दृष्ट्वैव राजानं विचरन्तं महाद्युतिम् ॥ ३७

स्नेहादागतसौहार्दा नातृप्यत विलासिनी ।
गङ्गा कामेन राजानं प्रेक्षमाणा विलासिनी ।

चञ्चूर्यताग्रतस्तस्य किन्नरीवाप्सरोपमा ॥ ३८

दृष्ट्वा प्रहृष्टरूपोऽभूद्दर्शनादेव शान्तनुः ।
रूपेणातीत्य तिष्ठन्तीं सर्वा राजन्ययोषितः ॥ ३९

तामुवाच ततो राजा सान्त्वयञ्श्लक्ष्णया गिरा ।
देवी वा दानवी वा त्वं गन्धर्वी चाथवाऽप्सराः ॥ ४०

यक्षी वा पन्नगी वाऽपि मानुषी वा सुमध्यमे ।
याऽसि काऽसि सुरप्रख्ये महिषी मे भवानघे ॥ ४१

त्वां गता हि मम प्राणा वसु यन्मेऽस्ति किञ्चन ।
याचे त्वां सुरगर्भाभे भार्या मे भव शोभने ॥ ४२

वैशम्पायन उवाच—

एतच्छ्रुत्वा वचो राज्ञः सस्मितं मृदु वल्गु च ।
यशस्विनी च साऽगच्छच्छान्तनोः भूतये तदा ॥ ४३

सा तु दृष्ट्वा नृपश्रेष्ठं चरन्तं तीरमाश्रितम् ।
वसूनां समयं स्मृत्वाऽथाभ्यगच्छदनिन्दिता ॥ ४४

प्रजार्थिनी राजपुत्रं शान्तनुं पृथिवीपतिम् ।
प्रतीपवचनं चापि संस्मृत्यैव स्वयं नृपम् ॥ ४५

कालोऽयमिति मत्वा सा वसूनां शापचोदिता ।
उवाच चैव राज्ञः सा ह्लादयन्ती मनो गिरा ॥ ४६

गङ्गोवाच—

भविष्यामि महीपाल महिषी ते वशानुगा ।

न तु त्वं वा द्वितीयो वा ज्ञातुमिच्छेत्कथंचन ॥ ४७
यत्तु कुर्यामहं राजन् शुभं वा यदिवाऽशुभम् ।
न तद्वारयितव्याऽस्मि न वक्तव्या तथाऽप्रियम् ॥ ४८
एवं हि वर्तमानेऽहं त्वयि वत्स्यामि पार्थिव ।
वारिता विप्रियं चोक्ता त्यजेयं त्वामसंशयम् ॥ ४९
एष मे समयो राजन् भज मां त्वं यथेप्सितम् ।
अनुनीताऽस्मि ते पित्रा भर्ता मे त्वं भव प्रभो ॥ ५०

वैशम्पायन उवाच—

तथेति सा यदा तूक्ता तदा भरतसत्तम ।
प्रहर्षमतुलं लेभे प्राप्य तं पार्थिवोत्तमम् ॥ ५१
प्रतिज्ञाय तु तत्तस्याः तथेति मनुजाधिपः ।
रथमारोप्य तां देवीं जगाम स तया सह ॥ ५२
सा च शान्तनुमभ्यागात् साक्षाल्लक्ष्मीरिवापरा ।
आसाद्य शान्तनुस्तां च बुभुजे कामतो वशी ॥ ५३
न प्रष्टव्येति मन्वानो न स तां किञ्चिदूचिवान् ।
स तस्याः शीलवृत्तेन रूपौदार्यगुणेन च ॥ ५४
उपचारेण च रहः तुतोष जगतीपतिः ।
स राजा परमप्रीतः परमस्त्रीप्रलालितः ॥ ५५
दिव्यरूपा हि सा देवी गङ्गा त्रिपथगामिनी ।
मानुषं विग्रहं कृत्वा श्रीमन्तं वरवर्णिनी ॥ ५६

भाग्योपनतकामस्य भार्या चोपनताऽभवत् ।
शान्तनोर्नृपसिंहस्य देवराजसमद्युतेः ॥ ५७

सम्भोगस्नेहचातुर्यैः हावलास्यैर्मनोहरैः ।
राजानं रमयामास यथा रज्येत स प्रभुः ।
स राजा रतिसक्तोऽभूदुत्तमस्त्रीगुणैः हृतः ॥ ५८

इति श्रीमन्महाभारते आदिपर्वणि गङ्गाकल्याणं सम्पूर्णम् ॥

---

# श्री उषाकल्याणम्

( श्रीमद्भागवतात् विष्णुपुराणात् हरिवंशात् च समुद्धृतम् )

बाणः पुत्रशतज्येष्ठो बलेरासीत् महात्मनः ।
येन वामनरूपाय हरयेऽदायि मेदिनी ॥ १

तस्यौरसः सुतो बाणः शिवभक्तिरतः सदा ।
मान्यो वदान्यो धीमांश्च सत्यसन्धो दृढव्रतः ॥ २

शोणिताख्ये पुरे रम्ये स राज्यमकरोत् पुरा ।
तस्य शम्भोः प्रसादेन किङ्करा इव तेऽमराः ।
सहस्रबाहुर्वाद्येन ताण्डवेऽतोषयत् मृडम् ॥ ३

भगवान् सर्वभूतेशः शरण्यो भक्तवत्सलः ।
वरेणच्छन्दयामास स तं वव्रे पुराधिपम् ॥ ४

स एकदाऽह गिरिशं पार्श्वस्थं वीर्यदुर्मदः ।
किरीटेनार्कवर्णेन संस्पृशन् तत्पदाम्बुजम् ॥ ५

नमस्ये त्वां महादेव लोकानां गुरुमीश्वरम् ।
पुंसां अपूर्णकामानां कामपूरामराङ्घ्रिपम् ॥ ६

दोःसहस्रं मया दत्तं परं भाराय मेऽभवत् ।
त्रिलोक्यां प्रतियोद्धारं न लभे त्वदृते समम् ॥ ७

तत् श्रुत्वा भगवान् क्रुद्धः केतुस्ते भज्यते यदा ।
त्वद्दर्पघ्नं भवेत् मूढ संयुगं मत्समेन ते ॥ ८

इत्युक्तः कुमतिर्हृष्टः स्वगृहं प्राविशत् नृप ।
प्रतीक्षन् गिरिशादेशं स्ववीर्यनशनं कुधीः ॥ ९

( श्रीमद्भागवतात् )

उषा बाणसुता विप्र पार्वतीं सह शम्भुना ।
क्रीडन्तीं उपलक्ष्योच्चैः स्पृहां चक्रे तदाश्रयाम् ॥ १०

ततः सकलचित्तज्ञा गौरी तामाह भामिनीम् ।
अलं अत्यर्थतापेन भर्त्रा त्वमपि रंस्यसे ॥ ११

इत्युक्ता सा तया चक्रे कदेति मतिं आत्मनः ।
को वा भर्ता ममेत्याह पुनस्तामाह पार्वती ॥ १२

पार्वत्युवाच—

वैशाखशुक्लद्वादश्यां स्वप्ने योऽभिभवं तव ।
करिष्यति स ते भर्ता राजपुत्रि भविष्यति ॥ १३

तस्यां तिथौ उषास्वप्ने यथा देव्या समीरितम् ।

तथैवाभिभवं चक्रे कश्चित् रागं च तत्र सा ॥ १४

( श्रीविष्णुपुराणात् )

सा तत्र तमपश्यन्ती क्वासि कान्तेति वादिनी ।
सखीनां मध्य उत्तस्थौ विह्वला व्रीडिता भृशम् ॥ १५

बाणस्य मन्त्री कुम्भाण्डः चित्रलेखा च तत्सुता ।
सख्यपृच्छत् सखीं ऊषां कौतूहलसमन्विता ॥ १६

कं त्वं मृगयसे सुभ्रूः कीदृशस्ते मनोरथः ।
हस्तग्राहं न तेऽद्यापि राजपुत्रि उपलक्षये ॥ १७

उषोवाच—

दृष्टः कश्चित् नरः स्वप्ने श्यामः कमललोचनः ।
पीतवासा बृहद्बाहुः योषितां हृदयङ्गमः ॥ १८

तमहं मृगये कान्तं पाययित्वा अधरं मधु ।
क्वापि यातः स्पृहयतीं क्षिप्त्वा मां वृजिनार्णवे ॥ १९

चित्रलेखेवाच—

व्यसनं तेऽपकर्षामि त्रिलोक्यां यदि भाव्यते ।
तमानेष्ये नरं यस्ते मनोहर्ता तमादिश ॥ २०

इत्युक्त्वा देवगन्धर्वसिद्धचारणपन्नगान् ।
दैत्यविद्याधरान् यक्षान् मनुजांश्च यथालिखत् ॥ २१

मनुजेषु च सा वृष्णीन् शूरमानकदुन्दुभिम् ।
व्यलिखत् रामकृष्णौ च प्रद्युम्नं वीक्ष्य लज्जिता । २२

अनिरुद्धं विलिखितं वीक्ष्योषा अवाङ्मुखी ह्रिया ।

सोऽसावसाविति प्राह स्मयमाना महीपते ॥ २३

चित्रलेखा तमाज्ञाय पौत्रं कृष्णस्य योगिनी ।
ययौ विहायसा राजन् द्वारकां कृष्णपालिताम् ॥ २४

तत्र सुप्तं सुपर्यङ्के प्राद्युम्निं योगमास्थिता ।
गृहीत्वा शोणितपुरं सख्यै प्रियमदर्शयत् ॥ २५

( श्रीमद्भागवतात् )

ततश्चोद्वाहधर्मेण गान्धर्वेण समीयतुः ।
कान्तेन सह संयुक्ता दिव्यवस्त्रानुलेपना ॥ २६

( हरिवंशात् )

सा च तं सुन्दरवरं विलोक्य मुदितानना ।
दुष्प्रेक्ष्ये स्वगृहे पुम्भी रेमे प्राद्युम्निना समम् ॥ २७

परार्ध्यवासस्स्रग्गन्धधूपदीपासनादिभिः ।
पानभोजनभक्ष्यैश्च वाक्यैः शुश्रूषयार्चितः ॥ २८

गूढः कन्यापुरे शश्वत् प्रवृद्धस्नेहया तया ।
नाहर्गणान् स बुबुधे ऊषयापहृतेन्द्रियः ॥ २९

तां तथा यदुवीरेण भुज्यमानां हतव्रताम् ।
हेतुभिः लक्षयाञ्चक्रुः आप्रीतां दुरवच्छदैः ॥ ३०

भटा आवेदयाञ्चक्रू राजंस्ते दुहितुर्वयम् ।
विचेष्टितं लक्षयामः कन्यायाः कुलदूषणम् ॥ ३१

अनपायिभिः अस्माभिः गुप्तायाश्च गृहे विभो ।
कन्यायाः दूषणं पुम्भिः दुष्प्रेक्षाया न विद्महे ॥ ३२

ततः प्रव्यथितो बाणो दुहितुः श्रुतदूषणः ।
त्वरितः कन्यकागारं प्राप्तोऽद्राक्षीत् यदूद्वहम् ॥ ३३

कामात्मजं तं भुवनैकसुन्दरं
श्यामं पिशङ्गाम्बरं अम्बुजेक्षणम् ।
बृहद्भुजं कुण्डलकुन्तलत्विषा
स्मितावलोकेन च मण्डिताननम् ॥ ३४

दीव्यन्तं अक्षैः प्रिययाभिनृम्णया
तदङ्गसङ्गस्तनकुङ्कुमस्रजम् ।
बाह्वोर्दधानं मधुमल्लिकाश्रितां
तस्याग्र आसीनं अवेक्ष्य विस्मितः ॥ ३५

स तं प्रविष्टं वृतं आततायिभिः
भटैरनेकैरवलोक्य माधवः ।
उद्यम्य मौर्वं परिघं व्यवस्थितः
यथान्तको दण्डधरो जिघांसया ॥ ३६

जिघृक्षया तान् परितः प्रसर्पतः
शुनो यथा सूकरयूथपोऽहनत् ।
ते हन्यमाना भवनात् विनिर्गताः
निर्भिन्नमूर्धोरुभुजाः प्रदुद्रुवुः ॥ ३७

तं नागपाशैः बलिनन्दनो बली
घ्नन्तं स्वसैन्यं कुपितो बबन्ध ह ।

ऊषा भृशं शोकविषादविह्वला
बद्धं निशम्य अश्रुकलाक्षी अरौदिषीत् ॥ ३८

( श्रीमद्भागवतात् )

वैशम्पायन उवाच—

यदा बाणपुरे वीरः सोऽनिरुद्धः सहोषया ।
संनिरुद्धो नरेन्द्रेण बाणेन बलिसूनुना ॥ ३९
तदा देवीं कोटवतीं रक्षार्थं शरणं गतः ।
यद्गीतं अनिरुद्धेन देव्याः स्तोत्रं इदं शृणु ॥ ४०
अनन्तमक्षयं दिव्यं आदिदेवं सनातनम् ।
नारायणं नमस्कृत्य प्रवरं जगतां प्रभुम् ॥ ४१
चण्डीं कात्यायनीं देवीं आर्यां लोकनमस्कृताम् ॥
वरदां कीर्तयिष्यामि नामभिर्हरिसंस्तुतैः ॥ ४२
ऋषिभिर्दैवतैश्चैव वाक्पुष्पैरर्चितां शुभाम् ।
तां देवीं सर्वदेहस्थां सर्वदेवनमस्कृताम् ॥ ४३

अनिरुद्ध उवाच—

महेन्द्रविष्णुभगिनीं नमस्यामि हिताय वै ।
मनसा भावशुद्धेन शुचिः स्तोष्ये कृताञ्जलिः ॥ ४४
गौतमीं कंसभयदां यशोदानन्दवर्द्धिनीम् ।
मेध्यां गोकुलसम्भूतां नन्दगोपस्य नन्दिनीम् ॥ ४५
प्राज्ञां दक्षां शिवां सौम्यां दनुपुत्रविमर्दिनीम् ।
तां देवीं सर्वदेहस्थां सर्वभूत नमस्कृताम् ॥ ४६

दर्शनीं पूरणीं मायां वह्निसूर्यसमप्रभाम् ।
शान्ति ध्रुवां च जननीं मोहिनीं शोषणीं तथा ॥ ४७

सेव्यां देवैः सर्षिगणैः सर्वदेवनमस्कृताम् ।
कालीं कात्यायनीं देवीं भयदां भयनाशिनीम् ॥ ४८

कालरात्रिं कामगमां त्रिनेत्रां ब्रह्मचारिणीम् ।
सौदामिनीं मेघरवां वेतालीं विपुलाननाम् ॥ ४९

यूथस्याद्यां महाभागां शकुनीं रेवतीं तथा ।
तिथीनां पञ्चमीं षष्ठीं पूर्णमासीं चतुर्दशीम् ॥ ५०

सप्तविंशति ऋक्षाणि नद्यः सर्वा दिशो दश ।
नगरोपवनोद्यानद्वाराट्टालकवासिनीम् ॥ ५१

ह्रीं श्रीं गङ्गां च गन्धर्वीं योगिनीं योगदां सताम् ।
कीर्तिं आशां दिशं स्पर्शां नमस्यामि सरस्वतीम् ॥ ५२

वेदानां मातरं चैव सावित्रीं भक्तवत्सलाम् ।
तपस्विनीं शान्तिकरीं एकानंशां सनातनाम् ॥ ५३

कौटीर्यां मदिरां चण्डां इलां मलयवासिनीम् ।
भूतधात्रीं भयकरीं कूष्माण्डीं कुसुमप्रियाम् ॥ ५४

दारुणीं मदिरावासां विन्ध्यकैलासवासिनीम् ।
वराङ्गनां सिंहरथीं बहुरूपां वृषध्वजाम् ॥ ५५

दुर्लभां दुर्जयां दुर्गां निशुम्भभयदर्शिनीम् ।
इन्द्राणीयां सुरां देवीं वज्रपाण्यनुजां शिवाम् ॥ ५६

किरातीं चीरवसनां चौरसेनानमस्कृताम् ।
आज्यपां सोमपां सौम्यां सर्वपर्वतवासिनीम् ॥ ५७

निशुम्भशुम्भमथनीं गजकुम्भोपमस्तनीम् ।
जननीं सिद्धसेनस्य सिद्धचारणसेविताम् ॥ ५८

चरां कुमारप्रभवां पार्वतीं पर्वतात्मजाम् ।
पञ्चाशद्देवकन्यानां पत्न्यो देवगणस्य च ॥ ५९

कद्रुपुत्रसहस्रस्य पुत्रपौत्रवरस्त्रियः ।
माता पिता जगन्मान्या दिवि देवाप्सरोगणैः ॥ ६०

ऋषिपत्नीगणानां च यक्षगन्धर्वयोषिताम् ।
विद्याधराणां नारीषु साध्वीषु मनुजासु च ॥ ६१

एवं एतासु नारीषु सर्वभूताश्रया हि असि ।
नमस्कृतासि त्रैलोक्ये किन्नरोद्गीतसेविते ॥ ६२

अचिन्त्याह्यप्रमेयासि यासि सासि नमोऽस्तु ते ।
एभिर्नामाभिरन्यैश्च कीर्तिताह्यसि गौतमि ॥ ६३

त्वत्प्रसादात् अविघ्नेन क्षिप्रं मुच्येय बन्धनात् ।
अत्रेक्षस्व विशालाक्षि पादौ ते शरणं व्रजे ॥ ६४

सर्वेषामेव बन्धानां मोक्षणं कर्तुमर्हसि ।
ब्रह्मा विष्णुश्च रुद्रश्च चन्द्रसूर्याग्निमारुताः ॥ ६५

अश्विनौ वसवश्चैव धाता भूमिर्दिशो दश ।
गावो नक्षत्रवंशाश्च ग्रहा नद्यो ह्रदास्तथा ॥ ६६

सरितः सागराश्चैव नानाविद्याधरोरगाः ।
तथा नगास्तु पर्वाणः गन्धर्वाप्सरसां गणाः ॥ ६७

कृत्स्नं जगदिदं प्रोक्तं देव्याः नामानुकीर्तनात् ।
देव्याः स्तवमिमं पुण्यं यः पठेत् सुसमाहितः ॥ ६८

सा तस्मै सप्तमे मासि वरमग्र्यं प्रयच्छति ।
अष्टादशभुजा देवी दिव्याभरणभूषिता ॥ ६९

हारशोभितसर्वाङ्गी मुकुटोज्वलभूषणा ।
कात्यायिनी स्तूयसे त्वं वरमग्र्यं प्रयच्छसि ॥ ७०

अतः स्तवीमि त्वां देवीं वरदे वामलोचने ।
नमोऽस्तु ते महादेवि सुप्रीता मे सदा भव ॥ ७१

प्रयच्छ त्वं वरं ह्यायुः पुष्टिं चैव क्षमां धृतिम् ।
बन्धनस्थो विमुच्येयं सत्यमेतत् भवेदिति ॥ ७२

एवं स्तुता महादेवी दुर्गा दुर्गपराक्रमा ।
सान्निध्यं कल्पयामास अनिरुद्धस्य बन्धने ॥ ७३

अनिरुद्धहितार्थाय देवी शरणवत्सला ।
बद्धं बाणपुरे वीरं अनिरुद्धं व्यमोक्षयत् ॥ ७४

सान्त्वयामास तं वीरं अनिरुद्धं अमर्षणम् ।
पूजयामास तां वीरः सोऽनिरुद्धः प्रतापवान् ॥ ७५

प्रसादं दर्शयामास अनिरुद्धस्य बन्धने ।
नागपाशेन बद्धस्य तस्योषाहृतचेतसः ॥ ७६

स्फोटयित्वा कराग्रेण पञ्जरं वज्रसन्निभम् ।
रुद्धं बाणपुरे वीरं साऽनिरुद्धं अभाषत ।
सान्त्वयन्ती वचो देवी प्रसादामुखी तदा ॥ ७७

चक्रायुधो मोक्षयिता ऽनिरुद्ध
त्वां बन्धनात् आशु सहस्व कालम् ।
छित्वा स बाणस्य सहस्रबाहुं
पुरीं निजां नेष्यति दैत्यसूदनः ॥ ७८

ततोऽनिरुद्धः पुनरेव देवीं
तुष्टाव हृष्टः शशिकान्तवक्त्रः ।
नमोऽस्तु ते देवि वरप्रदे शिवे
नमोऽस्तु ते देवि सुरारिनाशिनि ॥ ७९

नमोऽस्तु ते कामचरे सदाशिवे
नमोऽस्तु ते सर्वहितैषिणि प्रिये ।
नमोऽस्तु ते भीतिकरि द्विषां सदा
नमोऽस्तु ते बन्धनमोक्षकारिणि ॥ ८०

ब्रह्माणिन्द्राणि रुद्राणि भूतभव्यभवे शिवे ।
त्राहि मां सर्वभीतिभ्यः नारायणि नमोऽस्तु ते ॥ ८१

नमोऽस्तु ते जगन्नाथे प्रिये दान्ते महाव्रते ।
भक्तिप्रिये जगन्मातः शैलपुत्रि वसुन्धरे ॥ ८२

त्राहि मां त्वं विशालाक्षि नारायणि नमोऽस्तु ते ।

त्रायस्व सर्वदुःखेभ्यो दानवानां भयङ्करि ॥ ८३

रुद्रप्रिये महाभागे भक्तानां आर्तिनाशिनि ।
नमामि शिरसा देवीं बन्धनस्थो विमोक्षितः ॥ ८४

(हरिवंशात्)

अपश्यतां च अनिरुद्धं तद्बन्धूनां च भारत ।
चत्वारो वार्षिका मासा व्यतीयुरनुशोचताम् ॥ ८५

नारदात् तदुपाकर्ण्य वार्तां बद्धस्य कर्म च ।
प्रययुः शोणितपुरं वृष्णयः कृष्णदेवताः ॥ ८६

प्रद्युम्नो युयुधानश्च गदः साम्बोऽथ सारणः ।
नन्दोपनन्दभद्राद्याः रामकृष्णानुवर्तिनः ॥ ८७

अक्षौहिणीभिः द्वादशभिः समेता सर्वतो दिशम् ।
रुरुधुः बाणनगरं समन्तात् सात्वतर्षभाः ॥ ८८

भज्यमानपुरोद्यानप्राकाराट्टालगोपुरम् ।
प्रेक्षमाणो रुषाविष्टः तुल्यसैन्योऽभिनिर्ययौ ॥ ८९

बाणार्थे भगवान् रुद्रः ससुतैः प्रमथैर्वृतः ।
आरुह्य नन्दिवृषभं युयुधे रामकृष्णयोः ॥ ९०

आसीत् सुतुमुलं युद्धं अद्भुतं रोमहर्षणम् ।
कृष्णशङ्करयो राजन् प्रद्युम्नगुहयोरपि ॥ ९१

कुम्भाण्डकूपकर्णाभ्यां बलेन सह संयुगः ।
साम्बस्य बाणपुत्रेण बाणेन सह सात्यकेः ॥ ९२

ब्रह्मादयः सुराधीशाः मुनयः सिद्धचारणाः ।
गन्धर्वाप्सरसो यक्षाः विमानैर्द्रष्टुं आगताः ॥ ९३

शङ्करानुचरान् शौरिः भूतप्रमथगुह्यकान् ।
डाकिनीर्यातुधानांश्च वेतालान् सविनायकान् ॥ ९४

प्रेतमातृपिशाचांश्च कूष्माण्डान् ब्रह्मराक्षसान् ।
द्रावयामास तीक्ष्णाग्रैः शरैः शार्ङ्गधनुश्च्युतैः ॥ ९५

पृथग्विधानि प्रायुङ्क्त पिनाक्यस्त्राणि शार्ङ्गिणे ।
प्रत्यस्त्रैः शमयामास शार्ङ्गपाणिरविस्मितः ॥ ९६

ब्रह्मास्त्रस्य च ब्रह्मास्त्रं वायव्यस्य च पार्वतम् ।
आग्नेयस्य च पार्जन्यं नैजं पाशुपतस्य च ॥ ९७

मोहयित्वा तु गिरिशं जृम्भणास्त्रेण जृम्भितम् ।
बाणस्य पृतनां शौरिः जघानासिगदेषुभिः ॥ ९८

स्कन्दः प्रद्युम्नबाणौघैः अर्घमानः समन्ततः ।
असृक् विमुञ्चन् गात्रेभ्यः शिखिना अपाक्रमत् रणात् ॥

कुम्भाण्डः कूपकर्णश्च पेततुः मुसलार्दितौ ।
दुद्रुवुः तदनीकानि हतनाथानि सर्वतः ॥ १००

विशीर्यमाणं स्वबलं दृष्ट्वा बाणोऽत्यमर्षणः ।
कृष्णमभ्यद्रवत् संख्ये रथी हित्वैव सात्यकिम् ॥ १०१

धनूंषि आकृष्य युगपत् बाणः पञ्चशतानि वै ।
एकैकस्मिन् शरौ द्वौ द्वौ सन्दधे रणदुर्मदः ॥ १०२

तानि चिच्छेद भगवान् धनूंषि युगपत् हरिः ।
सारथिं रथं अश्वांश्च हत्वा शङ्खं अपूरयत् ॥ १०३

तन्माता कोटरा नाम नग्ना मुक्तशिरोरुहा ।
पुरोऽवतस्थे कृष्णस्य पुत्रप्राणरिरक्षया ॥ १०४

ततस्तिर्यङ्मुखो नग्नां अनिरीक्षन् गदाग्रजः ।
बाणश्च तावत् विरथः छिन्नधन्वा आविशत् पुरम् ॥ १०५

विद्राविते भूतगणे ज्वरस्तु त्रिशिरास्त्रिपात् ।
अभ्यधावत दाशार्हं दहन्निव दिशो दश ॥ १०६

अथ नारायणो देवः तं दृष्ट्वा व्यसृजत् ज्वरम् ।
माहेश्वरो वैष्णवश्च युयुधाते ज्वरावुभौ ॥ १०७

माहेश्वरः समाक्रन्दन् वैष्णवेन बलार्दितः ।
अलब्ध्वा अभयमन्यत्र भीतो माहेश्वरो ज्वरः ।
शरणार्थी हृषीकेशं तुष्टाव प्रयताञ्जलिः ॥ १०८

नमामि त्वा अनन्तशक्तिं परेशं
सर्वात्मानं केवलं ज्ञप्तिमात्रम् ।
विश्वोत्पत्तिस्थानसंरोधहेतुम्
यत् तत् ब्रह्म ब्रह्मलिङ्गं प्रशान्तम् ॥ १०९

कालो दैवं कर्म जीवः स्वभावः
द्रव्यं क्षेत्रं प्राण आत्मा विकारः ।

तत्सङ्गतो बीजरोहप्रवाहः
त्वन्मायैषा तन्निषेधं प्रपद्ये ॥ ११०

नानाभावैः लीलयैवोपपन्नैः
देवान् साधून् लोकसेतून् बिभर्षि ।
हंस्युन्मार्गान् हिंसया वर्तमानान्
जन्मैतत्ते भारहाराय भूमेः ॥ १११

तप्तोऽहं ते तेजसा दुःसहेन
शान्तोग्रेण अत्युल्बणेन ज्वरेण ।
तावत् तापो देहिनां तेऽङ्घ्रिमूलं
नो सेवेरन् यावत् आशानुबद्धाः ॥ ११२

श्रीभगवानुवाच—

त्रिशिरस्ते प्रसन्नोऽस्मि व्येतु ते मज्ज्वरात् भयम् ।
यो नौ स्मरति संवादं तस्य त्वन्न भवेत् भयम् ॥ ११३

इत्युक्तोऽच्युतं आनम्य गतो माहेश्वरो ज्वरः ।
बाणस्तु रथमारूढः प्रागात् योत्स्यन् जनार्दनम् ॥ ११४

ततो बाहुसहस्रेण नानायुधधरोऽसुरः ।
मुमोच परमक्रुद्धः बाणान् चक्रायुधे नृप ॥ ११५

तस्यास्यतोऽस्त्राणि असकृत् चक्रेण क्षुरनेमिना ।
चिच्छेद भगवान् बाहून् शाखा इव वनस्पतेः ॥ ११६

बाहुषु छिद्यमानेषु बाणस्य भगवान् भवः ।

भक्तानुकम्पी उपव्रज्य चक्रायुधं अभाषत ॥ ११७

त्वं हि ब्रह्म परं ज्योतिः गूढं ब्रह्मणि वाङ्मये ।
यं पश्यन्ति अमलात्मानः आकाशमिव केवलम् ॥ ११८

नाभिर्नभोऽग्निर्मुखं, अम्बु रेतो,
द्यौः शीर्ष, आशा श्रुतिः, अङ्घ्रिरुर्वी ।
चन्द्रो मनो यस्य दृक् अर्क, आत्मा
अहं, समुद्रो जठरं भुजेन्द्रः ॥ ११९

रोमाणि यस्य ओषधयोऽम्बुवाहाः
केशा, विरिञ्चो धिषणा, विसर्गः ।
प्रजापतिः हृदयं यस्य धर्मः
स वै भवान् पुरुषो लोककल्पः ॥ १२०

तवावतारोऽयं अकुण्ठधामन्
धर्मस्य गुप्त्यै जगतो भवाय ।
वयं च सर्वे भवता अनुभाविताः
विभावयामो भुवनानि सप्त ॥ १२१

त्वं एक आद्यः पुरुषोऽद्वितीयः
तुर्यः स्वदृग्घेतुरहेतुरीशः ।
प्रतीयसेऽथापि यथाविकारं
स्वमायया सर्वगुणप्रसिद्ध्यै ॥ १२२

यथैव सूर्यः पिहितच्छायया स्वया
छायां च रूपाणि च सञ्चकास्ति ।

एवं गुणेनापिहितो गुणान् त्वं
आत्मप्रदीपो गुणिनश्च भूमन् ॥ १३३

यन्मायामोहितधियः पुत्रदारगृहादिषु ।
उन्मज्जन्ति निमज्जन्ति प्रसक्ता वृजिनार्णवे ॥ १३४

देवदत्तं इमं लब्ध्वा नृलोकं अजितेन्द्रियः ।
यो नाद्रियेत त्वत्पादौ स शोच्यो ह्यात्मवञ्चकः ॥ १३५

यस्त्वां विसृजते मर्त्यः आत्मानं प्रियमीश्वरम् ।
विपर्ययेन्द्रियार्थार्थं विषं अत्ति अमृतं त्यजन् ॥ १२६

अहं ब्रह्माथ विबुधाः मुनयश्चामलाशयाः ।
सर्वात्मना प्रपन्नास्त्वां आत्मानं प्रेष्ठमीश्वरम् ॥ १२७

तं त्वा जगत्स्थित्युदयान्तहेतुं
समं प्रशान्तं सुहृदात्मवैभवम् ।
अनन्यमेकं जगदात्मकं तं
भवापवर्गाय भजाम देवम् ॥ १२८

अयं ममेष्टो दयितोऽनुवर्ती
मया अभयं दत्तं अमुष्य देव ।
सम्पाद्यतां तद् भवतः प्रसादो
यथा हि ते दैत्यपतौ प्रसादः ॥ १२९

श्रीभगवानुवाच—

यदात्थ भगवन् त्वं नः करवाम प्रियं तव ।

भवतो यत् व्यवसितं तत् मे साधु अनुमोदितम् ॥

(श्रीमद्भागवतात्)

युष्मद्दत्तवरो बाणः जीवतामेष शङ्कर ।
त्वद्वाक्यगौरवादेतत् मया चक्रं निवर्तितम् ॥ १३१

त्वया यदभयं दत्तं तद्दत्तमखिलं मया ।
मत्तोऽविभिन्नं आत्मानं द्रष्टुं अर्हसि शङ्कर ॥ १३२

योऽहं स त्वं जगच्चेदं सदेवासुरमानुषम् ।
मत्तो नान्यदशेषं यत् तत्त्वं ज्ञातुमिहार्हसि ॥ १३३

अविद्यामोहितात्मानः पुरुषा भिन्नदर्शिनः ।
वदन्ति भेदं पश्यन्ति च आवयोरन्तरं हर ।
प्रसन्नोऽहं गमिष्यामि त्वं गच्छ वृषभध्वज ॥ १३४

(श्रीविष्णुपुराणात्)

अवध्योऽयं ममाप्येषः वैरोचनिसुतोऽसुरः ।
प्रह्लादाय वरो दत्तो न वध्यो मे तवान्वयः ॥ १३५

दर्पोपशमनायास्य प्रवृक्णा बाहवो मया ।
सूदितं च बलं भूरि यच्च भारायितं भुवः ॥ १३६

चत्वारोऽस्य भुजा शिष्टाः भविष्यन्ति अजरामराः ।
पार्षदमुख्यो भवतो न कुतश्चिद् भयोऽसुरः ॥ १३७

इति लब्ध्वा, अभयं कृष्णं प्रणम्य शिरसाऽसुरः ।
प्राद्युम्निं रथमारोप्य सवध्वा समुपानयत् ॥ १३८

अक्षौहिण्या परिवृतं सुवासःसमलङ्कृतम् ।
सपत्नीकं पुरस्कृत्य ययौ रुद्रानुमोदितः ॥ १३९

स्वराजधानीं समलङ्कृतां ध्वजैः
सतोरणैरुक्षितमार्गचत्वराम् ।
विवेश शङ्खानकदुन्दुभिस्वनैः
अभ्युद्यतः पौरसुहृद्द्विजातिभिः ॥ १४०

कल्य उत्थाय यो नित्यं कीर्तयेत् सुसमाहितः ।
न तस्य दुर्लभं किञ्चित् इहलोके परत्र च ॥ १४१

वंशप्रतिष्ठां अतुलां श्रवणादेव लप्स्यते ।
नाशुभं प्राप्नुयात् किञ्चित् दीर्घमायुर्लभेत सः ॥ १४२

(हरिवंशात्)

इति श्रीमद्भागवतात् विष्णुपुराणात् हरिवंशात् च सङ्कलितं
उषाकल्याणं सम्पूर्णम् ॥

---

॥ श्रीः ॥

शुभं अस्तु

III

# ❋ श्री लक्ष्मीकल्याणम् ❋

( श्रीमद्भागवतात् विष्णुपुराणाच्च उद्धृतम् )

श्रीशुक उवाच—

पीते गरे वृषाङ्केण प्रीतास्तेऽमरदानवाः ।
ममन्थुस्तरसा सिन्धुं हविर्धानी ततोऽभवत् ॥ १

तामग्निहोत्रीमृषयो जगृहुर्ब्रह्मवादिनः ।
यज्ञस्य देवयानस्य मेध्याय हविषे नृप ॥ २

तत उच्चैःश्रवा नाम हयोऽभूच्चन्द्रपाण्डुरः ।
तस्मिन् बलिः स्पृहां चक्रे नेन्द्र ईश्वरशिक्षया ॥ ३

तत ऐरावतो नाम वारणेन्द्रो विनिर्गतः ।
दन्तैश्चतुर्भिः श्वेताद्रेर्हरन् भगवतो महिम् ॥ ४

कौस्तुभाख्यमभूत् रत्नं पद्मरागो महोदधेः ।
तस्मिन् हरिः स्पृहां चक्रे वक्षोलङ्करणे मणौ ॥ ५

ततोऽभवत् पारिजातः सुरलोकविभूषणम् ।
पूरयत्यर्थिनो योऽर्थैः शश्वद् भुवि यथा भवान् ॥ ६

ततश्चाप्सरसो जाता निष्ककण्ठ्यः सुवाससः ।
रमण्यः स्वर्गिणां वल्गुगतिलीलावलोकनैः ॥ ७

ततश्चाविरभूत् साक्षाच्छ्री रमा भगवत्परा ।
रञ्जयन्ती दिशः कान्त्या विद्युत्सौदामिनी यथा ॥ ८

तस्यां चक्रुः स्पृहां सर्वे ससुरासुरमानवाः ।
रूपौदार्यवयोवर्णमहिमाक्षिप्तचेतसः ॥ ९

तस्या आसनमानिन्ये महेन्द्रो महदद्भुतम् ।
मूर्तिमत्यः सरिच्छ्रेष्ठा हेमकुम्भैर्जलं शुचिः ॥ १०

आभिषेचनिका भूमिराहरत् सकलौषधीः ।
गावः पञ्च पवित्राणि वसन्तौ मधुमाधवौ ॥ ११

ऋषयः कल्पयाञ्चक्रुरभिषेकं यथाविधि ।
जगुर्भद्राणि गन्धर्वा नट्यश्च ननृतुर्जगुः ॥ १२

मेघाः मृदङ्गपणवमुरजानकगोमुखान् ।
व्यनादयञ्छङ्खवेणुवीणास्तुमुलनिःस्वनान् ॥ १३

ततोऽभिषिषिचुर्देवीं श्रियं पद्मकरां सतीम् ।
दिग्गिभाः पूर्णकलशैः सूक्तवाक्यैर्द्विजेरितैः ॥ १४

समुद्रः पीतकौशेयवाससी समुपाहरत् ।
वरुणः स्रजं वैजयन्तीं मधुना मत्तषट्पदाम् ॥ १५

भूषणानि विचित्राणि विश्वकर्मा प्रजापतिः ।
हारं सरस्वती पद्ममजो नागाश्च कुण्डले ॥ १६

ततः कृतस्वस्त्ययनोत्पलस्रजं
नदद्द्विरेफां परिगृह्य पाणिना ।

चचाल वक्त्रं सुकपोलकुण्डलं
सव्रीडहासं दधतो सुशोभनम् ॥ १७

स्तनद्वयं चातिकृशोदरी समं
निरन्तरं चन्दनकुङ्कुमोक्षितम् ।
ततस्ततो नूपुरवल्गुशिञ्जितैः
विसर्पती हेमलतेव सा बभौ ॥ १८

विलोकयन्ती निरवद्यमात्मनः
पदं ध्रुवं चाव्यभिचारिसद्गुणम् ।
गन्धर्वयक्षासुरसिध्दचारण-
त्रैविष्टपेयादिषु नान्वविन्दत ॥ १९

नूनं तपो यस्य न मन्युनिर्जयो
ज्ञानं क्वचित् तच्च न सङ्गवर्जितम्
कश्चिन्महांस्तस्य न कामनिर्जयः
स ईश्वरः किं परतो व्यपाश्रयः ॥ २०

धर्मः क्वचित् तत्र न भूतसौहृदं
त्यागः क्वचित् तत्र न मुक्तिकारणम् ।
वीर्यं न पुंसोऽस्त्यजवेगनिष्कृतं
न हि द्वितीयो गुणसङ्गवर्जितः ॥ २१

क्वचिच्चिरायुः न हि शीलमङ्गलं
क्वचित्तदप्यस्ति न वेद्यमायुषः ।

यत्तोभयं कुत्र च सोऽप्यमङ्गलः
सुमङ्गलः कश्च न काङ्क्षते हि माम् ॥ २२

एवं विमृश्याव्यभिचारिसद्गुणैः
वरं निजैकाश्रयतया गुणाश्रयम् ।
वव्रे वरं सर्वगुणैरपेक्षितं
रमा मुकुन्दं निरपेक्षमीप्सितम् ॥ २३

तस्यांसदेश उशतीं नवकञ्जमालां
माद्यन्मधुव्रतवरूथगिरोपघुष्टाम् ।
तस्थौ निधाय निकटे तदुरः स्वधाम
सव्रीडहासविकसन्नयनेन याता ॥ २४

तस्याः श्रियस्त्रिजगतो जनको जनन्या
वक्षोनिवासमकरोत् परमं विभूतेः ।
श्रीः स्वाः प्रजाः सकरुणेन निरीक्षणेन
यत्र स्थितैधयत साधिपतींस्त्रिलोकान् ॥ २५

शङ्खतूर्यमृदङ्गानां वादित्राणां पृथुः स्वनः ।
देवानुगानां सस्त्रीणां नृत्यतां गायतामभूत् ॥ २३

ब्रह्मरुद्राङ्गिरोमुख्याः सर्वे विश्वसृजो विभुम् ।
ईडिरेऽवितथैर्मन्त्रैः तल्लिङ्गैः पुष्पवर्षिणः ॥ २७

श्रिया विलोकिता देवाः सप्रजापतयः प्रजाः ।
शीलादिगुणसम्पन्ना लेभिरे निर्वृतिं पराम् ॥ २८

(श्रीमद्भागवतात्)

मथ्यमाने ततस्तस्मिन् क्षीराब्धौ देवदानवैः ।
हविर्धामाभवत् पूर्वं सुरभिः सुरपूजिता ॥ २९
जग्मुः मुदं ततो देवाः दानवाश्च महामुने ।
व्याक्षिप्तचेतसश्चैव बभूवुः स्तिमितेक्षणाः ॥ ३०
किमेतदिति सिद्धानां दिवि चिन्तयतां ततः ।
बभूव वारुणी देवी मदघूर्णितलोचना ॥ ३१
कृतावर्त्तात् ततः तस्मात् क्षीरोदात् वासयन् जगत् ।
गन्धेन पारिजातोऽभूत् देवस्त्रीनन्दनस्तरुः ॥ ३२
रूपौदार्यगुणोपेतस् तथाचाप्सरसां गणः ।
क्षीरोदधेस्समुत्पन्नो मैत्रेय परमाद्भुतः ॥ ३३
ततः शीतांशुरभवत् जगृहे तं महेश्वरः ।
जगृहुश्च विषं नागाः क्षीरोदाब्धि समुत्थितम् ॥ ३४
ततो धन्वन्तरिः देवः श्वेताम्बरधरस्स्वयम् ।
बिभ्रत्कमण्डलुं पूर्णं अमृतस्य समुत्थितः ॥ ३५
ततः स्वस्थमनस्कास्ते सर्वे दैतेयदानवाः ।
बभूवुः मुदिताः सर्वे मैत्रेय मुनिभिस्सह ॥ ३६
ततः स्फुरत्कान्तिमती विकामिकमले स्थिता ।
श्रीः देवी पयसस्तस्मात् उद्भूता धृतपङ्कजा ॥ ३७
तां तुष्टवुः मुदा युक्ताः श्रीसूक्तेन महर्षयः ।
विश्वावसुमुखास्तस्या गन्धर्वाः पुरतो जगुः ॥ ३८

घृताचीप्रमुखास्तत्र ननृतुश्चाप्सरोगणाः ।
गङ्गाद्यास्सरितस्तोयैः स्नानार्थमुपतस्थिरे ॥ ३९

दिग्गजा हेमपात्रस्थं आदाय विमलं जलम् ।
स्नापयाञ्चक्रिरे देवीं सर्वलोकमहेश्वरीम् ॥ ४०

क्षीरोदो रूपधृक् तस्यै मालां अम्लानपङ्कजाम् ।
ददौ विभूषणान्यङ्गे विश्वकर्मा चकार ह ॥ ४१

दिव्यमाल्याम्बरधरा स्नाता भूषणभूषिता ।
पश्यतां सर्वदेवानां ययौ वक्षस्थलं हरेः ॥ ४२

तया विलोकिता देवाः हरिवक्षस्स्थलस्थया ।
लक्ष्म्या मैत्रेय सहसा परां निर्वृतिमागताः ॥ ४३

त्रैलोक्यं च श्रिया जुष्टं बभूव द्विजसत्तम ॥
शक्रश्च त्रिदशश्रेष्ठः पुनः श्रीमानजायत ॥ ४४

सिंहासनगतः शक्रः सम्प्राप्य त्रिदिवं पुनः ।
देवराज्ये स्थितो देवीं तुष्टाव अब्जकरां ततः ॥ ४५

नमस्ये सर्वलोकानां जननीं अब्जसम्भवाम् ।
श्रियमुन्निद्रपद्माक्षीं विष्णुवक्षस्स्थलस्थिताम् ॥ ४६

पद्मालयां पद्मकरां पद्मपत्रनिभेक्षणाम् ।
वन्दे पद्ममुखीं देवीं पद्मनाभप्रियामहम् ॥ ४७

त्वं सिद्धिः त्वं स्वधा स्वाहा सुधा त्वं लोकपावनी ।
सन्ध्या रात्रीः प्रभ भूतिः मेधा श्रद्धा सरस्वती ॥ ४८

यज्ञविद्या महाविद्या गुह्यविद्या च शोभने ।
आत्मविद्या च देवि त्वं विमुक्तिफलदायिनी ॥ ४९

आन्वीक्षिकी त्रयी वार्ता दण्डनीतिस्त्वमेव च ।
सौम्यासौम्यजगद्रूपैः त्वयैतत् देवि पूरितम् ॥ ५०

का तु अन्या त्वां ऋते देवि सर्वयज्ञमयं वपुः ।
अध्यास्ते देवदेवस्य योगिचिन्त्यं गदाभृतः ॥ ५१

त्वया देवि परित्यक्तं सकलं भुवनत्रयम् ।
विनष्टप्रायमभवत् त्वयेदानीं समेधितम् ॥ ५२

दाराः पुत्राः तथागारसुहृद्धान्यधनादिकम् ।
भवत्येतन्महाभागे नित्यं त्वद्वीक्षणात् नृणाम् ५३

शरीरारोग्यमैश्वर्यं अरिपक्षक्षयः सुखम ।
देवी त्वद्दृष्टिदृष्टानां पुरुषाणां न दुर्लभम् ॥ ५४

त्वं माता सर्वलोकानां देवदेवो हरिः पिता ।
त्वयैतत् विष्णुना चाम्ब जगत् व्याप्तं चराचरम् ॥ ५५

मा नः कोशं तथा गोष्ठं मा गृहं मा परिच्छदम् ।
मा शरीरं कलत्रं च त्यजेथाः सर्वपावनि ॥ ५६

मा पुत्रान् मा सुहृद्वर्गं मा पशून् मा विभूषणम् ।
त्यजेथाः मम देवस्य विष्णोः वक्षस्थलालये ॥ ५७

सत्त्वेन सत्यशौचाभ्यां तथा शीलादिभिर्गुणैः ।
त्यजन्ते ते नराः सद्यः सन्त्यक्ता ये त्वयामले ॥ ५८

त्वया विलोकिताः सद्यः शीलाद्यैः अखिलैः गुणैः ।
कुलैश्वर्यैश्च युज्यन्ते पुरुषा निर्गुणा अपि ॥ ५९

स श्लाघ्यः स गुणी धन्यः स कुलीनः स बुद्धिमान् ।
स शूरः स च विक्रान्तो यस्त्वया देवि वीक्षितः ॥ ६०

सद्यो वैगुण्यमायान्ति शीलाद्याः सकला गुणाः ।
पराङ्मुखी जगद्धात्री यस्य त्वं विष्णुवल्लभे ॥ ६१

न ते वर्णयितुं शक्ता गुणान् जिह्वापि वेधसः ।
प्रसीद देवि पद्माक्षि मा अस्मान् त्याक्षीः कदाचन॥ ६२

भृगोः ख्यात्यां समुत्पन्ना श्रीः पूर्वं उदधेः पुनः ।
देवदानवयत्नेन प्रसूता अमृतमन्थने ॥ ६३

एवं यदा जगत्स्वामी देवदेवो जनार्दनः ।
अवतारं करोत्येषा तदा श्रीस्तत्सहायिनी ॥ ६४

पुनश्च पद्मात् उत्पन्ना आदित्योऽभूत् यदा हरिः ।
यदा तु भार्गवो रामः तदा अभूत् धरणी त्वियम् ॥

राघवत्वेऽभवत् सीता रुक्मिणी कृष्णजन्मनि ।
अन्येषु चावतारेषु विष्णोरेषानपायिनी ॥ ६६

देवत्वे देवदेहा इयं मनुष्यत्वे च मानुषी ।
विष्णोः देहानुरूपां वै करोति एषा आत्मनस्तनुम् ॥

यश्चैतत् शृणुयात् जन्म लक्ष्म्या यश्च पठेत् नरः ।
श्रियो न विच्युतिस्तस्य गृहे यावत् कुलत्रयम् ॥ ६८

पठ्यते येषु चैवेयं गृहेषु श्रीस्तुतिर्मुने ।
अलक्ष्मीः कलहाधारा न तेषु आस्ते कदाचन ॥ ६९

इति सकलविभूत्यवाप्तिहेतुः
स्तुतिरियमिन्द्रमुखोद्गता हि लक्ष्म्याः ।
अनुदिनमिह पठ्यते नृभिर्यैः
वसति न तेषु कदाचिदपि अलक्ष्मीः ॥ ७०

श्रीमद्भागवतात् विष्णुपुराणाच्च उद्धृतम्
लक्ष्मीकल्याणं संपूर्णम्

---

॥ श्रीः ॥

शुभं अस्तु

# * श्री तुलसीकल्याणम् *

( देवीभागवतात् उद्धृतम् )

धर्मध्वजस्य पत्नी च माधवीति च विश्रुता ।
नृपेण सार्द्धं सारामे रेमे च गन्धमादने ॥ १

शय्यां रतिकरीं कृत्वा पुष्पचन्दनचर्चिताम् ।
चन्दनालिप्तसर्वाङ्गी पुष्पचन्दनवायुना ॥ २

स्त्रीरत्नमतिचार्वङ्गी रत्नभूषणभूषिता ।
कामुकी रसिका मृष्टा रसिकेन च संयुता ॥ ३

सुरते विरतिर्नास्ति तयोः सुरतिविज्ञयोः ।
गतं देववर्षशतं न ज्ञातं च दिवा निशम् ॥ ४

ततो राजा मतिं प्राप्य सुरताद्विरराम च ।
कामुकी सुन्दरी किञ्चित् न च तृप्तिं जगाम सा ॥ ५

दधार गर्भं सा सद्यो दैवादब्दशतं सती ।
श्रीगर्भा श्रीयुता सा च सम्बभूव दिने-दिने ॥ ६

शुभे क्षणे शुभदिने शुभयोगे च संयुते ।
शुभलग्ने शुभांशे च शुभस्वामिग्रहान्विते ॥ ७

कार्तिकीपूर्णिमायां तु सितवारे च पद्मज ।
सुषाव सा च पद्मांशां पद्मिनीं तां मनोहराम् ॥ ८

शरत्पार्वणचन्द्रास्यां शरत्पङ्कजलोचनाम् ।
पक्वबिम्बाधरौष्ठीं च पश्यन्तीं सस्मितां गृहम् ॥ ९

हस्तपादतलारक्तां निम्ननाभिं मनोरमाम् ।
तदधस्त्रिवलीयुक्तां नितम्बयुगवर्तुलाम् ॥ १०

शीते सुखोष्णसर्वाङ्गीं ग्रीष्मे च सुखशीतलाम् ।
श्यामां सुकेशीं रुचिरां न्यग्रोधपरिमण्डलाम् ॥ ११

पीतचम्पकपर्णाभां सुन्दरीष्वेव सुन्दरीम् ।
नरा नार्यश्च तां दृष्ट्वा तुलनां दातुमक्षमाः ॥ १२

तेन नाम्ना च तुलसीं तां वदन्ति मनीषिणः ।
सा च भूमिष्ठमात्रेण योग्या स्त्रीप्रकृतिर्यथा ॥ १३

सर्वैर्निषिद्धा तपसे जगाम बदरीवनम् ।
तत्र देवाब्दलक्षञ्च चकार परमं तपः ॥ १४

मनसा नारायणः स्वामी भवितेति च निश्चिता ।
ग्रीष्मे पञ्चतपाः शीते तोयवस्त्रा च प्रावृषि ॥ १५

आसनस्था वृष्टिधाराः सहंतीति दिवानिशम् ।
विंशत्सहस्रवर्षञ्च फलतोयाशना च सा ॥ १६

त्रिंशत्सहस्रवर्षञ्च पत्राहारा तपस्विनी ।
चत्वारिंशत्सहस्राब्दं वाय्वाहारा कृशोदरी ॥ १७

ततो दशसहस्राब्दं निराहारा बभूव सा ।
निर्लक्ष्यां चैकपादस्थां दृष्ट्वा तां कमलोद्भवः ॥ १८

समाययौ वरं दातुं परं बदरिकाश्रमम् ।
चतुर्मुखं च सा दृष्ट्वा ननाम हंसवाहनम् ॥ १९
तामुवाच जगत्कर्ता विधाता जगतामपि ।
वरं वृणीष्व तुलसी यत्ते मनसि वांछितम् ॥ २०
हरिभक्तिं हरेर्दास्यं अजरामरतामपि ।

तुलस्युवाच—

श्रुणु तात प्रवक्ष्यामि यन्मे मनसि वाञ्छितम् ॥ २१
सर्वज्ञस्यापि पुरतः का लज्जा मम साम्प्रतम् ।
अहं तु तुलसी गोपी गोलोकेऽहं स्थिता पुरा ॥ २२
कृष्णप्रिया किङ्करी च तदंशा तत्सखी प्रिया ।
गोविन्दरतिसम्भुक्तां अतृप्तां मां च मूर्च्छिताम् । २३
रासेश्वरी समागत्य ददर्श रासमण्डले ।
गोविन्दं भर्त्सयामास मां शशाप रुषान्विता ॥ २४
याहि त्वं मानवीं योनिं इत्येवं च शशाप ह ।
मामुवाच स गोविन्दो मदम्शं च चतुर्भुजम् ॥ २५
लभिष्यसि तपस्तप्त्वा भारते ब्रह्मणो वरात् ।
इत्येवमुक्त्वा देवेशोप्यन्तर्धानं चकार सः ॥ २६
देव्या भिया तनुं त्यक्त्वा प्राप्तं जन्म गुरो भुवि ।
अहं नारायणं कान्तं शान्तं सुन्दरविग्रहम् ॥ २७
साम्प्रतं तं पतिं लब्धुं वरये त्वं च देहि मे ।

ब्रह्मदेव उवाच—

सुदामा नाम गोपश्च श्रीकृष्णाङ्गसमुद्भवः ॥　२८

तदंशश्चाऽतितेजस्वी लेभे जन्म च भारते ।

साम्प्रतं राधिकाशापात् दनुवंशसमुद्भवः ॥　२९

शङ्खचूड इति विख्यातस्त्रैलोक्ये न च तत्समः ।

गोलोके त्वां पुरा दृष्ट्वा कामोन्मथितमानसः ॥　३०

विलम्भितुं न शशाक राधिकायाः प्रभावतः ।

स च जातिस्मरस्तस्मात् सुदामाभूच्च सागरे ॥　३१

जातिस्मरा त्वमपि सा सर्वं जानासि सुन्दरि ।

अधुना तस्य पत्नी त्वं सम्भविष्यसि शोभने ॥　३२

पश्चान्नारायणं शान्तं कान्तमेव वरिष्यसि ।

शापान्नारायणस्यैव कलया दैवयोगतः ॥　३३

भविष्यसि वृक्षरूपा त्वं पूता विश्वपावनी ।

प्रधाना सर्वपुष्पेषु विष्णुप्राणाधिका भवेः ॥　३४

त्वया विना च सर्वेषां पूजा च विफला भवेत् ।

बृन्दावने वृक्षरूपा नाम्ना बृन्दावनीति च ॥　३५

त्वत्पत्रैर्गोपिगोपाश्च पूजयिष्यन्ति माधवम् ।

वृक्षाधिदेवी रूपेण सार्धं कृष्णेन सन्ततम् ॥　३६

विहरिष्यसि गोपेन स्वच्छन्दं मद्वरेण च ।

इत्येवं वचनं श्रुत्वा सस्मिता हृष्टमानसा ॥　३७

प्रणनाम च ब्रह्माणं तं च किञ्चिदुवाच सा ।

तुलस्युवाच—

यथा मे द्विभुजे कृष्णे वाञ्छा च श्यामसुन्दरे ॥
सत्यं ब्रवीमि हे तात न तथा च चतुर्भुजे ।
अतृप्ताहं च गोविन्दे दैवाच्छृङ्गारभङ्गतः ॥ ३९
गोविन्दस्यैव वचनात् प्रार्थयामि चतुर्भुजम् ।
त्वत्प्रसादेन गोविन्दं पुनरेव सुदुर्लभम् ॥ ४०
ध्रुवमेव लभिष्यामि राधाभीतं प्रमोचय ।

ब्रह्मदेव उवाच—

गृहाण राधिकामन्त्रं ददामि षोडशाक्षरम् ॥ ४१
तस्याश्च प्राणतुल्या त्वं मद्वरेण भविष्यसि ।
शृङ्गारं युवयोर्गोप्यं न ज्ञास्यति च राधिका ॥ ४२
राधासमा त्वं सुभगे गोविन्दस्य भविष्यसि ।
इत्येवमुक्त्वा दत्त्वा च देव्या वै षोडशाक्षरम् ॥ ४३
मन्त्रं चैव जगद्धाता स्तोत्रं च कवचं परम् ।
सर्वं पूजाविधानं च पुरश्चर्याविधिक्रमम् ॥ ४४
परां शुभाशिषं चैव पूजां चैव चकार सा ।
बभूव सिद्धा सा देवी तत्प्रसादात् रमा यथा ॥ ४५
सिद्धमन्त्रेण तुलसी वरं प्राप यथोदितम् ।

बुभुजे च महाभोगं यद्विश्वेषु च दुर्लभम् ॥　४६

प्रसन्नमनसा देवी तत्याज तपसः क्लमम् ।
सिद्धे फले नराणां हि दुःखं च सुखमुत्तमम् ॥

भुक्त्वा पीत्वा च सन्तुष्टा शयनं श चकार सा ।
तल्पे मनोरमे तत्र पुष्पचन्दनचर्चिते ॥　४८

तुलसी परितुष्टा च सुष्वाप हृष्टमानसा ।
नवयौवनसम्पन्ना वृषध्वजवराङ्गना ॥　४९

चिक्षेप पञ्चबाणश्च पञ्चबाणांश्च तां प्रति ।
पुष्पायुधेन सा दग्धा पुष्पचन्दनचर्चिता ॥　५०

पुलकाञ्चितसर्वाङ्गी कम्पिता रक्तलोचना ।
क्षणं सा शुष्कतां प्राप क्षणं मूर्च्छामवाप ह ॥ ५१

क्षणमुद्विग्नतां प्राप क्षणं तन्द्रां सुखावहाम् ।
क्षणं च दहनं प्राप क्षणं प्राप प्रसन्नताम् ॥　५२

क्षणं सा चेतनां प्राप क्षणं प्रापविषण्णताम् ।
उत्तिष्ठन्ती क्षणं तल्पात् गच्छन्ती निकटे क्षणम् ॥ ५३

भ्रमन्ती क्षणमुद्वेगान्निवसन्ती क्षणं पुनः ।
क्षणमेव समुद्वेगात् सुष्वाप पुनरेव सा ॥　५४

पुष्पचन्दनतल्पं च तद्बभूवातिकण्टकम् ।
विषहारि सुखं दिव्यं सुन्दरं च फलं जलम् ॥ ५५

निलयं च बिलाकारं सूक्ष्मवस्त्रं हुताशनः ।
सिन्दूरपत्रकं चैव व्रणतुल्यं च दुःखदम् ॥ ५६
क्षणं ददर्श तन्द्रायां सुवेषं पुरुषं सती ।
सुन्दरं च युवानं च सस्मितं रसिकेश्वरम् ॥ ५७
चन्दनोक्षितसर्वाङ्गं रत्नभूषणभूषितम् ।
आगच्छन्तं माल्यवन्तं पिबन्तं तन्मुखाम्बुजम् ॥ ५८
कथयन्तं रतिकथां ब्रुवन्तं मधुरं मुहुः ।
सम्भुक्तवन्तं तल्पे च समाश्लिष्यन्तमीप्सितम् ॥ ५९
पुनरेव तु गच्छन्तंमागच्छन्तं च सन्निधौ ।
यान्तं क यासि प्राणेश तिष्ठेत्येवमुवाच सा ॥ ६०
पुनश्च चेतनां प्राप्य विललाप पुनः पुनः ।
एवं सा यौवनं प्राप्य तस्थौ तत्रैव नारद ॥ ६१
शङ्खचूडो महायोगी जैगीषव्यान्मनोहरम् ।
कृष्णमन्त्रं च सम्प्राप्य कृत्वा सिद्धं तु पुष्करे ॥ ६२
कवचं च गले बद्धवा सर्वमङ्गलमङ्गलम् ।
ब्रह्मणश्च वरं प्राप्य यत्ते मनसि वाञ्छितम् ॥ ६३
आज्ञया ब्रह्मणः सोपि बदरीं च समाययौ ।
आगच्छन्तं शङ्खचूडं ददर्श तुलसी मुने ॥ ६४
नवयौवनसम्पन्नं कामदेवसमप्रभम् ।
श्वेतचम्पकवर्णाभं रत्नभूषणभूषितम् ॥ ६५

शरत्पार्वणचन्द्रास्यं शरत्पङ्कजलोचनम् ।
रत्नसारविनिर्माणविमानस्थं मनोहरम् ॥ ६६

रत्नकुण्डलयुग्मेन गण्डस्थलविराजितम् ।
पारिजातप्रसूनानां मालावन्तं च सुस्मितम् ॥ ६७

कस्तूरीकुङ्कुमायुक्तं सुगन्धिचन्दनान्वितम् ।
सा दृष्ट्वा सन्निधावेनं मुखमाच्छाद्य वाससा ॥ ६८

सस्मिता तं निरीक्षन्ती सकटाक्षं पुनः पुनः ।
बभूवातिनम्रमुखी नवसङ्गमलज्जिता ॥ ६९

शरदिन्दुविनिन्द्यैकस्वमुखेन्दुविराजिता ।
अमूल्यरत्ननिर्माणयावकावलिसंयुता ॥ ७०

मणीन्द्रसारनिर्माणक्वणन्मञ्जीररञ्जिता ।
दधती कबरीभारं मालतीमाल्यसंयुतम् ॥ ७१

अमूल्यरत्ननिर्माणमकराकृतिकुण्डला ।
चित्रकुण्डलयुग्मेन गण्डस्थलविराजिता ॥ ७२

रत्नेन्द्रसारहारेण स्तनमध्यस्थलोज्ज्वला ।
रत्नकङ्कणकेयूरशङ्ख भूषणभूषिता ॥ ७३

रत्नाङ्गुलीयकैर्दिव्यैः अङ्गुल्यावलिराजिता ।
दृष्ट्वा तां ललितां रम्यां सुशीलां सुन्दरीं सतीम् ७४

उवास तत्समीपे तु मधुरं तामुवाच सः ।

शङ्खचूड उवाच—

का त्वं कस्य च कन्या च धन्या मान्या च योषिताम् ॥

का त्वं मानिनि कल्याणि सर्वकल्याणदायिनी ।
मौनीभूते किङ्करे मां सम्भाषं कुरु सुन्दरि ॥ ७६

इत्येवं वचनं श्रुत्वा सकामा वामलोचना ।
सस्मिता नम्रवचना सकामं तमुवाच सा ॥ ७७

तुलस्युवाच—

धर्मध्वजसुताहं च तपस्यायां तपोवने ।
तपस्विन्यहं तिष्ठामि कस्त्वं गच्छ यथा सुखम् ॥ ७८

कामिनीं कुलजातां च रहस्येकाकिनीं सतीम् ।
न पृच्छति कुलेजात इत्येवं मे श्रुतौ श्रुतम् ॥ ७९

शङ्खचूड उवाच—

आगच्छामि त्वत्समीपं आज्ञया ब्रह्मणोऽधुना ।
गान्धर्वेण विवाहेन त्वां ग्रहीष्यामि शोभने ॥ ८०

अहमेव शङ्खचूडो देवविद्रावकारकः ।
दनुवंश्यो विशेषेण सुदामाऽहं हरेः पुरा ॥ ८१

अहमष्टसु गोपेषु गोपोपि पार्षदेषु च ।
अधुना दानवेन्द्रोऽहं राधिकायाश्च शापतः ॥ ८२

जातिस्मरोऽहं जानामि कृष्णमन्त्रप्रभावतः ।
जातिस्मरा त्वं तुलसी संभुक्ता हरिणा पुरा ॥ ८३

त्वमेव राधिका कोपाज्जातासि भारते भुवि ।
त्वां सम्भोक्तुमुत्सुकोऽहं नाऽलं राधा भयात्ततः ॥ ८४

इत्येवमुक्त्वा स पुमान्विरराम महामुने ।
सस्मितं तुलसी तुष्टा प्रवक्तुमुपचक्रमे ॥　८५

एवंविधो बुधो नित्यं विश्वेषु च प्रशंसितः ।
कान्तमेवंविधं कान्ता शाश्वदिच्छति कामतः ॥　८६

विद्याप्रभावज्ञानार्थं मया त्वं च परीक्षितः ।
कृत्वा परीक्षां कान्तस्य वृणोति कामिनी वरम् ॥　८७

वराय गुणहीनाय वृद्धायाज्ञानिने तथा ।
दरिद्राय च मूर्खाय रोगिणे कुत्सिताय च ॥　८८

अत्यन्तकोपयुक्ताय वाऽत्यन्तं दुर्मुखाय च ।
पङ्ग्वे चाङ्गहीनाय चान्धाय बधिराय च ॥　८९

जडाय चैव मूकाय क्लीबतुल्याय पापिने ।
ब्रह्महत्यां लभेत्सोऽपि स्वकन्यां प्रददाति यः ॥　९०

शान्ताय गुणिने चैव यूने च विदुषेऽपि ।
साधवे च सुतां दत्वा दशयज्ञंफलं लभेत् ॥　९१

यः कन्यापालनं कृत्वा करोति यदि विक्रियम् ।
विक्रेता धनलोभेन कुम्भीपाकं स गच्छति ॥　९२

कन्यामूत्रं पुरीषं च तत्र भक्षति पातकी ।
कृमिभिः दंशितः काकैः यावदिन्द्राश्चतुर्दश ॥　९३

तदन्ते व्याधिसंयुक्तः स लभज्जन्म निश्चितम् ।
विक्रीणाति मांसभारं वहत्येव दिवानिशम् ॥　९४

इत्येवमुक्त्वा तुलसी विरराम तपोनिधे ।

ब्रह्मोवाच—

किं करोषि शङ्खचूड संवादमनया सह ॥ ९५

गान्धर्वेण विवाहेन त्वं चास्या ग्रहणं कुरु ।

पुरुषेष्वसि रत्नं त्वं स्त्रीषु रत्नं त्वियं सती ॥ ९६

विदग्धाया विदग्धेन सङ्गमो गुणवान्भवेत् ।

निर्विरोधसुखं राजन् को वा त्यजति दुर्लभम् ॥ ९७

योऽविरोधसुखत्यागी स पशुर्नात्र संशयः ।

किं परीक्षसि त्वं कान्तं ईदृशं गुणिनं सती ॥ ९८

देवानामसुराणाञ्च दानवानां विमर्दकम् ।

महालक्ष्मीश्च लक्ष्मीशे यथा कृष्णे च राधिका ॥ ९९

यथा मयि च सावित्री भवानी च भवे यथा ।

यथा धरा वराहे च दक्षिणा च यथाऽध्वरे ॥ १००

यथात्रेरनसूया च दमयन्ती यथा नले ।

रोहिणी च यथा चन्द्रे यथा कामे रतिः सती ॥ १०१

यथादितिः कश्यपे च वसिष्ठेऽरुन्धती सखी ।

यथाहल्या गौतमे च देवहूतिश्च कर्दमे ॥ १०२

यथा बृहस्पतौ तारा शतरूपा मनौ यथा ।

यथा च दक्षिणा यज्ञे यथा स्वाहा हुताशने ॥ १०३

यथा शची महेन्द्रे च यथा पुष्टिर्गणेश्वरे ।

देवसेना यथा स्कन्दे धर्मे मूर्तिर्यथा सती　　१०४
सौभाग्या सुप्रिया त्वं च शङ्खचूडे तथा भव।
अनेन सार्धं सुचिरं सुन्दरेण च सुन्दरि॥　　१०५
स्थाने स्थाने विहारं च यथेच्छं कुरु सन्ततम्।
पश्चात्प्राप्स्यसि गोलोके श्रीकृष्णं पुनरेव च॥　　१०६
चतुर्भुजं च वैकुण्ठे शङ्खचूडे मृते सति।
इत्येवमाशिषं दत्वा स्वालयं च ययौ विधिः॥　　१०६
गान्धर्वेण विवाहेन जगृहे तां च दानवः।
स्वर्गे दुन्दुभिवाद्यं च पुष्पवृष्टिर्बभूव ह॥　　१०८
स रेमे रामया सार्धं वासगेहे मनोरमे।
मूर्च्छां सा प्राप तुलसी नवसङ्गमसङ्गता॥　　१०९
निमग्ननिर्जले साध्वी सम्भोगसुखसागरे।
चतुःषष्टिकलामानं चतुःषष्टिविधं सुखम्॥　　११०
कामशास्त्रे यन्निरुक्तं रसिकानां यथेप्सितम्।
अङ्गप्रत्यङ्गसंश्लेषपूर्वकं स्त्रीमनोहरम्॥　　१११
तत्सर्वं रसशृङ्गारं चकार रसिकेश्वरः।
अतीव रम्यदेशे च सर्वजन्तुविवर्जिते॥　　११२
पुष्पचन्दनतल्पे च पुष्पचन्दनवायुना।
पुष्पोद्याने नदीतीरे पुष्पचन्दनचर्चिते॥　　११३

गृहीत्वा रसिको रासे पुष्पचन्दनचर्चिताम् ।
भूषितो भूषणेनैव रत्नभूषणभूषिताम् ॥ ११४

सुरते विरतिर्नास्ति तयोः सुरतिविज्ञयोः ।
जहार मानसं भर्तुः लोकया लीलया सती ॥ ११५

चेतनां रसिकायाश्च जहार रसभाववित् ।
वक्षसश्चन्दनं राज्ञः तिलकं विजहार सा ॥ ११६

स च जहार तस्याश्च सिन्दूरं बिन्दुपत्रकम् ।
स तद्वक्षस्युरोजे च नखरेखां ददौ मुदा ॥ ११७

सा ददौ तद्वामपार्श्वे करभूषणलक्षणम् ॥
राजा तदोष्ठपुटके ददौ रदनदंशनम् ॥ ११८

तद्गण्डयुगले सा च प्रददौ तच्चतुर्गुणम् ।
आलिङ्गनं चुम्बनं च जङ्घादिमर्दनं तथा ॥ ११९

एवं परस्परं क्रीडां चक्रतुस्तौ विजानतौ ।
सुरते विरते तौ च समुत्थाय परस्परम् ॥ १२०

सुवेषं चक्रतुस्तत्र यद्यन्मनसि वाञ्छितम् ।
चन्दनैः कुङ्कुमारक्तैः सा तस्य तिलकं ददौ ॥ १२१

सर्वाङ्गे सुन्दरे रम्ये चकार चाऽनुलेपनम् ।
सुवासं चैव ताम्बूलं वह्निशुद्धे च वाससि ॥ १२२

पारिजातस्य कुसुमं जरारोगहरं परम् ।
अमूल्य रत्ननिर्माणमङ्गुलीयकमुत्तमम् ॥ १२३

सुन्दरं च मणिवरं त्रिषु लोकेषु दुर्लभम् ।
दासी तवाऽहमित्येवं समुच्चार्य पुनः पुनः ॥ १२४
ननाम परया भक्त्या स्वामिनं गुणशालिनम् ।
सस्मिता तन्मुखाम्भोजं लोचनाभ्यां पुनः पुनः ॥ १२५
निमेषरहिताभ्यां चाप्यपश्यत्कामसुन्दरम् ।
स च तां च समाकृष्य चकार वक्षसि प्रियाम् ॥ १२६
सस्मितं वाससाच्छन्नं ददर्श मुखपङ्कजम्
चुचुम्ब कठिने गण्डे बिम्बोष्ठौ पुनरेव च ॥ १२७
ददौ तस्यै वस्त्रयुग्मं वरुणादाहृतं च यत् ।
तदाहृतां रत्नमालां त्रिषु लोकेषु दुर्लभाम ॥ १२८
ददौ मञ्जीरयुग्मं च स्वाहया आहृतं च यत् ।
केयूरयुग्मं छायाया रोहिण्याश्चैव कुण्डलम् ॥ १२९
अङ्गुलीयकरत्नानि रत्याश्च करभूषणम् ।
शङ्खं च रुचिरं चित्रं यद्दत्तं विश्वकर्मणा ॥ १३०
विचित्रपद्मकश्रेणीं शय्यां चापि सुदुर्लभाम् ।
भूषणानि च दत्वा भूपो हासं चकार ह ॥ १३१
निर्ममे कबरीभारे तस्या माङ्गल्यभूषणम् ।
सुचित्रं पत्रकं गण्डमण्डलेस्याः समं तथा ॥ १३२
चन्द्रलेखात्रिभिर्युक्तं चन्दनेन सुगन्धिना ।
परीतं परितश्चित्रैः सार्धं कुङ्कुमबिन्दुभिः ॥ १३३

ज्वलत्प्रदीपाकारं च सिन्धूरतिलकं ददौ ।
तत्पादपद्मयुगले स्थलपद्मविनिन्दिते ॥ १३४
चित्रालक्तकरागं च नखरेषु ददौ मुदा ।
स्ववक्षसि मुहुर्न्यस्य सरागं चरणाम्बुजम् ॥ १३५
हे देवि तव दासोहमित्युच्चार्य पुनः पुनः ।
रत्नभूषितहस्तेन तां च कृत्वा स्ववक्षसि ॥ १३६
तपोवनं परित्यज्य राजा स्थानान्तरं ययौ ।
मलये देवनिलये शैले शैले तपोवने ॥ १३७
स्थाने स्थानेऽतिरम्ये च पुष्पोद्याने च निर्जने ।
कन्धरे कन्धरे सिन्धुतीरे चैवातिसुन्दरे ॥ १३८
पुष्पभद्रानदीतिरे नीरवातमनोहरे ।
पुलिने पुलिने दिव्ये नद्यां नद्यां नदे नदे ॥ १६९
मधौ मधुकराणाञ्च मधुरध्वनिनादिते ।
विस्पन्दने सुरसने नन्दने गन्धमादने ॥ १४०
देवोद्याने नन्दने च चित्रचन्दनकानने ।
चम्पकानां केतकीनां माधवीनां च माधवे ॥ १४१
कुन्दानां मालतीनां च कुमुदाम्भोज कानने ।
कल्पवृक्षे कल्पवृक्षे पारिजातवने वने ॥ १४२
निर्जने काञ्चने स्थाने धन्ये काञ्चनपर्वते ।
काञ्चीवने किञ्जलके कञ्चुके काञ्चनाकरे ॥ १४३

पुष्पचन्दनतल्पेषु पुंस्कोकिलरुतश्रुते ।
पुष्पचन्दनसंयुक्तः पुष्पचन्दनवायुना ॥ १४४

कामुक्या कामुकः कामात्स रेमे रमया सह ।
न हि तृप्तो दानवेन्द्रः तृप्तिं नैव जगाम सा ॥ १४५

हविषा कृष्णवर्त्मेव ववृधे मदनस्तयोः ।
तया सह समागत्य स्वाश्रमं दानवस्ततः ॥ १४६

रम्यं क्रीडालयं गत्वा विजहार पुनः पुनः ।
एवं स बुभुजे राज्यं शङ्खचूडः प्रतापवान् ॥ १४७

एकमन्वन्तरं पूर्णं राजराजेश्वरो महान् ।
देवानामसुराणाञ्च दानवानाञ्च सन्ततम् ॥ १४८

गन्धर्वाणां किन्नराणां राक्षसानां च शान्तिदः ।
हृताधिकारा देवाश्च चरन्ति भिक्षुका यथा ॥ १४९

ते सर्वेऽतिविषण्णाश्च प्रजग्मुः ब्रह्मणः सभाम् ।
वृत्तान्तं कथयामासू रुरुदुश्च भृशं मुहुः ॥ १५०

तदा ब्रह्मा सुरैः सार्धं जगाम शङ्करालयम् ।
सर्वेशं कथयामास विधाता चन्द्रशेखरम् ॥ १५१

ब्रह्मा शिवश्च तैस्सार्धं वैकुण्ठं च जगाम ह ।
दुर्लभं परमं धाम जरामृत्युहरं परम् ॥ १५२

सम्प्राप च वरं द्वारमाश्रमाणां हरेरहो ।
ददर्श द्वारपालांश्च रत्नसिंहासनस्थितान् ॥ १५३

शोभितान्पीतवस्त्रैश्च रत्नभूषणभूषितान् ।
वनमालान्वितान्सर्वान् श्यामसुन्दरविग्रहान् ॥ १५४
शङ्खचक्रगदापद्मधरांश्चैव चतुर्भुजान् ।
सस्मितान्स्मेरवक्त्रास्यान् पद्मनेत्रान्मनोहरान् ॥ १५५
ब्रह्मा तान्कथयामास वृत्तान्तं गमनार्थकम् ।
तेऽनुज्ञां च ददुस्तस्मै प्रविवेश तदाज्ञया ॥ १५६
एवं षोडश द्वाराणि निरीक्ष्य कमलोद्भवः ।
देवैः सार्धं तानतीत्य प्रविवेश हरेः सभाम् ॥ १५७
देवर्षिभिः परिवृतां पार्षदैश्च चतुर्भुजैः ।
नारायणस्वरूपैश्च सर्वैः कौस्तुभभूषितैः ॥ १५८
नवेन्दुमण्डलाकारां चतुरस्रां मनोहराम् ।
मणीन्द्रहारनिर्माणां हीरसारसुशोभिताम् ॥ १५९
अमूल्यरत्नखचितां रचितां स्वेच्छया हरेः ।
माणिक्यमालाजालाभां मुक्तापंक्तिविभूषिताम् ॥ १६०
मण्डितां मण्डलाकारैः रत्नदर्पणकोटिभिः ।
विचित्रैश्चित्ररेखाभिः नानाचित्रविचित्रिताम् ॥ १६१
पद्मरागेन्द्ररचितां रुचिरां मणिपङ्कजैः ।
सोपानशतकैर्युक्तां स्यमन्तकविनिर्मितैः ॥ १६२
पट्टसूत्रग्रन्थियुक्तैः चारुचन्दनपल्लवैः ।
इन्द्रनीलस्तम्भचयैः वेष्टितां सुमनोहराम् ॥ १६३

तद्रत्नपूर्णकुम्भानां समूहैश्च समन्विताम् ।
पारिजातप्रसूनानां मालाजालैर्विराजिताम् ॥ १६४

कस्तूरीकुङ्कुमारक्तैः सुगन्धिचन्दनद्रुमैः ।
सुसंस्कृतां तु सर्वत्र वासितां गन्धवायुना ॥ १६५

विद्याधरीसमूहानां नृत्यजालैर्विराजिताम् ।
सहस्रयोजनायामां परिपूर्णां च किङ्करैः ॥ १६६

ददर्श श्रीहरिं ब्रह्मा शङ्करश्च सुरैः सह ।
वसन्तं तन्मध्यदेशे यथेन्दुं तारकावृतम् ॥ १६७

अमूल्यरत्ननिर्माणचित्रसिंहासने स्थितम् ।
किरीटिनं कुण्डलिनं वनमालाविभूषितम् ॥ १६८

चन्दनोक्षितसर्वाङ्गं बिभ्रतं केलिपङ्कजम् ।
पुरतो नृत्यगीतं च पश्यन्तं सस्मितं मुदा ॥ १६९

शान्तं सरस्वतीकान्तं लक्ष्मीधृतपदांबुजम् ।
लक्ष्म्या प्रदत्तताम्बूलं भुक्तवन्तं सुवासितम् ॥ १७०

गङ्गया परया भक्त्या सेवितं श्वेतचामरैः ।
सर्वैश्च स्तूयमानं च भक्तिनम्रात्मकन्धरैः ॥ १७१

एवं विशिष्टं तं दृष्ट्वा परिपूर्णतमं प्रभुम् ।
ब्रह्मादयः सुराः सर्वे प्रणम्य तुष्टुवुस्तदा ॥ १७२

पुलकाञ्चितसर्वाङ्गाः साश्रुनेत्राश्च गद्गदाः ।
भक्ताश्च परया भक्त्या भीता नम्रात्मकन्धराः ॥ १७३

कृताञ्जलिपुटो भूत्वा विधाता जगतामपि ।
वृत्तान्तं कथयामास विनयेन हरेः पुरः ॥ १७४
हरिस्तद्वचनं श्रुत्वा सर्वज्ञः सर्वभाववित् ।
प्रहस्योवाच ब्रह्माणं रहस्यं च मनोहरम् ॥ १७५

श्रीभगवान् उवाच—

शङ्खचूडस्य वृत्तान्तं सर्वं जानामि पद्मज ।
मद्भक्तस्य च गोपस्य महातेजस्विनः पुरा ॥ १७६
शृणु तत्सर्ववृत्तान्तं इतिहासं पुरातनम् ।
गोलोकस्यैव चरितं पापघ्नं पुण्यकारकम् ॥ १७७
सुदामा नाम गोपश्च पार्षदप्रवरो मम ।
स प्राप दानवीं योनिं राधाशापात्सुदारुणात् ॥ २७८
तत्रैकदाऽहमगमं स्वालयाद्रासमण्डलम् ।
विरजामपि नीत्वा च मम प्राणाधिका परा ॥ १७९
सा मां विरजया सार्धं विज्ञाय किंकरीमुखात् ।
पश्चात्क्रुद्धा सा जगाम न ददर्श च तत्र माम् ॥ १८०
विरजां च नदीरूपां मां ज्ञात्वा च तिरोहितम् ।
पुनर्जगाम सा दृष्ट्वा स्वालयं सखिभिः सह ॥ १८१
मां दृष्ट्वा मन्दिरे देवी सुदाम्ना सहितं पुरा ।
भृशं सा भर्त्सयामास मौनीभूतं च सुस्थितम् ॥ १८२
तच्छ्रुत्वाऽसहमानश्च सुदामा तां चुकोप ह ।

स च तां भर्त्सयामास कोपेन मम सन्निधौ ॥ १८३
तच्छ्रुत्वा कोपयुक्ता सा रक्तपङ्कजलोचना ।
बहिष्कर्तुं चकाराज्ञां संत्रस्तं मम संसदि ॥ १८४
सखीलक्षं समुत्तस्थौ दुर्वारं तेजसोल्बणम् ।
बहिश्चकार तं तूर्णं जल्पन्तं च पुनः पुनः ॥ १८५
सा च तत्ताडनं तासां श्रुत्वा रुष्टा शशाप ह ।
याहि रे दानवीं योनिमित्येवं दारुणं वचः ॥ १८६
तं गच्छन्तं शपन्तं च रुदन्तं मां प्रणम्य च ।
वारयामास तुष्टा सा रुदती कृपया पुनः ॥ १८७
हे वत्स तिष्ठ मा गच्छ क यासीति पुनः पुनः ।
समुच्चार्य च तत्पश्चाज्जगाम सा च विक्लवम् ॥ १८८
गोप्यश्च रुरुदुः सर्वा गोपाश्चाऽपि सुदुःखिताः ।
ते सर्वे राधिका चापि तत्पश्चाद्बोधिता मया ॥ १८९
आयास्यति क्षणार्धेन कृत्वा शापस्य पालनम् ।
सुदामंस्त्वमिहागच्छेत्युक्त्वा सा च निवारिता ॥ १९०
गोलोकस्य क्षणार्धेन चैकं मन्वन्तरं भवेत् ।
पृथिव्या जगतां धातरित्येव वचनं ध्रुवम् ॥ १९१
इत्येवं शङ्खचूडश्च पुनस्तत्रैव यास्यति ।
महाबलिष्ठो योगेशः सर्वमायाविशारदः ॥ १९२
मम शूलं गृहीत्वा च शीघ्रं गच्छत भारतम् ।

शिवः करोतु संहारं मम शूलेन रक्षसः ॥ १९३
ममैव कवचं कण्ठे सर्वमङ्गलकारकम् ।
बिभर्ति दानवः शश्वत्संसारे विजयी ततः ॥ १९४
तस्मिन्ब्रह्मस्थिते चैव न कोपि हिंसितुं क्षमः ।
तद्याचनां करिष्यामि विप्ररूपोऽहमेव च ॥ १९५
सतीत्वहानिः तत्पत्न्या यत्र काले भविष्यति ।
तत्रैव काले तन्मृत्युः इति दत्तो वरस्त्वया ॥ १९६
तत्पत्न्याश्चोदरे वीर्यं अर्पयिष्यामि निश्चितम् ।
तत्क्षणे चैव तन्मृत्युर्भविष्यति न संशयः ॥ १९७
पश्चात्सा देहमुत्सृज्य भविष्यति मम प्रिया ।
इत्युक्त्वा जगतां नाथो ददौ शूलं हराय च ॥ १९८
शूलं दत्वा ययौ शीघ्रं हरिरभ्यन्तरे मुदा ।
भारतं च ययुर्देवा ब्रह्मरुद्रपुरोगमाः ॥ १९९
ब्रह्मा शिवं सन्नियोज्य संहारे दानवस्य च ।
जगाम स्वालयं तूर्णं यथास्थानं सुरोत्तमाः ॥ २००
चन्द्रभागानदीतीरे वटमूले मनोहरे ।
तत्र तस्थौ महादेवो देवविस्तारहेतवे ॥ २०१
दूतं कृत्वा चित्ररथं गन्धर्वेश्वरमीप्सितम् ।
शीघ्रं प्रस्थापयामास शङ्खचूडान्तिकं मुदा ॥ २०२
सर्वेश्वराज्ञया शीघ्रं ययौ तन्नगरं परम् ।

महेन्द्रनगरोत्कृष्टं कुबेरभवनाधिकम् ॥ २०३
पञ्चयोजनविस्तीर्णं दैर्घ्ये तद्द्विगुणं भवेत् ।
स्फटिकाकारमणिभिः निर्मितं यानवेष्टितम् ॥ २०४
सप्तभिः परिखाभिश्च दुर्गमाभिः समन्वितम् ।
ज्वलदग्निनिभैः शश्वत्कल्पितं रत्नकोटिभिः ॥ २०५
युक्तं च वीथीशतकैः मणिवेदिविचित्रितैः ।
परितो वणिजां सौधैः नानावस्तुविराजितैः ॥ २०६
सिन्धूराकारमणिभिः निर्मितैश्च विचित्रितैः ।
भूषितं भूषितैर्दिव्यैः आश्रमैः शतकोटिभिः ॥ २०७
गत्वा ददर्श तन्मध्ये शङ्खचूडालयं परम् ।
अतीव वलयाकारं यथा पूर्णेन्दुमण्डलम् ॥ २०८
ज्वलदग्निशिखाक्ताभिः परिखाभिः चतसृभिः ।
तद्दुर्गमं च शत्रूणां अन्येषां सुगमं सुखम् ॥ २०९
अत्युच्चैर्गगनस्पर्शिमणिश्रृङ्गविराजितम् ।
राजितं द्वादशद्वारैः द्वारपालसमन्वितम् ॥ २१०
मणीन्द्रसारनिर्माणैः शोभितं लक्षमन्दिरैः ।
शोभितं रत्नसोपानै रत्नस्तम्भविराजितम् ॥ २११
तद् दृष्ट्वा पुष्पदन्तोऽपि वरं द्वारं ददर्श सः ।
द्वारे नियुक्तं पुरुषं शूलहस्तं च सस्मितम् ॥ २१२
तिष्ठन्तं पिङ्गलाक्षं च ताम्रवर्णं भयङ्करम् ।

कथयामास वृत्तान्तं जगाम तदनुज्ञया ॥ २१३

अतिक्रम्य च तद्द्वारं जगामाभ्यन्तरं पुनः ।
न कोपि रक्षति श्रुत्वा दूतरूपं रणस्य च ॥ २१४

गत्वा सोऽभ्यन्तरद्वारं द्वारपालमुवाच च ।
रणस्य सर्ववृत्तान्तं विज्ञापयत मा चिरम् ॥ २१५

स च तं कथयित्वा च दूतो गन्तुमुवाच ह ।
स गत्वा शङ्खचूडन्तं ददर्श सुमनोहरम् ॥ २१६

राजमण्डलमध्यस्थं स्वर्णसिंहासने स्थितम् ।
मणीन्द्ररचितं दिव्यं रत्नदण्डसमन्वितम् ॥ २१७

रत्नकृत्रिमपुष्पैश्च प्रशस्तैः शोभितं सदा ।
भृत्येन मस्तकन्यस्तं स्वर्णच्छत्रं मनोहरम् ॥ २१८

सेवितं पार्षदगणैः रुचिरैः श्वेतचामरैः ।
सुवेषं सुन्दरं रम्यं रत्नभूषणभूषितम् ॥ २१९

माल्येन लेपनं सूक्ष्मं सुवस्त्रं दधतं मुने ।
दानवेन्द्रैः परिवृतं सुवेषैश्च त्रिकोटिभिः ॥ २२०

शतकोटिभिरन्यैश्च भ्रमद्भिरस्त्रपाणिभिः ।
एवंभूतं च तं दृष्ट्वा पुष्पदन्तः सविस्मयः ॥ २२१

उवाच स च वृत्तान्तं यदुक्तं शङ्करेण च ।
राजेन्द्र शिवभृत्योऽहं पुष्पदन्ताभिधः प्रभो ॥ २२२

यदुक्तं शङ्करेणैव तद्ब्रवीमि निशामय ।
राज्यं देहि च देवानां अधिकारं च साम्प्रतम् ॥ २२३
देवाश्च शरणापन्ना देवेशं श्रीहरिं परम् ।
हरिर्दत्वाऽस्य शूलं च तेन प्रस्थापितः शिवः ॥ २२४
पुष्पभद्रानदीतीरे वटमूले त्रिलोचनः ।
विषयं देहि तेषां च युद्धं वा कुरु निश्चितम् ॥ २२५
गत्वा वक्ष्यामि किं शम्भुं अथ तद्वद मामपि ।
दूतस्य वचनं श्रुत्वा शङ्खचूडः प्रहस्य च ॥ २२६
प्रभातेऽहं गमिष्यामि त्वं च गच्छेत्युवाच ह ।
स आगत्योवाच तं तूर्णं वटमूलस्थमीश्वरम् ॥ २२७
शङ्खचूडस्य वचनं तदीयं तन्मुखोदितम् ।
एतस्मिन्नन्तरे स्कन्द आजगाम शिवान्तिकम् ॥ २२८
वीरभद्रश्च नन्दी च महाकालः सुभद्रकः ।
विशालाक्षश्च बाणश्च पिङ्गलाक्षो विकम्पनः ॥ २२९
विरूपो विकृतिश्चैव मणिभद्रश्च बाष्कलः ।
कपिलाख्यो दीर्घदंष्ट्रो विकटस्ताम्रलोचनः ॥ २३०
कालकण्ठो बली भद्रः कालजिह्वः कुटीचरः ।
बलोन्मत्तो रणश्लाघी दुर्जयो दुर्गमस्तथा ॥ २३१
अष्टौ च भैरवा रौद्रा रुद्राश्चैकादश स्मृताः ।
हुताशनश्च चन्द्रश्च विश्वकर्माश्विनौ च तौ ॥ २३२

कुबेरश्च यमश्चैव जयन्तो नलकूबरः ।
वायुश्च वरुणश्चैव बुधश्च मङ्गलस्तथा ॥ २३३

धर्मश्च शनिरीशानः कामदेवश्च वीर्यवान् ।
उग्रदंष्ट्रा चोग्रचण्डा कोटरा कैटभी तथा ॥ २३४

स्वयं चाष्टभुजा देवी भद्रकाली भयङ्करी ।
रत्नेन्द्रसारनिर्माणविमानोपरि संस्थिता ।
रक्तवस्त्रपरिधाना रक्तमाल्यानुलेपना ॥ २३५

नृत्यन्ती च हसन्ती च गायन्ती सुस्वरं मुदा ।
अभयं ददाति भक्तेभ्योऽभया सा च भयं रिपुम् ॥ २३६

बिभ्रती विकटां जिह्वां सुलोलां योजनायतम् ।
त्रिशूलं गगनस्पर्शि शक्तिं च योजनायताम् ॥ २३७

मुद्गरं मुसलं वज्रं खरं फलकमुज्ज्वलम् ।
वैष्णवास्त्रं वारुणास्त्रं वाह्नेयं नागपाशकम् ॥ २३८

नारायणास्त्रं गान्धर्वं ब्रह्मास्त्रं गारुडं तथा ।
पर्जन्यास्त्रं पाशुपतं जृम्भणास्त्रं च पार्वतम् ॥ २३९

माहेश्वरास्त्रं वायव्यं दण्डं सम्मोहनं तथा ।
अव्यक्तमस्त्रकं दिव्यं दिव्यास्त्रशतकं परम् ॥ २४०

आगत्य तत्र तस्थौ च योगिनीनां त्रिकोटिभिः ।
सार्धं च डाकिनीनां च विकटानां त्रिकोटिभिः ॥

भूतप्रेतपिशाचाश्च कूश्माण्डा ब्रह्मराक्षसाः ।
वेतालराक्षसाश्चैव यक्षाश्चैव तु किन्नराः ॥  २४२

ताभिश्चैव सह स्कन्दः प्रणम्य चन्द्रशेखरम् ।
पितुः पार्श्वे सहायार्थं समुवास तदाज्ञया ॥  २४३

अथ दूते गते तत्र शङ्खचूडः प्रतापवान् ।
उवाच तुलसीं वार्तां गत्वाभ्यन्तरमेव च ॥  २४४

रणवार्तां च सा श्रुत्वा शुष्ककण्ठोष्ठतालुका ।
उवाच मधुरं साध्वी हृदयेन विदूयता ॥  २४५

तुलस्युवाच—

हे प्राणबन्धो हे नाथ तिष्ठ मे वक्षसि क्षणम् ।
हे प्राणाधिष्ठातृदेव रक्ष मे जीवितं क्षणम् ॥  २४६

भुंक्ष्व जन्म समासाद्य यन्मे मनसि वाञ्छितम् ।
पश्यामि त्वां क्षणं किञ्चिल्लोचनाभ्याञ्च सादरम् ॥  २४७

आन्दोलयन्ते प्राणा मे मनो दग्धं च सन्ततम् ।
दुःस्वप्नश्च मया दृष्टश्चाद्यैव चरमे निशि ॥  २४८

तुलसीवचनं श्रुत्वा भुक्त्वा पीत्वा नृपेश्वरः ।
उवाच वचनं प्राज्ञो हितं सत्यं यथोचितम् ॥  २४९

शङ्खचूड उवाच—

कालेन योजितं सर्वं कर्म भोगनिबन्धनम् ।
शुभं हर्षः सुखं दुःखं भयं शोकश्च मङ्गलम् ॥  २५०

काले भवन्ति वृक्षाश्च स्कन्धवन्तश्च कालतः ।
क्रमेण पुष्पवन्तश्च फलवन्तश्च कालतः ॥ २५१

तेषां फलानि पक्वानि प्रभवन्त्येव कालतः ।
ते सर्वे फलिताः काले पातं यान्ति च कालतः २५२

काले भवन्ति विश्वानि काले नश्यन्ति सुन्दरि ।
कालात् स्रष्टा च सृजति पाता पाति च कालतः ॥२५३

संहर्ता संहरेत् काले क्रमेण सञ्चरन्ति ते ।
ब्रह्मविष्णुशिवादीनां ईश्वरः प्रकृतिः परा ॥ २५४

स्रष्टा पाता च संहर्ता स चात्मा कालनर्तकः ।
काले स एव प्रकृतिं स्वाभिन्नां स्वेच्छया प्रभुः ॥ २५५

निर्माय कृतवान्सर्वान्विश्वस्थांश्च चराचरान् ।
सर्वेशः सर्वरूपश्च सर्वात्मा परमेश्वरः ॥ २५६

जनं जनेन जनिता जनं पाति जनेन यः ।
जनं जनेन हरते तं देवं भज साम्प्रतम् ॥ २५७

यस्याऽऽज्ञया वाति वातः शीघ्रगामी च साम्प्रतम् ।
यस्याऽऽज्ञया च तपनस्तपत्येव यथाक्षणम् ॥ २६८

यथाक्षणं वर्षतीन्द्रो मृत्युश्चरति जन्तुषु ।
यथाक्षणं दहत्यग्निः चन्द्रो भ्रमति शीतवान् ॥ २५९

मृत्योर्मृत्युं कालकालं यमस्य च यमं परम् ।
विभ्रंस्त्रष्टुश्च स्रष्टारं पातुश्च पातृकं भवे ॥ २६०

संहर्तारं च संहर्तुः तं देवं शरणं व्रज ।
को वा बन्धुश्च केषां वा सर्वबन्धुं भज प्रिये ॥ २६१
अहं को वा च त्वं का वा विधिना योजितः पुरा ।
त्वया सार्धं कर्मणा च पुनस्तेन वियोजितः ॥ २६२
अज्ञानी कातरः शोके विपत्तौ च न पण्डितः ।
सुखे दुःखे भ्रमत्येव कालनेमिक्रमेण च ॥ २६३
नारायणं तं सर्वेशं कान्तं यास्यसि निश्चितम् ।
तपः कृतं यदर्थे च पुरा बदरिकाश्रमे ॥ २६४
मया त्वं तपसा लब्धा ब्रह्मणस्तु वरेण च ।
हर्यर्थयत्तव तपो हरिं प्राप्स्यसि कामिनि ॥ २६५
बृन्दावने च गोविन्दं गोलोके त्वं लभिष्यसि ।
अहं यास्यामि तल्लोकं तनुं त्यक्त्वा च दानवीम् ॥
तत्र द्रक्ष्यसि मां त्वं च द्रक्ष्यामि त्वां च साम्प्रतम् ।
अगमं राधिकाशापाद्भारतं च सुदुर्लभम् ॥ २६७
पुन र्यास्यामि तत्रैव कः शोको मे शृणु प्रिये ।
त्वं च देहं परित्यज्य दिव्यरूपं विधाय च ॥ २६८
तत्कालं प्राप्स्यसि हरिं मा कान्ते कातरा भव ।
इत्युक्त्वा च दिनान्ते च तया सार्धं मनोहरम् ॥ २६९
सुष्वाप शोभने तल्पे पुष्पचन्दचर्चिते ।
नाना प्रकार विभवं चकार रत्नमन्दिरे ॥ २७०

रत्नप्रदीपसंयुक्ते स्त्रीरत्नं प्राप्य सुन्दरीम् ।
निनाय रजनीं राजा क्रीडाकौतुकमङ्गलैः ॥ २७१
कृत्वा वक्षसि तां कान्तां रुदतीमतिदुःखिताम् ।
कृशोदरीं निराहारां निमग्नां शोकसागरे ॥ २७२
पुनस्तां बोधयामास दिव्यज्ञानेन ज्ञानवित् ।
पुरा कृष्णेन यद्दत्तं भाण्डीरे तत्वमुत्तमम् ॥ २७३
स च तस्मै ददौ सर्वं सर्वशोकहरं परम् ।
ज्ञानं सम्प्राप्य सा देवी प्रसन्नवदनेक्षणा ॥ २७४
क्रीडां चकार हर्षेण सर्वं मत्वेति नश्वरम् ।
तौ दम्पती च क्रीडन्तौ निमग्नौ सुखसागरे ॥ २७५
पुलकाञ्चितसर्वाङ्गौ मूर्च्छितौ निर्जने मुने ।
अङ्गप्रत्यङ्गसंयुक्तौ सुप्रीतौ सुरतोत्सुकौ ॥ २७६
एकाङ्गौ च तथा तौ द्वौ चार्धनारीश्वरो यथा ।
प्रणेश्वरञ्च तुलसी मेने प्राणाधिकं परम् ॥ २७७
प्राणाधिकां च तां मेने राजा प्राणेश्वरीं सतीम् ।
तौ स्थितौ सुखसुप्तौ च तन्द्रितौ सुन्दरौ समौ ॥ २७८
सुवेषौ सुखसम्भोगादचेष्टौ सुमनोहरौ ।
क्षणं सुचेतनौ तौ च कथयन्तौ रसाश्रयात् ॥ २७९
कथां मनोरमां दिव्यां हसन्तौ च क्षणं पुनः ।
क्षणं च केलिसंयुक्तौ रसभावसमन्वितौ ॥ २८०

सुरते विरतिर्नास्ति तौ तद्विषयपण्डितौ ।
सततं जययुक्तौ द्वौ क्षणं नैव पराजितौ ॥ २८१

श्रीकृष्णं मनसा ध्यात्वा रक्षः कृष्णपरायणः ।
ब्राह्मे मुहूर्ते उत्थाय पुष्पतल्पान्मनोहरात् ॥ २८२

रात्रिवासः परित्यज्य स्नात्वा मङ्गलवारिणा ।
धौते च वाससी धृत्वा कृत्वा तिलकमुज्ज्वलम् ॥

चकाराह्निकमावश्यमभीष्टदेववन्दनम् ।
दध्याज्यमधुलाजांश्च ददर्श वस्तु मङ्गलम् ॥ २८४

रत्नश्रेष्ठं मणिश्रेष्ठं वस्त्रश्रेष्ठं च काञ्चनम् ।
ब्राह्मणेभ्यो ददौ भक्त्या यथानित्यं च नारद ॥ २८५

अमूल्यरत्नं यत्किञ्चिन्मुक्तामाणिक्यहीरकम् ।
ददौ विप्राय गुरवे यात्रामङ्गलहेतवे ॥ २८६

गजरत्नमश्वरत्नं धनरत्नं मनोहरम् ।
ददौ सर्वं दरिद्राय विप्राय मङ्गलाय च ॥ २८७

भाण्डाराणां सहस्राणि नगराणां द्विलक्षकम् ।
ग्रामाणां शतकोटिं च ब्राह्मणाय ददौ मुदा ॥ २८८

पुत्रं कृत्वा तु राजेन्द्रं सर्वेषु दानवेषु च ।
पुत्रे समर्प्य भार्यां तां राज्यं च सर्वसम्पदम् ॥

प्रजानुचरसङ्घं च भाण्डारं वाहनादिकम् ।
स्वयं सन्नाहयुक्तश्च धनुष्पाणिर्बभूव ह ॥ २९०

भृत्यद्वारा क्रमेणैव चकार सैन्यसञ्चयम् ।
अश्वानां च त्रिलक्षेण लक्षेण वरहस्तिनाम् ॥ २९१
रथानामयुतेनैव धानुष्काणां त्रिकोटिभिः ।
त्रिकोटिभिर्वर्मिणां च शूलिनां च त्रिकोटिभिः ॥ २९२
कृता सेना परिमिता दानवेन्द्रेण नारद ।
तस्यां सेनापतिश्चैव युद्धशास्त्रविशारदः ॥ २९३
महारथः स विज्ञेयः रथिनां प्रवरो रणे ।
त्रिलक्षाऽक्षौहिणीसेनापतिं कृत्वा नराधिपः ॥ २९४
त्रिंशदक्षौहिणीबाधं भाण्डौघं च चकार ह ।
बहिर्बभूव शिबिरान्मनसा श्रीहरिं स्मरन् ॥ २९५
रत्नेन्द्रसारनिर्माणविमानमारुरोह सः ।
गुरुवर्गान्पुरस्कृत्य प्रययौ शङ्करान्तिकम् ॥ २९६
पुष्पभद्रानदीतीरे यत्राक्षयवटः शुभः ।
सिद्धाश्रमं च सिद्धानां सिद्धिक्षेत्रं च नारद ॥ २९७
कपिलस्य तपःस्थानं पुण्यक्षेत्रे च भारते ।
पश्चिमोदधिपूर्वे च मलयस्य च पश्चिमे ॥ २९८
श्रीशैलोत्तरभागे च गन्धमादनदक्षिणे ।
पञ्चयोजनविस्तीर्णा दैर्घ्ये शतगुणा तथा ॥ २९९
शुद्धस्फटिकसङ्काशा भारते च सुपुण्यदा ।
शाश्वती जलपूर्णा च पुष्पभद्रानदी शुभा ॥ ३००

गोमतीं वामतः कृत्वा प्रविष्टा पश्चिमोदधौ ।
तत्र गत्वा शङ्खचूडो ददर्श चन्द्रशेखरम् ॥ ३०१

वटमूले समासीनं सूर्यकोटिसमप्रभम् ।
कृत्वा योगासनं दृष्ट्वा मुद्रायुक्तं च सस्मितम् ॥ ३०२

शुद्धस्फटिकसङ्काशं ज्वलन्तं ब्रह्मतेजसा ।
त्रिशूलपट्टिशधरं व्याघ्रचर्माम्बरं वरम् ॥ ३०३

भक्तमृत्युहरं शान्तं गौरीकान्तं मनोहरम् ।
तपसां फलदातारं दातारं सर्वसम्पदाम् ॥ ३०४

आशुतोषं प्रसन्नास्यं भक्तानुग्रहकातरम् ।
विश्वनाथं विश्वबीजं विश्वरूपं च विश्वजम् ॥ ३०५

विश्वंभरं विश्ववरं विश्वसंहारकारकम् ।
कारणं कारणानां च नरकार्णवतारणम् ॥ ३०६

ज्ञानप्रदं ज्ञानबीजं ज्ञानानन्दं सनातनम् ।
अवरुह्य विमानाच्च तं दृष्ट्वा दानवेश्वरः ॥ ३०७

सर्वैः सार्धं भक्तियुक्तः शिरसा प्रणनाम सः ।
वामतो भद्रकालीं च स्कन्दं च तत्पुरः स्थितम् ॥ ३०८

आशिषं च ददौ तस्मै काली स्कन्दश्च शङ्करः ।
उत्तस्थुरागतं दृष्ट्वा सर्वे नन्दीश्वरादयः ॥ ३०९

परस्परं च भाषां ते चक्रुस्तत्र च साम्प्रतम् ।
राजा कृत्वा च सम्भाषामुवास शिवसन्निधौ ॥ ३१०

प्रसन्नात्मा महादेवो भगवांस्तमुवाच ह ।
विधाता जगतां ब्रह्मा पिता धर्मस्य धर्मवित् ॥ ३११
मरीचिस्तस्य पुत्रश्च वैष्णवश्चापि धार्मिकः ।
कश्यपश्चापि तत्पुत्रो धर्मिष्ठश्च प्रजापतिः ॥ ३१२
दक्षः प्रीत्या ददौ तस्मै भक्त्या कन्यास्त्रयोदश ।
तास्वेका च दनुः साध्वी तत्सौभाग्यविवर्धिता ॥३१३
चत्वारिंशद्दनोः पुत्रा दानवास्ते च सोल्बणाः ।
तेष्वेको विप्रचित्तिश्च महाबलपराक्रमः ॥ ३१४
तत्पुत्रो धार्मिको दम्भो विष्णुभक्तो जितेन्द्रियः ।
जजाप परमं मन्त्रं पुष्करे लक्षवत्सरम् ॥ ३१५
शुक्राचार्यं गुरुं कृत्वा कृष्णस्य परमात्मनः ।
तदा त्वां तनयं प्राप परं कृष्णपरायणम् ॥ ३१६
पुरा त्वं पार्षदो गोपो गोपेष्वपि सुधार्मिकः ।
अधुना राधिकाशापाद्भारते दानवेश्वरः ॥ ३१७
आब्रह्मस्तम्बपर्यन्तं तुच्छं मेने च वैष्णवः ।
सालोक्यसार्ष्टिसायुज्यसामीप्यं च हरेरपि ॥ ३१८
दीयमानं न गृह्णन्ति वैष्णवाः सेवनं विना ।
ब्रह्मत्वममरत्वं वा तुच्छं मेने च वैष्णवः ॥ ३१९
इन्द्रत्वं वा मनुत्वं वा न मेने गणनासु च ।
कृष्णभक्तस्य ते किं वा देवानां विषये भ्रमे ॥ ३२०

देहि राज्यं च देवानां मत्प्रीतिं रक्ष भूमिप ।
सुखं स्वराज्ये त्वं तिष्ठ देवास्तिष्ठन्तु वै पदे ॥ ३२१

अलं भूतविरोधेन सर्वे कश्यपवंशजाः ।
यानि कानि च पापानि ब्रह्महत्यादिकानि च ॥ ३२२

ज्ञातिद्रोहस्य पापानि कलां नार्हति षोडशीम् ।
स्वसम्पदां च हानिं च यदि राजेन्द्र मन्यसे ॥ ३२३

सर्वावस्था च समतां केषां याति च सर्वदा ।
ब्रह्मणश्च तिरोभावो लये प्राकृतिके सदा ॥ ३२४

आविर्भावः पुनस्तस्य प्रभावादीश्वरेच्छया ।
ज्ञानवृद्धिश्च तपसा स्मृतिलोपश्च निश्चितम् ॥ ३२५

करोति सृष्टिं ज्ञानेन स्रष्टा सोपि क्रमेण च ।
परिपूर्णतमो धर्मः सत्ये सत्याश्रये सदा ॥ ३२६

त्रिभागः सोपि त्रेतायां द्विभागो द्वापरे स्मृतः ।
एकभागः कलौ पूर्वं तदंशश्च क्रमेण च ॥ ३२७

कलामात्रं कलेः शेषे कुह्वां चन्द्रकला यथा ।
यादृक्तेजो रवे ग्रीष्मे न तादृक्छिशिरे पुनः ॥ ३२८

दिनेषु यादृङ् मध्याह्ने सायं प्रातर्न तत्समम् ।
उदयं याति कालेन बालतां च क्रमेण च ॥ ३२९

प्रकाण्डतां च तत्पश्चात्कालेऽस्तं पुनरेति सः ।
दिने प्रच्छन्नतां याति कालेन दुर्दिने घने ॥ ३३०

राहुग्रस्ते कंपितश्च पुनरेव प्रसन्नताम् ।
परिपूर्णतमश्चन्द्रः पूर्णिमायां च जायते ॥ ३३१

तादृशो न भवेन्नित्यं क्षयं याति दिने दिने ।
पुनश्च पुष्टिमायाति परं कुह्वादिने दिने ॥ ३३२

सम्पद्युक्तः शुक्लपक्षे कृष्णे म्लानश्च यक्ष्मणा ।
राहुग्रस्ते दिने म्लानो दुर्दिनेन विरोचते ॥ ३३३

काले चन्द्रो भवेच्छुक्लो भ्रष्टश्रीः कालभेदतः ।
भविष्यति बलिश्चेन्द्रो भ्रष्टश्रीः सुतलेऽधुना ॥ ३३४

कालेन पृथ्वी सस्याढ्या सर्वाधारा वसुन्धरा ।
काले जले निमग्ना सा तिरोभूताम्बुविप्लुता ॥ ३३५

काले नश्यन्ति विश्वानि प्रभवन्त्येव कालतः ।
चराचराश्च कालेन नश्यन्ति प्रभवन्ति च ॥ ३३६

ईश्वरस्यैव समता ब्रह्मणः परमात्मनः ।
अहं मृत्युञ्जयो यस्मादसंख्यं प्राकृतं लयम् ॥ ३३७

अदर्शं चापि द्रक्ष्यामि वारं वारं पुनः पुनः ।
स च प्रकृतिरूपं च स एव पुरुषः स्मृतः ॥ ३३८

स चात्मा स च जीवश्च नानारूपधरः परः ।
करोति सततं योऽहि तन्नामगुणकीर्तनम् ॥ ३३९

काले मृत्युं स जयति जन्मरोगभयं जराम् ।
स्रष्टा कृतो विधिस्तेन पाता विष्णुः कृतो भवेत् ॥ ३४०

अहं कृतश्च संहर्ता वयं विषयिणः कृताः ।
कालाग्निरुद्रं संहारे नियोज्य विषये नृप ॥ ३४१
अहङ्करोमि सततं तन्नामगुणकीर्तनम् ।
तेन मृत्युञ्जयोऽहं च ज्ञानेनानेन निर्भयः ॥ ३४२
मृत्युर्मृत्युभयाद्याति वैनतेयादिवोरगः ।
इत्युक्त्वा स च सर्वेशः सर्वभावनतत्परः ॥ ३४३
विरराम च शम्भुश्च सभामध्ये च नारद ।
राजा तद्वचनं श्रुत्वा प्रशशंस पुनः पुनः ॥ ३४४
उवाच मधुरं देवं परं विनयपूर्वकम् ।

शङ्खचूड उवाच—

त्वया यत्कथितं देव नाऽन्यथा वचनं स्मृतम् ॥ ३४५
तथापि किञ्चिद्याथार्थं श्रूयतां मन्निवेदनम् ।
ज्ञातिद्रोहे महत्पापं त्वयोक्तमधुना च यत् ॥ ३४६
गृहीत्वा तस्य सर्वस्वं कुतः प्रस्थापितो बलिः ।
मया समुद्धृतं सर्वमूर्ध्वमैश्वर्यमीश्वर ॥ ३४७
सुतलाच्च समुद्धर्तुं नालं तत्र गदाधरः ।
स भ्रातृको हिरण्याक्षः कथं दैवैश्च हिंसितः ॥ ३४८
शुम्भादयश्चासुराश्च कथं देवैर्निपातिताः ।
पुरा समुद्रमथने पीयूषं भक्षितुं सुरैः ॥ ३४९
क्लेशभाजो वयं तत्र ते सर्वे फलभोगिनः ।
क्रीडाभाण्डमिदं विश्वं प्रकृतेः परमात्मनः ॥ ३५०

यस्मै यत्र स ददाति तस्यैश्वर्यं भवेत्तदा ।
देवदानवयोर्वादः शश्वन्नैमित्तिकः सदा । ३५१
पराजयो जयस्तेषां कालेऽस्माकं क्रमेण च ।
तदाऽऽवयोर्विरोधे वा गमनं निष्फलं परम् ॥ ३५२
समसम्बन्धिनो बन्धोरीश्वरस्य महात्मनः ।
इयं ते महती लज्जा युद्धेऽस्माभिः सहाऽधुना ॥ ३५३
जयेत्ततोऽधिका कीर्तिर्हानिश्चैव पराजये ।
इत्येतद्वचनं श्रुत्वा प्रहस्य च त्रिलोचनः ॥ ३५४
यथोचितमुत्तरं तमुवाच दानवेश्वरम् ।
युष्माभिः सह युद्धे मे ब्रह्मवंशसमुद्भवैः ॥ ३५५
का लज्जा महती राजन्नकीर्तिर्वा पराजये ।
युद्धमादौ हरेरेव मधुना कैटभेन च ॥ ३५६
हिरण्यकशिपोश्चैव सह तेनात्मना नृप ।
हिरण्याक्षस्य युद्धं च पुनस्तेन गदाभृता ॥ ३५७
त्रिपुरैः सह युद्धं च मयापि च पुरा कृतम् ।
सर्वेश्वर्याः सर्वमातुः प्रकृत्याश्च बभूव ह ॥ ३५८
सह शुम्भादिभिः पूर्वं समरः परमाद्भुतः ।
पार्षदप्रवरस्त्वं च कृष्णस्य परमात्मनः ॥ ३५९
ये ये हताश्च दैतेया न हि केऽपि त्वया समाः ।
का लज्जा महती राजन् मम युद्धे त्वया सह ॥ ३६०

सुराणां शरणस्यैव प्रेषितश्च हरेरहो ।
देहि राज्यं च देवानामिति मे निश्चितं वचः ॥ ३६१

युद्धं वा कुरु मत्सार्धं वाग्व्यये किं प्रयोजनम् ।
इत्युक्त्वा शङ्करस्तत्र विरराम च नारद ।
उत्तस्थौ शङ्खचूडश्च हि अमात्यैः सह सत्वरम् ॥ ३६२

शिवं प्रणम्य शिरसा दानवेन्द्रः प्रतापवान् ।
समारुरोह यानं च सहामात्यैः ससत्वरः ॥ ३६३

शिवः स्वसैन्यं देवांश्च प्रेरयामास सत्वरम् ।
दानवेन्द्रः सैसन्यश्च युद्धारम्भे बभूव ह ॥ ३६४

स्वयं महेन्द्रो युयुधे सार्धं च वृषपर्वणा ।
भास्करो युयुधे विप्रचित्तिना सह सत्वरः ॥ ३६५

दम्भेन सह चन्द्रश्च चकार परमं रणम् ।
कालस्वरेण कालश्च गोकर्णेन हुताशनः ॥ ३६६

कुबेरः कालकेयेन विश्वकर्मा मयेन च ।
भयंकरेण मृत्युश्च संहारेण मयस्तथा ॥ ३६७

विकङ्कणेन वरुणश्चञ्चलेन समीरणः ।
बुधश्च घृतपृष्टेन रक्ताक्षेण शनैश्चरः ॥ ३६८

जयन्तो रत्नसारेण वसवो वर्चसां गणैः ।
अश्विनौ च दीप्तिमता धूम्रेण नलकूबरः ॥ ३६९

धुरन्धरेण धर्मश्च उषाक्षेण च मङ्गलः ।
शोभाकरेण वै भानुः पिठरेण च मन्मथः ॥ ३७०
गोधामुखेन चूर्णेन खड्गेन च ध्वजेन च ।
काञ्चीमुखेन पिण्डेन धूम्रेण सह नन्दिना ॥ ३७१
विश्वेन च पलाशेनादित्याद्या युयुधुः परे ।
एकादश च रुद्रा वै एकादश भयङ्करैः ॥ ३७२
महामारी च युयुधे चोग्रचण्डादिभिः सह ।
नन्दीश्वरादयः सर्वे दानवानां गणैः सह ॥ ३७३
युयुधुश्च महायुद्धे प्रलयेपि भयङ्करे ।
वटमूले च शम्भुश्च तस्थौ काल्या सुतेन च ॥ ३७४
सर्वे च युयुधुः सैन्यसमूहाः सततं मुने ।
रत्नसिंहासने रम्ये कोटिभिर्दानवैः सह ॥ ३७५
उवास शङ्खचूडश्च रत्नभूषणभूषितः ।
शङ्करस्य च ये योधा दानवैश्च पराजिताः ॥ ३७६
देवाश्च दुद्रुवुः सर्वे भीताश्च क्षतविग्रहाः ।
चकार कोपं स्कन्दश्च देवेभ्यश्चाभयं ददौ ॥ ६७७
बलं च स्वगणानां च वर्धयामास तेजसा ।
सोयमेकश्च युयुधे दानवानां गणैः सह ॥ ३७८
अक्षौहिणीनां शतकं समरे च जघान सः ।
असुरान् पातयामास काली कमललोचना ॥ ३७९

पपौ रक्तं दानवानां अतिक्रुद्धा ततः परम् ।
दशलक्षं गजेन्द्राणां शतलक्षं च कोटिशः ॥ ३८०

समादायैकहस्तेन मुखे चिक्षेप लीलया ।
कबन्धानां सहस्रं च ननर्त समरे मुने ॥ ३८१

स्कन्दस्य शरजालेन दानवाः क्षतविग्रहाः ।
भीताश्च दुद्रुवुः सर्वे महारणपराक्रमाः ॥ ३८२

वृषपर्वा विप्रचित्तिः दम्भश्चापि विकंकणः ।
स्कन्देन सार्धं युयुधुस्ते सर्वे त्रिक्रमेण च ॥ ३८३

महामारी च युयुधे न बभूव पराङ्मुखी ।
बभूवुस्ते च संक्षुब्धाः स्कन्दस्य शक्तिपीडिताः ॥ ३८४

न दुद्रुवुः भयात्स्वर्गे पुष्पवृष्टि र्बभूव ह ।
स्कन्दस्य समरं दृष्ट्वा महारुद्रं समुल्बणम् ॥ ३८५

दानवानां क्षयकरं यथा प्राकृतिको लयः ।
राजा विमानमारुह्य चकार बाणवर्षणम् ॥ ३८६

नृपस्य शरवृष्टिश्च घनस्य वर्षणं यथा ।
महाघोरान्धकारश्च वन्ह्युत्थानं बभूव च ॥ ३८७

देवाः प्रदुद्रुवुः सर्वेऽप्यन्ये नन्दीश्वरादयः ।
एक एव कार्तिकेयः तस्थौ समरमूर्धनि ॥ ३८८

पर्वतानां च सर्पाणां शिलानां शिखिनां तथा ।
नृपश्चकार वृष्टिं च दुर्वारां च भयङ्करीम् ॥ ३८९

नृपस्य शरवृष्ट्या च प्रहतः शिवनन्दनः ।
नीहारेण च सान्द्रेण प्रहतो भास्करो यथा ॥ ३९०
धनुश्चिच्छेद स्कन्दस्य दुर्वहं च भयङ्करः ।
बभञ्ज च रथं दिव्यं चिच्छेद रथपीठकान् ॥ ३९१
मयूरं जर्जरीभूतं दिव्यास्त्रेण चकार सः ।
शक्तिं चिक्षेप सूर्याभां तस्य वक्षस्यघातिनीम् ॥ ३९२
क्षणं मूर्च्छां च सम्प्राप बभूव चेतनः पुनः ।
गृहीत्वा तद्धनुः दिव्यं यद्दत्तं विष्णुना पुरा ॥ ३९३
रत्नेन्द्रसारनिर्माणं यानमारुह्य कार्तिकः ।
शस्त्रास्त्रं च गृहीत्वा च चकार रणमुल्बणम् ॥ ३९४
सर्पांश्च पर्वतांश्चैव वृक्षांश्च प्रस्तरांस्तथा ।
सर्वांश्चिच्छेद कोपेन दिव्यास्त्रेण शिवात्मजः ॥ ३९५
वह्निं निर्वापयामास पार्जन्येन प्रतापवान् ।
रथं धनुश्च चिच्छेद शङ्खचूडस्य लीलया ॥ ३९६
सन्नाहं सारथिं चैव किरीटं मुकुटोज्ज्वलम् ।
चिक्षेप शक्तिं शुक्लाभां दानवेन्द्रस्य वक्षसि ॥ ३९७
मूर्च्छां सम्प्राप्य राजा च चेतनश्च बभूव ह ।
आरुरोह यानमन्यद्धनुर्जग्राह सत्वरः ॥ ३९८
जग्राह शक्तिमव्यग्रां शतसूर्यसमप्रभाम् ।
प्रलयाग्निशिखारूपां विष्णोश्च तेजसाऽऽवृताम् ॥ ३९९

चिक्षेप तां च कोपेन महावेशेन कार्तिके ।
पपात शक्तिस्तद्गात्रे वह्निराशिरिवोज्ज्वला ॥ ४००
मूर्च्छां सम्प्राप शक्त्या च कार्तिकेयो महाबलः ।
काली गृहीत्वा तं क्रोडे निनाय शिवसन्निधौ ॥ ४०१
शिवस्तं चापि ज्ञानेन जीवयामास लीलया ।
ददौ बलमनन्तं च समुत्तस्थौ प्रतापवान् ॥ ४०२
काली जगाम समरं रक्षितुं कार्तिकस्य या ।
वीरास्तामनुजग्मुश्च ते च नन्दीश्वरादयः ॥ ४०३
सर्वे देवाश्च गन्धर्वा यक्षराक्षसकिन्नराः ।
वाद्यभांडश्च बहुशः शतशो मधुवाहकाः ॥ ४०४
सा च गत्वाऽथ सङ्ग्रामं सिंहनादं चकार च ।
देव्याश्च सिंहनादेन प्रापुर्मूर्च्छां च दानवाः ॥ ४०५
अट्टाट्टहासमशिवं चकार च पुनः पुनः ।
दृष्ट्वा पपौ च माध्वीकं ननर्त रणमूर्धनि ॥ ४०६
उग्रदंष्ट्रा चोग्रदण्डा कोटकी च पपौ मधु ।
योगिनी डाकिनीनां च गणाः सुरगणादयः ॥ ४०७
दृष्ट्वा कालीं शङ्खचूडः शीघ्रमाजौ समाययौ ।
दानवाश्च भयं प्रापू राजा तेभ्योऽभयं ददौ ॥ ४०८
काली चिक्षेप वह्निं च प्रलयाग्निशिखोपमम् ।
राजा जघान तं शीघ्रं वैष्णवेन च लीलया ॥ ४०९

नारायणास्त्रं सा देवी चिक्षेप मन्त्रपूर्वकम् ।
राजा ननाम तं दृष्ट्वा चावरुह्य रथादसौ ॥ ४१०
ऊर्ध्वं जगाम तच्चास्त्रं प्रलयाग्निशिखोपमम् ।
पपात शङ्खचूडश्च भक्त्या तं दण्डवद् भुवि ॥ ४११
ब्रह्मास्त्रं सा च चिक्षेप यत्नतो मन्त्रपूर्वकम् ।
ब्रह्मास्त्रेण महाराजो निर्वपञ्च चकार सः ॥ ४१२
तदा चिक्षेप दिव्यास्त्रं सा देवी मन्त्रपूर्वकम् ।
राजा दिव्यास्त्रजालेन तन्निर्वाणं चकार च ॥ ४१३
देवी चिक्षेप शक्तिं च यत्नतो योजनायताम् ।
राजा दिव्यास्त्रजालेन शतखंडां चकार ह ॥ ४१४
जग्राह मन्त्रपूतं च देवी पाशुपतं रुषा ।
निक्षेपणं निरोद्धुं च वाग्बभूवाशरीरिणी ॥ ४१५
मृत्युः पाशुपते नास्ति नृपस्य च महात्मनः ।
यावदस्ति च मन्त्रस्य कवचं च हरेरिति ॥ ४१६
यावत्सतीत्वमस्त्येव सत्याश्च नृपयोषितः ।
तावदस्य जरामृत्युः नास्तीति ब्रह्मणो वचः ॥ ४१७
इत्याकर्ण्य भद्रकाली न तच्चिक्षेप शस्त्रकम् ।
शतलक्षं दानवानां जग्रास लीलया क्षुधा ॥ ४१८
ग्रस्तुं जगाम वेगेन शङ्खचूडं भयङ्करी ।
दिव्यास्त्रेण सुतीक्ष्णेन वारयामास दानवः ॥ ४१९

खड्गं चिक्षेप सा देवी ग्रीष्मसूर्योपमं यथा ।
दिव्यास्त्रेण दानवेन्द्रः शतखण्डं चकार सः ॥ ४२०

पुनर्ग्रस्तुं महादेवी वेगेन च जगाम तम् ।
सर्वसिद्धेश्वरः श्रीमान् ववृधे दानवेश्वरः ॥ ४२१

वेगेन मुष्टिना काली कोपयुक्ता भयङ्करी ।
बभञ्ज च रथं तस्य जघान सारथिं सती ॥ ४२२

सा च शूलं च चिक्षेप प्रलयाग्निशिखोपमम् ।
वामहस्तेन जग्राह शङ्खचूडः स्वलीलया ॥ ४२३

मुष्ट्या जघान तं देवी महाकोपेन वेगतः ।
बभ्राम च तया दैत्यः क्षणं मूर्च्छामवाप च ॥४२४

क्षणेन चेतनां प्राप्य समुत्तस्थौ प्रतापवान् ।
न चकार बाहुयुद्धं देव्या सह ननाम ताम् ॥ ४२५

देव्याश्चास्त्रं स चिच्छेद जग्राह च स्वतेजसा ।
नास्त्रं चिक्षेप तां भक्तो मातृभक्त्या तु वैष्णवः ॥ ४२६

गृहीत्वा दानवं देवी भ्रामयित्वा पुनः पुनः ।
ऊर्ध्वं च प्रापयामास महावेगेन कोपिता ॥ ४२७

ऊर्ध्वात्पपात वेगेन शङ्खचूडः प्रतापवान् ।
निपत्य च समुत्तस्थौ प्रणम्य भद्रकालिकाम् ॥ ४२८

रत्नेन्द्रसारनिर्माणं विमानं सुमनोहरम् ।
आरुरोह हर्षयुक्तो न विश्रान्तो महारणे ॥ ४२९

दानवानां च क्षतजं सा देवी च पपौ क्षुधा ।
पीत्वा भुक्त्वा भद्रकाली जगाम शङ्करान्तिकम् ॥ ४३०
उवाच रणवृत्तान्तं पौर्वापर्यं यथाक्रमम् ।
श्रुत्वा जहास शम्भुश्च दानवानां विनाशनम् ॥ ४३१
लक्षं च दानवेन्द्राणां अवशिष्टं रणेऽधुना ।
भुञ्जत्या निर्गतं वक्त्रात्तदन्यं भुक्तमीश्वर ॥ ४३२
सङ्ग्रामे दानवेन्द्रं च हन्तुं पाशुपतेन वै ।
अवध्यस्तव राजेति वाग्बभूवाशरीरिणी ॥ ४३३
राजेन्द्रश्च महाज्ञानी महाबलपराक्रमः ।
न च चिक्षेप मय्यस्त्रं चिच्छेद मम सायकम् ॥ ४३४
शिवस्तत्वं समाकर्ण्य तत्वज्ञानविशारदः ।
ययौ स्वयं च समरे स्वगणैः सह नारद ॥ ४३५
शङ्खचूडः शिवं दृष्ट्वा विमानादवरुह्य च ।
ननाम परया भक्त्या शिरसा दण्डवद्भुवि ॥ ४३६
तं प्रणम्य च वेगेन विमानमारुरोह सः ।
तूर्णं चकार सन्नाहं धनुर्जग्राह दुर्वहम् ॥ ४३७
शिवदानवयोर्युद्धं पूर्णमब्दशतं पुरा ।
न बभूवतुरन्योन्यं ब्रह्मञ्जयपराजयौ ॥ ४३८
न्यस्तशस्त्रश्च भगवान् न्यस्तशस्त्रश्च दानवः ।
रथस्थः शङ्खचूडश्च वृषस्थो वृषभध्वजः ॥ ४३९

दानवानां च शतकमुद्धृतं च बभूव ह ।
रणे ये ये मृताः शम्भुर्जीवयामास तान्विभुः ॥ ४४०
एतस्मिन्नन्तरे वृद्धब्राह्मणः परमातुरः ।
आगत्य च रणस्थानमुवाच दानवेश्वरम् ॥ ४४१

वृद्धब्राह्मण उवाच—

देहि भिक्षां च राजेन्द्र मह्यं विप्राय साम्प्रतम् ।
त्वं सर्वसम्पदां दाता यन्मे मनसि वाञ्छितम् ॥ ४४२
निरीहाय च वृद्धाय तृषिताय च साम्प्रतम् ।
पश्चात्त्वां कथयिष्यामि पुरः सत्यं च कुर्विति ॥ ४४३
ओमित्युवाच राजेन्द्रः प्रसन्नवदनेक्षणः ।
कवचार्थी जनश्चाऽहमित्युवाचातिमायया ॥ ४४४
तच्छ्रुत्वा कवचं दिव्यं जग्राह हरिरेव च ।
शङ्खचूडस्य रूपेण जगाम तुलसीं प्रति ॥ ४४५
गत्वा तस्यां मायया च वीर्याधानं चकार च ।
अथ शम्भुर्हरेः शूलं जग्राह दानवं प्रति ॥ ४४६
ग्रीष्ममध्याह्नमार्तण्डप्रलयाग्निशिखोपमम् ।
दुर्निवार्यं च दुर्धर्षमव्यर्थं वैरिघातकम् ॥ ४४७
तेजसा चक्रतुल्यं च सर्वशस्त्रास्त्रसारकम् ।
शिवकेशवयोरन्यदुर्वहं च भयङ्करम् ॥ ४४८
धनुःसहस्रं दैर्घ्येण प्रस्थेन शतहस्तकम् ।
सजीवं ब्रह्मरूपं च नित्यरूपमनिर्दिशम् ॥ ४४९

संहर्तुं सर्वब्रह्माण्डं अलं यत्स्वीयलीलया ।
चिक्षेप तोलनं कृत्वा शङ्खचूडे च नारद ॥ ४५०
राजा चापं परित्यज्य श्रीकृष्णचरणाम्बुजम् ।
ध्याने चकार भक्त्या च कृत्वा योगासनं धिया ॥ ४५१
शूलं च भ्रमणं कृत्वा पपात दानवोपरि ।
चकार भस्मसात्तं च सरथं चाऽथ लीलया ॥ ४५२
राजा धृत्वा दिव्यरूपं किशोरं गोपवेषकम् ।
द्विभुजं मुरलीहस्तं रत्नभूषणभूषितम् ॥ ४५३
रत्नेन्द्रसारनिर्माणं वेष्टितं गोपकोटिभिः ।
गोलोकादागतं यानं आरुरोह पुरं ययौ ॥ ४५४
गत्वा ननाम शिरसा स राधाकृष्णयोर्मुने ।
भक्त्या च चरणाम्भोजं रासे बृन्दावने वने ॥ ४५५
सुदामानं च तौ दृष्ट्वा प्रसन्नवदनेक्षणौ ।
क्रोडे चक्रतुरत्यन्तं प्रेम्णातिपरिसंयुतौ ॥ ४५६
अथ शूलं च वेगेन प्रययौ तं च सादरम् ।
अस्थिभिः शङ्खचूडस्य शङ्खजातिर्बभूव ह ॥ ४५७
नानाप्रकाररूपेण शश्वत् पूता सुरार्चने ।
प्रशस्तं शङ्खतोयं च देवानां प्रीतिदं परम् ॥ ४५८
तीर्थतोयस्वरूपं च पवित्रं शम्भुना विना ।
शङ्खशब्दो भवेद्यत्र तत्र लक्ष्मीः सुसंस्थिरा ॥ ४५९

स स्नातः सर्वतीर्थेषु यःस्नातः शङ्खवारिणा ।
शङ्खो हरेरधिष्ठानं यत्र शङ्खस्ततो हरिः ॥ ४६०
तत्रैव वसते लक्ष्मीर्दूरीभूतममङ्गलम् ।
शिवोऽपि दानवं हत्वा शिवलोकं जगाम ह ॥ ४६१
प्रहृष्टो वृषभारूढः स्वगणैश्च समावृतः ।
सुराः स्वविषयं प्रापुः परमानन्दसंयुताः ॥ ४६२
नेदुर्दुन्दुभयः स्वर्गे जगुर्गन्धर्वकिन्नराः ।
बभूव पुष्पवृष्टिश्च शिवस्योपरि सन्ततम् ॥ ५६३
प्रशशंसुःसुरास्तं च मुनीन्द्रप्रवरादयः ।
नारायणश्च भगवान् देवानां साधनेषु च ॥ ४६४
शङ्खचूडस्य कवचं गृहीत्वा विष्णुमायया ।
पुनर्विधाय तद्रूपं जगाम तत्सतीगृहम् ॥ ४६५
पातिव्रत्यस्य नाशेन शङ्खचूडजिघांसया ।
दुन्दुभिं वादयामास तुलसीद्वारसन्निधौ ॥ ४६६
जयशब्दं च तद्वारे बोधयामास सुन्दरीम् ।
तच्छ्रुत्वा च रवं साध्वी परमानन्दसंयुता ॥ ४६७
राजमार्गं गवाक्षेण ददर्श परमादरात् ।
ब्राह्मणेभ्यो धनं दत्वा कारयामास मङ्गलम् ॥ ४६८
वन्दिभ्यो भिक्षुकेभ्यश्च वाचिभ्यश्च धनं ददौ ।
अवरुह्य रथाद्देवो देव्याश्च भवनं ययौ ॥ ४६९

अमूल्यरत्ननिर्माणसुन्दरं सुमनोहरम् ।
दृष्ट्वा च पुरतः कान्तं सा तं कान्तं मुदान्विता ॥ ४७०
तत्पादं क्षालयामास ननाम च रुरोद च ।
रत्नसिंहासने रम्ये वासयामास कामुकी ॥ ४७१
ताम्बूलं च ददौ तस्मै कर्पूरादिसुवासितम् ।
अद्य मे सफलं जन्म जीवनं च बभूव ह ॥ ४७२
रणे गतं च प्राणेशं पश्यन्त्याश्च पुनर्गृहे ।
सस्मिता सकटाक्षं च सकामा पुलकाङ्किता ॥ ४७३
पप्रच्छ रणवृत्तान्तं कान्तं मधुरया गिरा ।
असंख्यविश्वसंहत्रा सार्धमाजौ तव प्रभो ॥ ४७४
कथं बभूव विजयस्तन्मे ब्रूहि कृपानिधे ।
तुलसीवचनं श्रुत्वा प्रहस्य कमलापतिः ॥ ४७५
शङ्खचूडस्य रूपेण तामुवाचाऽमृतं वचः ।
आवयोः समरः कान्ते पूर्णमब्दं बभूव ह ॥ ४७६
नाशो बभूव सर्वेषां दानवानां च कामिनी ।
प्रीतिं च कारयामास ब्रह्मा च स्वयमावयोः ॥ ४७७
देवानामधिकारश्च प्रदत्तो ब्रह्मणोऽज्ञया ।
मया गतं स्वभवनं शिवलोकं शिवो गतः ॥ ४७८
इत्युक्त्वा जगतां नाथः शयनं च चकार ह ।
रेमे रमापतिस्तत्र रामया सह नारद ॥ ४७९

सा साध्वी सुखसम्भोगादाकर्षणव्यतिक्रमात् ।
सर्वं वितर्कयामास कस्त्वमेवेत्युवाच सा ॥ ४८०

को वा त्वं वद मायेश भुक्ताहं मायया त्वया ।
दूरीकृतं मत्सतीत्वं यदतस्त्वां शपामि हे ॥ ४८१

तुलसीवचनं श्रुत्वा हरिःशापभयेन च ।
दधार लीलया ब्रह्मन् सुमूर्तिं प्रुमनोहराम् ॥ ४८२

ददर्श पुरतो देवी देवदेवं सनातनम् ।
नवीननीरदश्यामं शरत्पङ्कजलोचनम् ॥ ४८३

कोटिकन्दर्पलीलाभं रत्नभूषणभूषितम् ।
ईषद्धास्यं प्रसन्नास्यं शोभितं पीतवाससम् ॥ ४८४

तं दृष्ट्वा कामिनी कामं मूर्च्छां संप्राप लीलया ।
पुनश्च चेतनां प्राप्य पुनः सा तमुवाच ह ॥ ४८५

तुलस्युवाच—

हे नाथ ते दया नास्ति पाषाणसदृशस्य च ।
छलेन धर्मभङ्गेन मम स्वामी त्वया हतः ॥ ४८६

पाषाणहृदयस्त्वं हि दयाहीनो यतः प्रभो ।
तस्मात्पाषाणरूपस्त्वं भवेदेव भवाधुना ॥ ४८७

ये वदन्ति च साधुं त्वां ते भ्रान्ता हि न संशयः ।
भक्तो विनापराधेन परार्थे च कथं हतः ॥ ४८८

भृशं रुरोद शोकार्ता विललाप मुहुर्मुहुः ।

ततश्च करुणां दृष्ट्वा करुणारससागरः ॥ ४८९
नयेन तां बोधयितुं उवाच कमलापतिः ।

श्री भगवानुवाच—

तपस्त्वया कृतं भद्रे मदर्थे भारते चिरम् ॥ ४९०
त्वदर्थे शङ्खचूडश्च चकार सुचिरं तपः ।
कृत्वा त्वां कामिनीं सोपि विजहार च तत्क्षणात् ।
अधुना दातुमुचितं तवैव तपसः फलम् ॥ ४९१
इदं शरीरं त्यक्त्वा च दिव्यदेहं विधाय च ।
रामे रम मया सार्धं त्वं रमासदृशी भव ॥ ४९२
इयं तनुर्नदीरूपा गण्डकीति च विश्रुता ।
पूता सुपुण्यदा नृणां पुण्ये भवतु भारते ॥ ४९३
तव केशसमूहश्च पुण्यवृक्षो भविष्यति ।
तुलसीकेशसम्भूता तुलसीति च विश्रुता ॥ ४९४
त्रिषु लोकेषु पुष्पाणां पत्राणां देवपूजने ।
प्रधानरूपा तुलसी भविष्यति वरानने ॥ ४९५
स्वर्गे मर्त्यें च पाताले गोलोके मम सन्निधौ ।
भव त्वं तुलसीवृक्षवरा पुष्पेषु सुन्दरी ॥ ४९६
गोलोके विरजातीरे रासे बृन्दावने बने ।
भाण्डीरे चम्पकवने रम्ये चन्दनकानने ॥ ४९७
माधवीकेतकीकुन्दमालिकामालतीवने ।

वासस्तेऽत्रैव भवतु पुण्यस्थानेषु पुण्यदः ॥ ४९८
तुलसीतरुमूलेषु पुण्यदेशेषु पुण्यदम् ।
अधिष्ठानं च तीर्थानां सर्वेषां च भविष्यति ॥ ४९९
तत्रैव सर्वदेवानां ममाधिष्ठानमेव च ।
तुलसीपत्रपतनप्राप्तये च वरानने ॥ ५००
स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ।
तुलसीपत्रतोयेन योऽभिषेकं समाचरेत् ॥ ५०१
सुधाघटसहस्राणां या तुष्टिस्तु भवेद्धरेः ।
सा च तुष्टिर्भवेन्नूनं तुलसीपत्रदानतः ॥ ५०२
गवामयुतदानेन यत्फलं तत्फलं भवेत् ।
तुलसीपत्रदानेन तत्फलं कार्तिके सती ॥ ५०३
तुलसीपत्रतोयं च मृत्युकाले च यो लभेत् ।
मुच्यते सर्वपापेभ्यो विष्णुलोके महीयते ॥ ५०४
नित्यं यस्तुलसीतोयं भुंक्ते भक्त्या च मानवः ।
लक्षाश्वमेधजं पुण्यं सम्प्राप्नोति स मानवः ॥ ५०५
तुलसीं स्वकरे कृत्वा धृत्वा देहे च मानवः ।
प्राणांस्त्यजति तीर्थेषु विष्णुलोकं स गच्छति ॥ ५०६
तुलसीकाष्ठनिर्माणमालां गृह्णाति यो नरः ।
पदेऽपदेऽश्वमेधस्य लभते निश्चितं फलम् ॥ ५०७
तुलसीं स्वकरे कृत्वा स्वीकारं यो न रक्षति ।

स याति कालसूत्रं च यावच्चन्द्रदिवाकरौ ॥ ५०८
करोति मिथ्याशपथं तुलस्यां योऽत्र मानवः ।
स याति कुम्भीपाकं च यावदिन्द्राश्चतुर्दश ॥ ५०९
तुलसीतोयकणिकां मृत्युं काले च यो लभेत् ।
रत्नयानं समारुह्य वैकुण्ठे प्राप्यते ध्रुवम् ॥ ५१०
पूर्णिमायाममायां च द्वादश्यां रविसंक्रमे ।
तैलाभ्यङ्गं च कृत्वा च मध्याह्ने निशिसन्ध्ययोः ॥
आशौचेऽशुचिकाले ये रात्रिवासोन्विता नराः ।
तुलसीं ये विचिन्वन्ति ते छिन्दन्ति हरेः शिरः ॥
त्रिरात्रं तुलसीपत्रं शुद्धं पर्युषितं सति ।
श्राद्धे व्रते च दाने च प्रतिष्ठायां सुरार्चने ॥ ५१३
भूगतं तोयपतितं यद्दत्तं विष्णवे सति ।
शुद्धं च तुलसीपत्रं क्षालनादन्यकर्मणि ॥ ५१४
वृक्षाधिष्ठातृदेवी या गोलोके च निरामये ।
कृष्णेन सार्धं नित्यं च नित्यं क्रीडां करिष्यसि ॥
नद्यधिष्ठातृदेवी या भारते च सुपुण्यदा ।
लवणादस्य सा पत्नी मदंशस्य भविष्यति ॥ ५१६
त्वं च स्वयं महासाध्वी वैकुण्ठे मम सन्निधौ ।
रमासमा च रामा च भविष्यसि न संशयः ॥ ५१७
अहं च शैलरूपेण गण्डकीतीरसन्निधौ ।

अधिष्ठानं करिष्यामि भारते तव शापतः ॥ ५१८
कोटिसंख्यास्तत्र कीटास्तीक्ष्णदंष्ट्रा वरायुधैः ।
तच्छिलाकुहरे चक्रं करिष्यन्ति मदीयकम् ॥ ५१९
एकद्वारं चतुश्चक्रं वनमालाविभूषितम् ।
नवीननीरदाकारं लक्ष्मीनारायणाभिधम् ॥ ५२०
एकद्वारं चतुश्चक्रं नवीननीरदोपमम् ।
लक्ष्मीजनार्दनो ज्ञेयो रहितो वनमालया ॥ ५२१
द्वारद्वये चतुश्चक्रं गोष्पदेन विराजितम् ।
रघुनाथाभिधं ज्ञेयं रहितं वनमालया ॥ ५२२
अतिक्षुद्रं द्विचक्रं च नवीनजलदप्रभम् ।
तद्वामनाभिधं ज्ञेयं रहितं वनमालया ॥ ५२३
अतिक्षुद्रं द्विचक्रं च वनमालाविभूषितम् ॥
विज्ञेयं श्रीधरं रूपं श्रीप्रदं गृहिणां सदा ॥ ५२४
स्थूलं च वर्तुलाकारं रहितं वनमालया ।
द्विचक्रं स्फुटमत्यन्तं ज्ञेयं दामोदराभिधम् ॥ ५२५
मध्यमं वर्तुलाकारं द्विचक्रं बाणविक्षतम् ।
रणरामाभिधं ज्ञेयं शरतूणसमन्वितम् ॥ ५२६
मध्यमं सप्तचक्रं च छत्रभूषणभूषितम् ।
राजराजेश्वरं ज्ञेयं राजसम्पत्प्रदं नृणाम् ॥ ५२७
द्विसप्तचक्रस्थूलं च नवनीरदसुप्रभम् ।

अनन्ताख्यं च विज्ञेयं चतुर्वर्गफलप्रदम् ॥ ५२८
चक्राकारं द्विचक्रं च सश्रीकं जलदप्रभम् ।
स गोष्पदं मध्यमं च विज्ञेयं मधुसूदनन् ॥ ५२९
सुदर्शनं चैकचक्रं गुप्तचक्रं गदाधरम् ।
द्विचक्रं हयवक्त्राभं हयग्रीवं प्रकीर्तितम् ॥ ५३०
अतीतविस्तृतास्यं च द्विचक्रं विकटं सति ।
नरसिंहं सुविज्ञेयं सद्यो वैराग्यदं नृणाम् ॥ ५३१
द्विचक्रं विस्तृतास्यं वनमालासमन्वितम् ।
लक्ष्मीनृसिंहं विज्ञेयं गृहिणां च सुखप्रदम् ॥ ५३२
द्वारदेशे द्विचक्रं च सश्रीकं च समं स्फुटम् ।
वासुदेवं तु विज्ञेयं सर्वकामफलप्रदम् ॥ ५३३
प्रद्युम्नं सूक्ष्मचक्रं च नवीननीरदप्रभम् ।
सुषिरच्छिद्रबहुलं गृहिणां च सुखप्रदम् ॥ ५३४
द्वे चक्रे चैकलग्ने च पृष्ठं यत्र तु पुष्कलम् ।
सङ्कर्षणं सुविज्ञेयं सुखदं गृहिणां सदा ॥ ५३५
अनिरुद्धं तु पीताभं वर्तुलं चातिशोभनम् ।
सुखप्रदं गृहस्थानां प्रवदन्ति मनीषिणः ॥ ५३६
शालग्रामशिला यत्र तत्र सन्निहितो हरिः ।
तत्रैव लक्ष्मीर्वसति सर्वतीर्थसमन्विता ॥ ५३७
यानि कानि च पापानि ब्रह्महत्यादिकानि च ।

तानि सर्वाणि नश्यन्ति शालग्रामशिलार्चनात् ॥ ५३८
छत्राकारे भवेद्राज्यं वर्तुले च महाश्रियः ।
दुःखं च शकटाकारे शूलाग्रे मरणं ध्रुवम् ॥ ५३९
विकृतास्ये च दारिद्र्यं पिङ्गले हानिरेव च ।
भग्नचक्रे भवेद्व्याधिर्विदीर्णे मरणं ध्रुवम् ॥ ५४०
व्रतं दानं प्रतिष्ठा च श्राद्धं च देवपूजनम् ।
शालग्रामस्य सान्निध्यात्प्रशस्तं तद्भवेदिति ॥ ५४१
स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ।
सर्वयज्ञेषु तीर्थेषु व्रतेषु च तपःसु च ॥ ५४२
पाठे चतुर्णां वेदानां तपसां करणे सति ।
तत्पुण्यं लभते नूनं शालग्रामशिलार्चनात् ॥ ५४३
शालग्रामशिलातोये योऽभिषेकं सदा चरेत् ।
सर्वदानेषु यत्पुण्यं प्रदक्षिणं भुवो यथा ॥ ५४४
शालग्रामशिलातोयं नित्यं भुंक्ते च यो नरः ।
सुरेप्सितं प्रसादं च लभते नात्र संशयः ॥ ५४५
तस्य स्पर्शं च वाञ्छन्ति तीर्थानि निखिलानि च ।
जीवन्मुक्तो महापूतोऽप्यन्ते याति हरेः पदम् ॥ ५४६
तत्रैव हरिणा सार्धं असंख्यं प्राकृतं लयम् ।
यास्यत्येव हि दास्ये च नियुक्तो दास्यकर्मणि ॥ ५४७
यानि कानि च पापानि ब्रह्महत्यासमानि च ।

तं दृष्ट्वा च पलायन्ते वैनतेयादिवोरगाः ॥ ५४८
तत्पादरजसा देवी सद्यः पूता वसुन्धरा ।
पुंसां लक्षं तत्पितॄणां निस्तरेत्तस्य जन्मतः ॥ ५४९
शालग्रामशिलातोयं मृत्युकाले च यो लभेत् ।
सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥ ५५०
निर्वाणमुक्तिं लभते कर्मभोगात्प्रमुच्यते ।
विष्णोः पदे प्रलीनश्च भविष्यति न संशयः ॥ ५५१
शालग्रामशिलां धृत्वा मिथ्यावाक्यं वदेत्तु यः ।
स याति कुम्भीपाके च यावद्वै ब्रह्मणो वयः ॥ ५५२
शालग्रामशिलां धृत्वा स्वीकारं यो न पालयेत् ।
स प्रयात्यसिपत्रं च लक्षमन्वन्तरावधि ॥ ५५३
तुलसीपत्रविच्छेदं शालग्रामे करोति यः ।
तस्य जन्मान्तरे कान्ते स्त्रीविच्छेदो भविष्यति ॥ ५५४
तुलसीपत्रविच्छेदं शङ्खे यो हि करोति च ।
भार्याहीनो भवेत्सोपि रोगी च सप्तजन्मसु ॥ ५५५
शालग्रामं च तुलसीं शङ्खं चैकत्र एव च ।
यो रक्षति महाज्ञानी स भवेच्छ्रीहरेः प्रियः ॥ ५५६
सकृदेव हि यो यस्यां वीर्याधानं करोति च ।
तद्विच्छेदे तस्य दुःखं भवेदेव परस्परम् ॥ ५५७
त्वं प्रिया शङ्खचूडस्य चैकमन्वन्तरावधि ।

शङ्खेन सार्धं त्वद्भेदः केवलं दुःखदस्तथा ॥ ५५८

इत्युक्त्वा श्रीहरिस्तां च विरराम च नारद ।
सा च देहं परित्यज्य दिव्यरूपं विधाय च ॥ ५५९

यथा श्रीश्च तथा सा चाऽप्युवास हरिवक्षसि ।
स जगाम तया सार्धं वैकुण्ठं कमलापतिः ॥ ५६०

लक्ष्मीः सरस्वती गङ्गा तुलसी चापि नारद ।
हरेः प्रियाश्चतस्रश्च बभूवुरीश्वरस्य च ॥ ५६१

इति श्रीमद्भागवतात् नवमस्कन्धात् उद्धृतम्

तुलसीकल्याणं सम्पूर्णम् ॥

---

॥ श्रीः ॥

शुभं अस्तु

# ❋ श्री सीताकल्याणम् ❋

( श्रीमद्वाल्मीकिरामायणात् उद्धृतम् )

यस्मिंस्तु दिवसे राजा चक्रे गोदानमुत्तमम् ।
तस्मिंस्तु दिवसे शूरो युधाजित्समुपेयिवान् ॥ १

पुत्रः केकयराजस्य साक्षाद्भरतमातुलः ।
दृष्ट्वा पृष्ट्वा च कुशलं राजानमिदमब्रवीत् ॥ २

केकयाधिपती राजा स्नेहात्कुशलमब्रवीत् ।
येषां कुशलकामोऽसि तेषां संप्रत्यनामयम् ॥ ३

स्वस्रीयं मम राजेन्द्र द्रष्टुकामो महीपतिः ।
तदर्थमुपयातोऽहमयोध्यां रघुनन्दन ॥ ४

श्रुत्वात्वहमयोध्यायां विवाहार्थं तवात्मजान् ।
मिथिलामुपयातांस्तु त्वया सह महीपते ॥ ५

त्वरयाऽभ्युपयातोऽहं द्रष्टुकामः स्वसुः सुतम् ।
तस्य त्वं राजशार्दूल प्रीतिं कर्तुमिहार्हसि ॥ ६

तस्य तद्वचनं श्रुत्वा मधुरं मधुराक्षरम् ।
अथ राजा दशरथः प्रियातिथिमुपस्थितम् ॥ ७

दृष्ट्वा परमसत्कारैः पूजनार्हमपूजयत् ।
ततस्तामुषितो रात्रिं सह पुत्रैर्महात्मभिः ॥ ८

प्रभाते पुनरुत्थाय कृत्वा कर्माणि तत्ववित् ।
ऋषींस्तदा पुरस्कृत्य यज्ञवाटमुपागमत् ॥ ९

युक्ते मुहूर्ते विजये सर्वाभरणभूषितः ।
भ्रातृभिः सहितो रामः कृतकौतुकमङ्गलः ॥ १०

वसिष्ठं पुरतः कृत्वा महर्षीनपरानपि ।
पितुः समीपमाश्रित्य तस्थौ भ्रातृभिरावृतः ॥ ११

वसिष्ठो भगवानेत्य वैदेहमिदमब्रवीत् ।
राजा दशरथो राजन् कृतकौतुकमङ्गलैः ॥ १२

पुत्रैर्नरवरश्रेष्ठ दातारमभिकाङ्क्षते ।
दातृप्रतिगृहीतृभ्यां सर्वार्थाः प्रभवन्ति हि ॥ १३

स्वधर्मं प्रतिपद्यस्व कृत्वा वैवाह्यमुत्तमम् ।
इत्युक्तः परमोदारो वसिष्ठेन महात्मना ॥ १४

प्रत्युवाच महातेजाः वाक्यं परमधर्मवित् ।
कःस्थितः प्रतिहारो मे कस्याज्ञा संप्रतीक्षते ॥ १५

स्वगृहे को विचारोऽस्ति यथा राज्यमिदं तव ।
कृतकौतुकसर्वस्वाः वेदिमूलमुपागताः ॥ १६

मम कन्याः मुनिश्रेष्ठ दीप्ता वह्नेरिवार्चिषः ।
सज्जोऽहं त्वत्प्रतीक्षोऽस्मि वेद्यामस्यां प्रतिष्ठितः ॥ १७

अविघ्नं क्रियतां राजन् किमर्थमवलम्बसे ।
तद्वाक्यं जनकेनोक्तं श्रुत्वा दशरथस्तदा ॥ १८

प्रवेशयामास सुतान् सर्वानृषिगणानपि ।
ततो राजा विदेहानां वसिष्ठमिदमब्रवीत् ॥ १९

कारयस्व ऋषे सम्यक् ऋषिभिः सह धार्मिकैः ।
रामस्य लोकरामस्य क्रियां वैवाहिकीं प्रभो ॥ २०

त्वया न विदितं किञ्चिन्नास्ति ब्रह्मविदां वर ।
तस्मात्त्वमेव ब्रह्मर्षे अशेषं कर्तुमर्हसि ॥ २१

तथेत्युक्त्वा तु जनकं वसिष्ठो भगवानृषिः ।
विश्वामित्रं पुरस्कृत्य शतानन्दं च धार्मिकम् ॥ २२

प्रपामध्ये तु विधिवद्वेदिं कृत्वा महातपाः ।
अलञ्चकार तां वेदिं गन्धपुष्पैः समन्ततः ॥ २३

सुवर्णपालिकाभिश्च छिद्रकुम्भैश्च साङ्कुरैः ।
अङ्कुराढ्यैः शरावैश्च धूपपात्रैः सधूपकैः ॥ २४

शङ्खपात्रैः स्रुवैः स्रुग्भिः पात्रैरर्घ्याभिपूरितैः ।
लाजपूर्णैश्च पात्रीभिरक्षतैरभिसंस्कृतः ॥ २५

दर्भैः समैः समास्तीर्य विधिवन्मन्त्रपूर्वकम् ।
अग्निमाधाय वेद्यां तु विधिमन्त्रपुरस्कृतम् ॥ २६

जुहावाग्नौ महातेजाः वसिष्ठो भगवानृषिः ।
ततः सीतां समानीय सर्वाभरणभूषिताम् ॥ २७

श्रियं पद्मवियुक्तां वै केशवाङ्कच्युतामिव ।
विद्युत्प्रभां विशालाक्षीं नीलकुञ्चितमूर्धजाम् ॥ २८

परिणयविधौ भङ्क्त्वा अनङ्गद्विषो धनुरग्रतः
जनकसुतया दत्तां कण्ठे स्रजं हृदि धारयन् ।
कुसुमधनुषा पाशेनेव प्रसह्य वशीकृतः
अवनतवदनो रामः पायात् त्रपाविनयान्वितः ॥

शृङ्गारं क्षितिनन्दिनीविहरणे वीरं धनुर्भञ्जने
कारुण्यं बलिभोजनेऽद्भुतरसं सिन्धौ गिरिस्थापने ।
हास्यं शूर्पणखामुखे भयमघे बीभत्सं अन्यामुखे
रौद्रं रावणमर्दने मुनिजने शान्तं वपुः पातु माम् ॥

हंसाङ्कितेन क्षौमेण किंचित्पीतेन संवृताम् ।
वासितेनोत्तरीयेण सुरक्तेन सुसंवृताम् ॥ २९

समक्षमग्नेः संस्थाप्य राघवाभिमुखे तदा ।
अब्रवीज्जनको राजा कौसल्यानन्दवर्धनम् ॥ ३०

इयं सीता मम सुता सहधर्मचरी तव ।
प्रतीच्छ चैनां भद्रं ते पाणिं गृण्हीष्व पाणिना ॥ ३१

पतिव्रता महाभागा छायेवानुगता तव ।
इत्युक्त्वा प्राक्षिपद्राजा मन्त्रपूतं जलं तदा ॥ ३२

प्रक्षिप्ते सलिले भूमौ गगने चोत्थिताःस्वनाः ।
साधुसाध्विति देवानामृषीणां वदतां तदा ॥ ३३

देवदुन्दुभिनिर्घोषः पुष्पवृष्टिर्महत्यभूत् ।
एवं दत्वा तदा सीतां मन्त्रोदकपुरस्कृताम् ॥ ३४

अब्रवीज्जनको राजा हर्षेणाभिपरिप्लुतः ।
लक्ष्मणागच्छ भद्रं ते ऊर्मिलामुद्यतां मया ॥ ३५

प्रतीच्छ पाणिं गृण्हीष्व मा भूत्कालस्य पर्ययः ।
तमेवमुक्त्वा जनको भरतं चाभ्यभाषत ॥ ३६

गृहाण पाणिं माण्डव्याः पाणिना रघुनन्दन ।
शत्रुघ्नं चापि धर्मात्मा अब्रवीज्जनकेश्वरः ॥ ३७

श्रुतकीर्त्याः महाबाहो पाणिं गृण्हीष्व पाणिना ।
सर्वे भवन्तः सौम्याश्च सर्वे सुचरितव्रताः ॥ ३८

पत्नीभिः सन्तु काकुत्स्थाः मा भूत्कालस्य पर्ययः ।
जनकस्य वचः श्रुत्वा पाणीन्पाणिभिरस्पृशन् ॥ ३९

चत्वारस्ते चतसृणां वसिष्ठस्य मते स्थिताः ।
अग्निं प्रदक्षिणीकृत्य वेदिं राजानमेव च ॥ ४०

ऋषींश्चैव महात्मानः सभार्या रघुसत्तमाः ।
यथोक्तेन तदा चक्रुर्विवाहं विधिपूर्वकम् ॥ ४१

काकुत्स्थैश्च गृहीतेषु ललितेषु च पाणिषु ।
पुष्पवृष्टिर्महत्यासीदन्तरिक्षात्सुभास्वरा ॥ ४२

दिव्यदुन्दुभिनिर्घोषैः गीतवादित्रनिःस्वनैः ।
ननृतुश्चाप्सरःसङ्घा गन्धर्वाश्च जगुः कलम् ॥ ४३

विवाहे रघुमुख्यानां तदद्भुतमिवाभवत् ।
ईदृशे वर्तमाने तु तूर्योद्घुष्टनिनादिते ॥ ४४

त्रिरग्निं ते परिक्रम्य ऊहुर्भार्या महौजसः ।
अथोपकार्यां जग्मुस्ते सदारा रघुनन्दनाः ॥ ४५

स्वानि यानानि चारोप्य तां पुरीं प्रययुस्तदा ।
प्रीयमाणो दशरथः पुत्रान् पुत्रवतां वरः ।
राजाप्यनुययौ पश्यन्सर्षिसङ्घः सबान्धवः ॥ ४६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे
त्रिसप्ततितमः सर्गः ॥

सीताकल्याणं संपूर्णम्

---

॥ श्रीः ॥

शुभं अस्तु

# * श्री पद्मावतीकल्याणम् *

( श्री वेङ्कटाचलमाहात्म्यात् उद्धृतम् )

श्री वेङ्कटाद्रेः समायाता बकुलमालिका उवाच—

स्वामी नारायणोऽस्माकं आस्ते श्रीवेङ्कटाचले ।
कदाचित् हयमारुह्य हंसशुक्लं मनोजवम् ॥ १

मृगयार्थं गतो राजा वेङ्कटाद्रेः समीपतः ।
वनानि विचरन् काले शोभने कुसुमाकरे ॥ २

पश्यन् मृगान् गजान् सिम्हान् गवयान् शरभान् रुरून् ।
शुकान् पारावतान् हंसान् पत्रिणोऽन्यान् वनान्तरे ॥ ३

गजराजं तत्र कञ्चित् यूथपं मदवर्षिणम् ।
करेणुसहितं तुङ्गं अन्वगच्छत् सुरोत्तमः ॥ ४

चरन् वनात् वनं सुभ्रूः समासाद्यारणीं नदीम् ।
अवरुह्य हयात् तत्र विचचार तटे शुभे ॥ ५

वनान्तादागतो वायुः पद्मकल्हारशीतलः ।
श्रमापनयनो मन्दं सिषेवे पुरुषोत्तमम् ॥ ६

तरवः पुष्पवर्षाणि विकिरन्तः सिषेविरे ।
एवं स विचरन् देवः पुष्पभारानतान् तरून् ॥ ७

विचिन्वन् गजराजं तं पुष्पलावीर्ददर्श ह ।
कन्याः सुवेषा रुचिराः मेघेष्विव शतह्रदाः ॥ ८

तासां मध्यगतां तन्वीं ददर्शातिमनोहराम् ।
लक्ष्मीसमां हेमवर्णां तस्यां सक्तमना अभूत् ॥ ९

तां गृध्नुराह ताः कन्याः केयमित्येव पूरुषः ।
उक्तस्ताभिरियं कन्या वियद्राज्ञो महाबल ॥ १०

इदं श्रुत्वा वचस्तासां हयमारुह्य वेगवान् ।
आजगामाशु भगवान् स्वालयं रुचिरं गिरिम् ॥ ११

तत्र स्वालयमासाद्य स्वामिपुष्करिणीतटे ।
मामाहूयावदत् देवो हला वकुलमालिके ॥ १२

वियद्राजपुरं गत्वा प्रविश्यान्तःपुरं सखि ।
तत्पत्नीं धरणीं प्राप्य पृष्ट्वा कुशलमेव च ॥ १३

याचस्व तनयां तस्या रुचिरां कमलालयाम् ।
राज्ञोऽभिमतमाज्ञाय शीघ्रमागच्छ भामिनि ॥ १४

इत्थं देवेन च आज्ञप्ता देवि त्वद्गृहमागता ।
यथोचितं कुरुष्वेह राज्ञा मन्त्रियुतेन च ॥ १५

कन्यया च विचार्यैव प्रोच्यतामुत्तरं वचः ।
अथ तस्याः वचः श्रुत्वा प्रीता राज्ञी बभूव ह ॥ १६

आहूय आकाशराजं तं उपेत्य कमलालयम् ।
मन्त्रिमध्येऽवदत् देवी वचनं बकुलस्रजः ॥ १७

श्रुत्वा प्रीतोऽवदत् राजा मन्त्रिणस्सपुरोहितान् ।
कन्या तु अयोनिजा दिव्या सुभगा कमलालया ।

अर्थिता देवदेवेन वेङ्कटाद्रिनिवासिना ॥ १८

पूर्णो मनोरथो मेऽद्य ब्रूत किं संमतं तु वः ।
श्रुत्वा मन्त्रिगणास्सर्वे राज्ञो वचनमुत्तमम् ॥ १९

प्रोचुः सुप्रीतमनसो वियद्राजं महीपतिम् ।
वयं कृतार्था राजेन्द्र कुलं सर्वोन्नतं भवेत् ॥ २०

भवत्कन्येयमतुला श्रिया सह रमिष्यति ।
दीयतां देवदेवाय शार्ङ्गिणे परमात्मने ॥ २१

अयं वसन्तः श्रीमांश्च शुभं शीघ्रं विधीयताम् ।
आहूय धिषणं लग्नं विवाहार्थं विधीयताम् ॥ २२

तथास्तु इत्याह्वयामास सुरलोकात् बृहस्पतिम् ।
पप्रच्छ कन्यावरयोः विवाहार्थं नरेश्वरः ॥ २३

कन्यायाः जन्मनक्षत्रं मृगशीर्षमिति स्मृतम् ।
देवस्य श्रवणर्क्षन्तु तयोर्योगो विधीयताम् ॥ २४

श्रुत्वाब्रवीत् स धिषणः तयोरुत्तरफल्गुनी ।
समन्तात् सुखवृध्यर्थं प्रोच्यते दैवचिन्तकैः ॥ २५

तयोरुत्तरफल्गुन्यां विवाहः क्रियतामिति ।
वैशाखमासे विधिवत् क्रियतामिति सोऽब्रवीत् ॥ २६

विलिख्य पत्रिकां राजन् श्रीनिवासाय विष्णवे ।
विप्रं प्रेषय राजेन्द्र तस्यागमनकारणात् ॥ २७

स्वगुरोर्वाक्यमाकर्ण्य राजा गुरुमभाषत ।

किं लेख्यं प्राकृतैः विद्वन् अप्राकृतशरीरिणः ।
तथापि लेखनीयं यत् तत् ब्रूहि गुरुसत्तम ॥ २८

आकाशराजवचनं श्रुत्वा गीष्पतिरादरात् ।
लिखित्वा बोधयामास राज्ञस्तस्य महात्मनः ॥ २९

गुरूपदिष्टमार्गेण विलिलेख स पत्रिकाम् ।
अप्राकृताय नित्याय सच्चिदानन्दमूर्तये ॥ ३०

स्वतन्त्रायाद्वितीयाय अनन्तरूपाय शार्ङ्गिणे ।
भक्तप्रियाय भक्त्येकवेद्योपादेयरूपिणे ॥ ३१

देवादिदेवपूज्याय ब्रह्मपूज्याय विष्णवे ।
श्रीनिवासाय कृष्णाय वेङ्कटाचलवासिने ॥ ३२

साङ्गैस्सर्वैश्च वेदाद्यैः आगमैः सपुराणकैः ।
आवेदितानन्तगुणकर्मणे श्रीधराय ते ॥ ३३

आशीर्वादं करिष्यामि बन्धुत्वात् ते सुरोत्तम ।
त्वत्पादपद्मसंवीक्षाकाम आकाशनामकः ॥ ३४

त्वदाश्रयं समाकांक्षन् लेखयाम्यद्य माधव ।
स्त्रीपुत्रभ्रातृभिस्साकं सर्वे कुशलिनो वयम् ॥ ३५

त्वदनुग्रहमात्रेण वसामोऽत्र हरे पुरे ।
सर्वेषां भवतां क्षेमं पत्रद्वारा निबोधय ॥ ३६

चैत्रशुक्लत्रयोदश्यां एतत्पत्रं विलिख्यते ।
कन्यां पद्मावतीं तुभ्यं ददामीति मतिर्मम ॥ ३७

तामङ्गीकुरु गोविन्द विवाहविधिपूर्वकम् ।
शुको वेत्ति गुरुर्वेत्ति हृदयं मम सर्वतः ॥ ३८

मा कुरुष्वात्र सन्देहं कन्यार्थं पुरुषोत्तम ।
वैशाखशुक्लदशमीभृगुवारे शुभे दिने ॥ ३९

बन्धुभिस्सह सम्प्राप्य मामुद्धृत्य गणैस्सह ।
हर्षेण पाणिग्रहणं कर्तव्यं मे मनोगतम् ॥ ४०

अधिकं लेखनीयं ते किमस्ति पुरुषोत्तम ।
शुको वदति यत्सर्वं तत्सत्यं कुरु केशव ॥ ४१

इत्याशिषस्सन्तु महानुभाव ते
समस्तकल्याणगुणार्णव प्रभो ।
नित्याय सत्याय सुखस्वरूपिणे
समस्तलोकप्रभवे महात्मने ४२

इत्थं लिखित्वा वरपत्रिकां शुभां
आकाशराजो जगदीशसन्निधौ ।
सम्प्रेषयामास शुकं महान्तं
सपुत्रमित्रः सहबान्धवानुगः ॥ ४३

क्रोशमात्रमुपागम्य शुकं वचनमब्रवीत् ।
येन केन प्रकारेण तस्य चित्तं वशीकुरु ॥ ४४

अयुतं स्वर्णलक्षं वा कोटिमर्बुदमेव वा ।
दास्यामि द्रव्यनिचयं नात्र कार्या विचारणा ।

एवमुक्तो महीदेवो गतः शेषाचलं प्रति ॥ ४५

मध्यं गते दीप्तकरे महात्मा
समागतस्तत्र शुकस्सशिष्यः ।
हरेर्जनन्याऽनुगतो विरागी
तद्दर्शनाह्लादगताध्वखेदः ॥ ४६

श्रीशुक उवाच—

राजराजेन लिखिता पत्रिका पुरुषोत्तम ।
प्रोक्तं तव महाभाग पूर्वमेवास्य कारणम् ।
इत्युक्तस्सन् रमाकान्तः पत्रिकां शिरसा दधौ ॥ ४७

श्रीनिवास उवाच—

कुशली वर्तते राजा भार्या तस्य पतिव्रता ।
भ्राता तस्य महाभागः पुत्रस्तस्य विशाम्यतेः ॥ ४८

शुक उवाचा—

सर्वं तु कुशलं तस्य भगवन् भूतभावन ।
एवमुक्तः पपाठाथ पत्रिकां पुरुषोत्तमः ।
पठन् हृष्टमना भूत्वा वाचमूचे रमापतिः ॥ ४९

श्रीनिवास उवाच—

पत्रिका लिख्यते विप्र मया आकाशनृपाय च ।
त्वद्वाचमनुसृत्यैव राज्ञः प्रीतिविधायिका ॥ ५०

ततः स पत्रं पुरुहूतमित्रं
स्वयं लिलेखाथ महार्थसंयुतम् ।

अत्यन्तहृष्टमनःप्रसूचकं
कृष्णावतारे प्रति रुक्मिणीमिव ॥ ५१

राजाधिराजपूज्याय सुधर्मतनयाय च ।
नमो नमोऽति भक्त्यैव कृत्वेयं पत्रिकाधुना ॥ ५२
लिख्यते श्रीनिवासेन शुभविज्ञप्तिगर्भिणी ।
श्रीमद्राजाधिराजेन्द्र किरीटाकृष्टपादुक ॥ ५३
अस्मद्बन्धुवरेण्याद्य गुणपूर्णसमृद्धिमन् ।
सुधर्मतनयाकाशनाम्नाशासु सुकीर्तिमन् ॥ ५४
नमो नमोऽस्तु ते राजन् श्रीनिवासस्य शार्ङ्गिणः ।
श्रीनिवासेन बालेन विज्ञप्तिः क्रियते त्वियम् ॥ ५५
भवद्भिर्लिखितं दृष्ट्वा सन्तोषो हि अभवन्मम ।
वैशाखशुद्धदशमीभृगुवारे महोत्सवे ॥ ५६
अङ्गीकरोमि राजेन्द्र कन्यां तव विशाम्पते ।
यथा पुरा सागरो मे कन्यादानं सुकीर्तिमान् ॥ ५७
तथा दत्वा तु मे कन्यां भवेः त्वं बहुकीर्तिमान् ।
यथा वै सागरान् पूर्वान् कपिलेन निपातितान् ॥५८
भगीरथो महाराजो गङ्गामादाय वै पुरा ।
उद्धृत्य कीर्तिमापेदे तथा त्वं राजसत्तम ॥ ५९
दत्वा मे सुभगां कन्यां तव पूर्वोत्तरं कुलम् ।
उद्धृत्य वहुलां कीर्तिं लभस्वेतरदुर्लभाम् ॥ ६०

लिखितव्यं विशेषेण किन्तेऽस्ति नृपसत्तम ।
विशेषज्ञोऽसि धर्मात्मा वेत्ति सर्वं शुको मुनिः ।
इति विज्ञापनं ज्ञेयं मम प्रणतिपूर्वकम् ॥ ६१

इत्थं लिखित्वा वरपत्रिकां शुभां
शेषाद्रिनाथो मुनिना शुकेन ।
संप्रेषयामास सुरेन्द्रपूज्यं
पुरं नृपेन्द्रस्य वियन्नृपस्य ॥ ६२

आहूय विश्वकर्माणं पुरालङ्कारकर्मणि ।
नियोजयामास सोऽपि निर्ममे निमिषान्तरात् ॥ ६३
इन्द्रोऽसृजत् पुष्पवृष्टिं ननृतुश्चाप्सरोगणाः ।
धनदो धनधान्याद्यैः पूरयामास वेश्म तत् ॥ ६४
यमस्तु रोगरहितान् चकार मनुजान् भुवि ।
वरुणो रत्नजालानि मौक्तिकादीन्यपूरयत् ॥ ६५
विस्तार्य नगरं राज्ञः परितो बहुयोजनम् ।
सञ्छिद्य च महाराजः वनानि गिरिगह्वरान् ॥ ६६
विषमां च समां चक्रे धरां तां धरणीपते ।
गृहाणि च विचित्राणि सभाश्च पटमण्डपान् ॥ ६७

कल्याणवेदीं स ददर्श रत्न-
सम्पूर्ण कक्षैः सुकृतां विचित्राम् ।
स्तम्भैर्युतां मौक्तिकरत्ननिर्मितैः
नारायणस्येव नृपेण निर्मिताम् ॥ ६८

वासुदेवस्य भवनं वासवो विश्वकर्मणा ।
कारयामास राजेन्द्र सरत्नस्तम्भगोपुरम् ॥ ६९
धनधान्यसमाकीर्णं रत्नतोरणमण्डितम् ।
वापीकूपशतं वाजिगजानां भवनं तथा ॥ ७०
वसिष्ठञ्च महाभागं पौरोहित्ये न्ययोजयत् ।
यजुश्शाखामहामन्त्रैः कर्तव्यं स्वस्तिवाचनम् ॥ ७१
सर्वेषामपि देवानां यजमानो भवानिति ।
देवानां च ऋषीणाञ्च मानने शङ्करं न्यधात् ।
देवाह्वाने कुमारं तु प्रत्युत्थाने च मन्मथम् ॥ ७२
दत्वा तेषां वीटिकां तु कृष्णवर्त्मानं आह्वयत् ।
गृहाण त्वं वीटिकाञ्च पाकार्थं हव्यवाहन ॥ ७३
ऋषीणां सर्वदेवानां तव पाकस्तु सम्मतः ।
तस्मात् पाकं कुरुष्व त्वं स्वधास्वाहासमन्वितः ॥ ७४
ततः स प्राह वरुणं जलार्थं सर्वदेहिनाम् ।
दुष्टानां दण्डने राजन् शिष्टानां परिपालने ।
यमं स कल्पयामास सुगन्धे वायुमादिशत् ॥ ७५
धनदाने ब्रह्मणार्थे वस्त्रालङ्कारदापने ।
कुबेरं योजयामास भगवान् नृपसत्तम ॥ ७६
प्रदीपधारणे राजन् निशाकरमयोजयत् ।
वसून् सन्देशयामास भाण्डानां शुद्धिकारणात् ।

ग्रहांश्च द्रोणपात्रेषु न्ययोजयत् अरिन्दमा ॥ ७७
एवं संशासिताः सर्वे पुराणपुरुषेण च ।
आज्ञामादाय तेऽभूवन् सर्वे स्वस्थाः स्वकर्मसु ॥ ७८
नीलकण्ठोऽब्रवीत् वाक्यं पितरं स्वपितुस्ततः ।
श्रोतव्यं वचनं तात मम बालस्य माधव ॥ ७९
विवाहकरणे चैव तथा भवनकर्मणि ।
प्रारब्धस्यान्तपर्यन्तं यो हि यत्नं समाचरेत् ॥ ८०
स एव पुण्यवान् लोके कीर्तिमेति न संशयः ।
सम्पाद्याः सर्वसम्भाराः शुभकार्येषु पुष्कलाः ।
बहुलार्थव्ययेनापि तदभावे ऋणं चरेत् ॥ ८१
स शम्भुवचनं श्रुत्वा शम्बरारिपिताऽब्रवीत् ।
सभायां किमिदं प्रोक्तं पौरुषेण वचः शिव ॥ ८२
को वाद्य ऋणदातास्ति विवाहस्यास्य पुष्कलम् ।
पुरुषः पौरुषं यत्नमाचरेत् नैव भाषयेत् ॥ ८३
एवमुक्त्वा शिवं प्राह कुबेरं पुरुषोत्तमः ।
साधयस्व महाभाग कल्याणं मे कलौ युगे ॥ ८४
दत्वा धनं यावदिष्टं पुत्रस्य नरवाहन ।
वासुदेववचः श्रुत्वा वसुपालोऽब्रवीत् हरिम् ॥ ८५
त्वदधीनं देव सर्वं जगदेतत् चराचरम् ।
बहूनां जीवराशीनां मध्ये कोऽहं जगत्पते ॥ ८६

नियोजितेन भवता रक्षितं त्वद्धनं मया ।
तद्दानादानयोः शक्तिः मम नास्ति खगध्वज ॥ ८७
ग्रहीता त्वं च दाता च स्वतन्त्रोऽतस्त्वमेव हि ।
ब्रुवत्येवं धनपतौ श्रीपतिर्वाक्यमब्रवीत् ॥ ८८
एकस्मिन् ब्रह्मदिवसे तु अवतारा दश स्मृताः ।
ममावतारसमये नानयामि धनं गृहात् ॥ ८९
भूगतं च धनं राजन् नैव नेष्यामि मद्गृहम् ।
यथायुगं यथाकालं यथादेशं यथावयः ॥ ९०
अवतारमहं कुर्वन् रमेऽत्र रमया सह ।
निमित्तमात्रमपि मे धनं त्वं धनदोऽधुना ॥ ९१
युगानुसारिणे देहि देशकालानुसारतः ।
स तस्य वचनं श्रुत्वा कुबेरो वाक्यमब्रवीत् ॥ ९२
युगानुसारिणस्तेऽद्य कथं दास्यामि चक्रभृत् ।
यदिदत्तं त्वया पत्रं तदा दास्यामि ते वसु ॥ ९३
अधनः सधनं लोके यथा कांक्षति माधव ।
तथैव नरशार्दूल भगवन् लौकिकैः समाः ॥ ९४
एवं तद्वचनं श्रुत्वा हरिः ब्रह्माणमब्रवीत् ।
कथं लेख्यं मया पत्रं ऋणादाने वद अद्य मे ॥ ९५
ऋणग्राही श्रीनिवासो धनदायी धनेश्वरः ।
आत्मकार्यनिमित्तं तु कल्याणार्थं कलौ युगे ॥ ९६

वैशाखे शुक्लसप्तम्यां विलम्बे चैव वत्सरे ।
निष्काणां राममुद्राणां लक्षाणि च चतुर्दश ॥ ९७
द्रव्यं दत्तं धनेशेन वृद्धिग्रहणकारणात् ।
सवृद्धि दित्सता मूलं स्वीकृतं चक्रपाणिना ॥ ९८
विवाहवर्षमारभ्य सहस्रान्ते धनं पुनः ।
दातव्यं यक्षराजाय श्रीनिवासेन शार्ङ्गिणा ॥ ९९
एकः साक्षी चतुर्वक्त्रः द्वितीयस्तु त्रिलोचनः ।
तृतीयोऽश्वत्थराजस्तु वेत्ति सर्वमिदं दृढम् ॥ १००
इत्येतत् ऋणपत्रं तु श्रीनिवासोऽलिखत् स्वयम् ।
एवं पत्रार्थमाकर्ण्य ऋणपत्रं रमापतिः ॥ १०१
लिखित्वा तत्करे दत्वा धनेशं च अब्रवीत् हरिः ।
धनं देहि धनेशान पत्रे लिखितमात्रकम् ॥ १०२
एवमुक्तो वसुपतिः वासुदेवेन भूमिप ।
ददौ धनं कुबेरस्तु क्लृप्तसंख्यं वृषाकपेः ॥ १०३
दृष्ट्वा तद्धनराशिं तु तत्करेऽदात् हरिर्नृप ।
कुबेरमब्रवीत् देवः सम्भारानयनं प्रति ॥ १०४
ततः प्रभाते विमले श्रीनिवासः सतां गतिः ।
गरुडं प्रेषयामास ब्रह्माणं प्रति भूमिप ॥ १०५
स गत्वा वायुवेगेन ब्रह्माणं तल्पसंस्थितम् ।
प्रत्युवाच महाराज पक्षिराट् परमं वचः ॥ १०६

गच्छ तातान्तिकं ब्रह्मन् वस्त्रालङ्कारभूषितः ।
हंसमारुह्य चन्द्राभं गन्तुं राजेन्द्रपत्तनम् ॥ १०७

वाद्यान्तां च विचित्राणि वादित्राणि महान्ति च ।
गजमारोप्य महती भेरी च अद्य अनुवाद्यताम् ॥ १०८

वाहनानि विचित्राणि रथा आन्दोलिका अपि ।
अलङ्क्रियन्तां राजेन्द्रपुरीं गन्तुं ससंभ्रमम् ॥ १०९

पक्षिराड्वचनं श्रुत्वा पक्षिवाहननन्दनः ।
नियोजयामास ततो बलं देवगणस्य च ॥ ११०

गजानां च हयानां च वृषभाणां च मण्डलम् ।
पदातीनां च शूराणां मण्डलं समलङ्कृतम् ॥ १११

शूराश्च कृतविद्याश्च धृतशस्त्रास्त्रपाणयः ।
पितामहं पुरस्कृत्य जग्मुर्नारायणान्तिकम् ॥ ११२

तं दृष्ट्वा देवदेवेशं भगवानाह भूपते ।
विलम्बः क्रियते कस्मात् गमनार्थं पितामह ॥ ११३

नियोज बलं सर्वं राजधान्यै नृपस्य च ।
इत्थं हरेर्वचः श्रुत्वा वासुदेवात्मजोऽब्रवीत् ॥ ११४

सज्जीकृतं बलं सर्वं धृतायुधमरिन्दम ।
उत्तिष्ठ पुरुषश्रेष्ठ समारोह खगेश्वरम् ॥ ११५

स इत्थमुक्तो भगवान् गरुडस्कन्धमाश्रितः ।
ब्रह्माणं अग्रतः कृत्वा रुद्रं कृत्वा तु दक्षिणे ॥ ११६

वामे वायुं ततः कृत्वा कुमारं पृष्ठतस्तथा ।
रमामारोपयामास रथं काञ्चननिर्मितम् ॥ ११७

मातरं वकुलां राजन् विमानं सूर्यसन्निभम् ।
समारोप्य महाराज भगवान् भक्तवत्सलः ॥ ११८

स्वयं तु गरुडारूढो जगाम च सतां गतिः ।
शेषो दधार राजेन्द्र श्वेतच्छत्रं शशिप्रभम् ॥ ११९

चामरे चन्द्रसङ्काशे वीजयामास मारुतः ।
व्यजनेन विचित्रेण रत्नदण्डेन माधवम् ॥ १२०

वीजयामास राजेन्द्र विष्वक्सेनः प्रतापवान् ।
भेरीदुन्दुभिनिर्घोषैः वादित्राणां महास्वनैः ॥ १२१

नर्तकैः नटनैश्चैव हाहाहूहूयुतोऽञ्जसा ।
ययौ विभवमापन्नः सर्वात्मा सर्वतोमुखः ॥ १२२

अस्ताद्रिं प्रस्थिते भानौ तस्मिन् काले महीपते ।
अष्टवर्गं स्वयं कृत्वा कृतकौतुकमङ्गलः ॥ १२३

पद्मावतीं स्नापयित्वा गन्धतैलेन भूमिपः ।
अलङ्कृत्य वरां कन्यां अलङ्कारैर्महीपतिः ॥ १२४

गजमारोप्य तरसा पुत्रीं पुत्रीहिते रतः ।
आकाशराजो धर्मात्मा पुत्रेण सह संयुतः ॥ १२५

पुरोहितेन शक्रेण तोण्डमानेन निर्ययौ ।
श्रीनिवासं जगद्योनिं द्रष्टुकामो रमापतिम् ॥ १२६

चतुरङ्गबलैस्सर्वैः गजाश्वरथसंयुतैः ।
राजा ददर्श गोविन्दं शक्रेण परिदर्शितम् ॥　१२७
गरुडस्कन्धमारूढं श्वेतच्छत्रादिभिर्युतम् ।
सुकुमारं युवानं च सुन्दरं सुन्दराननम् ॥　१२८
श्रीनिवासं जगद्योनिं सच्चिदानन्दविग्रहम् ।
दृष्ट्वा सन्तुष्टमनसा स रथादवरुह्य च ॥　१२९
पद्मावतीं स्वपुत्रीं च निधाय परतो नृपः ।
पुरोहितं पुरस्कृत्य च इदं वचनमब्रवीत् ॥　१३०
धन्योऽहं कृतकृत्योऽहं स्वर्गमार्गं समास्थितः ।
एवं वदन्तं तत्काले श्रीनिवासः सतां गतिः ॥　१३१
ददर्श राजशार्दूलं नारदेन प्रदर्शितम् ।
दीर्घश्मश्रुं दीर्घबाहुं सर्वज्ञं दीर्घदर्शनम् ॥　१३२
श्वशुरं तव गोविन्द पश्य माधव भूमिपम् ।
धन्यं नारद मज्जन्म यदाकाशोऽद्य बान्धवः ॥　१३३
सम्बन्धस्तेन सम्प्राप्तः किं मया चरितं पुरा ।
वदत्येवं हृषीकेशो राजा सत्यपराक्रमः ॥　१३४
द्वारतोरणमासाद्य श्रीनिवासं ददर्श ह ।
पूजयामास गोविन्दं वसनाभरणादिभिः ॥　१३५
गन्धतैलेन राजेन्द्र जामातारमपूजयत् ।
सा ददर्श वरारोहा पतिं परमपावनम् ॥　१३६

पद्मावती विशालाक्षी लज्जया परिमोहिता ।
तां ददर्श जगद्योनिः कमलाक्षीं महीपते ॥ १३७

पद्मावतीश्रीनिवासौ वाहनादवरुह्य च ।
अन्योन्यालोकनं राजन् चक्राते संस्थितौ ततः ॥ १३८

नगरद्वारनिलयां दुर्गामासाद्य भक्तितः ।
पद्मावत्यनुगो मायी देवीं नत्वा विशेषतः ॥ १३९

वरं ययाचे गोविन्दः कुरु भार्यामिमामिति ।
पद्मावती विशालाक्षी सावित्रीवरमुत्तमम् ॥ १४०

पतिं कुरु रमानाथं श्रीनिवासं जगन्मयम् ।
इति वृत्वा च सा देवी नत्वैरावतमाश्रिता ॥ १४१

गरुडस्कन्धमारूढो भगवान् भक्तवत्सलः ।
दीपकैः तैलसंसिक्तैः सहस्रायुतसंख्यकैः ॥ १४२

लाजान् पुष्पाण्यक्षतांश्च विकिरद्भिरितस्ततः ।
स्तुवद्भिर्वन्दिबृन्दैश्च ससूतैर्मागधैरपि ॥ १४३

आशीर्वादं प्रकुर्वद्भिः वेदघोषपुरस्सरम् ।
ब्रह्मादिभिस्सुरश्रेष्ठैः भूसुरैः शुकपूर्वकैः ॥ १४४

श्रीनिवासं प्रपश्यद्भिः पौरैर्नारीनरैर्वृतः ।
वीणावेणुमृदङ्गांश्च पणवानकदुन्दुभीन् ॥ १४५

वादयद्भिर्जनैश्चान्यैः वारनारीगणैस्तथा ।
गन्धर्वैर्गाननिपुणैः सुतामात्यैश्च संयुतः ॥ १४६

आकाशराजो धर्मात्मा श्रीनिवासपरायणः ।
पद्मावत्या समेतं च श्रीनिवासंससम्भ्रमम् ॥ १४७

सञ्चारयन् समन्ताच्च नारायणपुरे शनैः ।
रम्भास्तम्भैरिक्षुदण्डैः पूगीपोतैरलङ्कृतम् ॥ १४८

रसालपल्लवयुतैः पूर्णकुम्भैरलङ्कृतम् ।
स्त्रीभिर्नीराजयन्तीभी राजमानचतुष्पथम् ।
वेदित्रयं परिक्रम्य वासुदेवालयं ययौ ॥ १४९

प्रवेशयामास वरं सुमन्दिरं
श्रीवेङ्कटेशं बहुरत्नसम्मितम् ।
तद्बन्धुखण्डं मुनिवर्यगुप्तं
बलं ययौ नाथनिकेतनेषु ॥ १५०

शुक्रवारे दशम्यां च सायङ्काले वियन्नृपः ।
चतुरङ्गबलं सर्वं निधाय पुरतस्सुतम् ॥ १५१

वसुदानं महाराज तोण्डमानं च सोदरम् ।
पुरोहितं पुरस्कृत्य सह सम्बन्धिबान्धवैः ॥ १५२

ऐरावतं महानागं रत्नकम्बलभूषितम् ।
मेघराड्वर्णसंयुक्तं बद्धघण्टाकुलान्वितम् ।
रक्तदन्तं महारावं कर्णबद्धसुचामरम् ॥ १५३

पुरन्दरं पुरस्कृत्य गजमैरावतं तथा ।
आह्वानकारणात् प्राप्तः श्रीनिवासालयं तदा ॥ १५४

तस्मिन् महागृहे राजन् अयुतस्तम्भशोभिताम् ।
सभां चकार रत्नाढ्यां विश्वकर्मा विभोः प्रियाम् ॥ १५५

तत्रासीनाः महाभागाः ब्रह्माद्याः सर्वदेवताः ।
विश्वामित्रो भरद्वाजो वसिष्ठो गौतमस्तथा ॥ १५६

भृगुरत्रिः पुलस्त्यश्च वाल्मीकिर्मिथिलेश्वर ।
वैखानसश्च दुर्वासाः मार्कण्डेयोऽथ गालवः ॥ १५७

दधीचिश्च्यवनो राजन् सनकश्च सनन्दनः ।
एते श्रेष्ठतमा लोके मुनयो वीतकल्मषाः ॥ १५८

जटामुकुटभूषाङ्गाः ज्वलत्कृष्णाजिनाम्बराः ।
कश्यपन्तु पुरस्कृत्य समासीनास्सभान्तरे ॥ १५९

तन्मध्ये वासुदेवस्तु रत्नकम्बलसंयुतः ।
कृताञ्जलिपुटस्तस्थौ ब्रह्मा लोकपितामहः ॥ १६०

तत्सभाद्वारमासाद्य राजा सत्यपराक्रमः ।
पुरोहितं पुरस्कृत्य सम्प्राप्तो हरिसन्निधौ ॥ १६१

समुत्तस्थौ वासुदेवो दृष्ट्वा राजानमागतम् ।
परिरम्भणमासाद्य भगवान् वाक्यमब्रवीत् ॥ १६२

भवान् श्रेष्ठतमोऽत्यन्तं वृद्धोऽसि नृपसत्तम ।
किमर्थमागतोऽसि त्वं मद्गृहं राजसत्तम ॥ १६३

वसुदानं तु राजेन्द्र समाह्वाने नियोजय ।
वदत्येवं श्रीनिवासे पुरोहितमभाषत ॥ १६४

विलम्बः क्रियते कस्मात् पूजां कुरु रमापतेः ।
स राजवचनं श्रुत्वा धरणीं वाक्यमब्रवीत् ॥ १६५
अरुन्धतीं पुरस्कृत्य कुरु पूजां रमापतेः ।
सा सम्भ्रमात् समुत्थाय बाष्पसन्दिग्धलोचना ॥ १६६
मुखं विलोक्य राजेन्द्र कृष्णस्य नृपवल्लभा ।
मत्वा कृतार्थमात्मानं आनन्दपरिपूरिता ॥ १६७
सलज्जा पूजयामास सच्चिदानन्दविग्रहम् ।
तां दृष्ट्वा योषितः सर्वाः विस्मयाकुलमानसाः ॥ १६८
प्राहुः प्रहृष्टहृदयाः धरणीं राजवल्लभाम् ।
किं त्वया चरितं पुण्यं पूर्वजन्मनि हे धरे ॥ १६९
वासुदेवार्चनविधौ निर्मिता परमेष्ठिना ।
या त्वं इत्थं पूजयसि साक्षात् नारायणं स्वयम् ॥ १७०
इत्येवं संस्तुता देवी धरणी राजवल्लभा ।
तैलकर्पूरगन्धेन चन्दनेन सुगन्धिना ॥ १७१
अर्चयामास कल्याणी श्रीनिवासं सुरेश्वरम् ।
वस्त्रैर्नानाविधै रक्तैः मुक्तानिर्मितभूषणैः ॥ १७२
ततः पुरोहिताज्ञप्तः पुराणपुरुषोत्तमम् ।
गजमारोपयत् राजा जामातारमनामयम् ॥ १७३
सहितो वासुदेवस्तु ब्रह्मणा शम्भुना तथा ।
कुबेरेणाहिराजेन गरुडेनाग्निना तथा ॥ १७४

वायुना वरुणेनापि यमेन मरुतां गणैः ।
वसिष्ठादिमुनिश्रेष्ठैः सदारैस्ससुतैस्तथा ॥ १७५

जगाम राजभवनं रत्नतोरणमण्डितम् ।
नानाजनसमाकीर्णं नानालङ्कारमण्डितम् ॥ १७६

महावाद्यस्वनैर्युक्तं दीपायुतविदीपितम् ।
जामातृसहितो राजा द्वारतोरणसन्निधौ ॥ १७७

चतुरङ्गं बलं मुक्त्वा गृहन्तर्गन्तुमुद्यतः ।
तत्रान्तरे श्रीनिवासं नीराजयितुमागता ॥ १७८

तोण्डमान्नृपतेर्भार्या कुङ्कुमोदकभाजनम् ।
समादायाशु कल्याणी वासुदेवमपूजयत् ।
ततः पश्चात् श्रीनिवासः प्राविशत् राजमन्दिरम् । १७९

द्वाराण्यतीत्याथ बहूनि माधवो
राज्ञा समेतो भवनं प्रविश्य ।
रत्नासने राजविनिर्मिते हरी
रराज राजीवसमाननेत्रः ॥ १८०

चतुःस्तम्भां रत्नवेदीं अधिष्ठाप्य खगध्वजम् ।
परिवार्य च तस्थुस्ते मुनयो वीतकल्मषाः ॥ १८१

ब्रह्माणमग्रतः कृत्वा सर्वे देवा यथासुखम् ।
स्वर्णासने समासीनाः पश्यन्तो नयनोत्सवम् ॥ १८२

ततः स राजा धर्मात्मा चक्रे मङ्गलमज्जनम् ।
सापि स्नात्वा महाराज तैलेन च सुगन्धिना ॥ १८३
अलञ्चकार अलङ्कारैः स्वात्मानं राजवल्लभा ।
स्वामिपुष्करिणीतोयं हेमकुम्भप्रपूरितम् ॥ १८४
समानीय ब्राह्मणैश्च हरिपादावनेजनम् ।
सङ्कल्पं विधिवत् चक्रे कन्यादानस्य सादरम् ॥ १८५
ततश्चकार राजेन्द्र मधुपर्कं पुरोहितः ।
पुरोहितोक्तमन्त्रेण तस्य पादावनेजनम् ॥ १८६
सहस्रशीर्षापुरुष इति मन्त्रं समुच्चरन् ।
धरण्या स्नावितैः कृत्वा स्वामितीर्थजलैश्शुभैः ॥ १८७
हरिपादोदकं पुण्यं दधार शिरसा नृपः ।
भार्यां पुत्रं भ्रातरं च भवनं कोशमेव च ॥ १८८
गजागारं रथागारं वस्त्रागारं तथा जलैः ।
मार्जयामास राजेन्द्रः श्रीनिवासपरायणः ॥ १८९
अद्य मे सफलं जन्म जीवितं च सुजीवितम् ।
अद्य मे पितरस्तुष्टाः वासुदेवपदोदकात् ॥ १९०
एवमुक्त्वा महाराजः कन्यां कमललोचनाम् ।
अलञ्चक्रे विचित्रैस्तां अलङ्कारैर्महीपते ॥ १९१
ततस्तु घण्टिकाघोषं कृतवान् दैवचिन्तकः ।
सुमुहूर्ते तदा प्रासे मङ्गलाष्टकमब्रुवन् ॥ १९२

कन्याप्रदानसमये दक्षिणां राजसत्तमः ।
कोटिसंख्यान् निष्कपुञ्जान् दत्तवान् वेङ्कटेशितुः ॥
तं दृष्ट्वा धनराशिं तु भगवानाह भूमिपम् ।
दातव्यं किं त्वया राजन् पुत्रस्य तव भूपते ॥ १९४
विवाहकर्मनिपुणो भवान् दानपरायणः ।
ददस्व भूषणान्यङ्ग बहुरत्नान्वितानि च ॥ १९५
इत्युक्तो वासुदेवेन भूषणानि ददौ नृपः ।
किरीटं शतभारं च कण्ठिकामपि तावतीम् ॥ १९६
पुनरेकां तदर्धं च तदर्धं चैव कण्ठिकाम् ।
पदकानि ददौ सप्त अनर्घ्याणि अथ नृपोत्तमः ॥ १९७
मालिका मौक्तिकानां च भुजभूषणयुग्मकम् ।
कर्णभूषौ मौक्तिकाढ्यौ अंसपर्यन्तलम्बिनौ ॥ १९८
कङ्कणे रत्नमाणिक्यवज्रवैडूर्यनिर्मिते ।
द्वात्रिंशद्धारसंयुक्ते अनर्घे दत्तवान् नृपः ॥ १९९
नागभूषणयुग्मं च बाहुपूरादिकांस्तथा ।
भूषणानि अङ्गुलीयाँश्च दशानां वीरमुद्रिकाम् ॥ २००
कटिसूत्रं स्वर्णमयं वरवज्रसमन्वितम् ।
एकादशशतीभारं बहुरत्नसमन्वितम् । २०१
पादुके च ततो राजा दत्तवान् मधुघातिने ।
ददौ भोजनपात्रं च षष्ठिभारयुतं प्रभोः ॥ २०२

श्री पद्मावतीकल्याणम्

ईशानां जगतोऽस्य वेङ्कटपतेः विष्णोः परां प्रेयसीं
तद्वक्षस्थल नित्यवास रसिकां तत्क्षान्ति संवर्धिनीम् ।
पद्मालङ्कृतपाणिपल्लवयुगां पद्मासनस्थां श्रियं
वात्सल्यादिगुणोज्ज्वलां भगवतीं वन्दे जगन्मातरम् ॥

श्रीमन् कृपाजलनिधे कृत सर्वलोक सर्वज्ञ शक्त नतवत्सल सर्वशेषिन् ।
स्वामिन् सुशील सुलभाश्रितपारिजात श्रीवेङ्कटेश चरणौ शरणं प्रपद्ये ॥
विना वेङ्कटेशं न नाथो न नाथः सदा वेङ्कटेशं स्मरामि स्मरामि ।
हरे वेङ्कटेश प्रसीद प्रसीद प्रियं वेङ्कटेश प्रयच्छ प्रयच्छ ॥

लघुपात्रसमोपेतं बृहत्पात्रमपां तथा ।
कम्बलानां चतुःषष्ठिं दत्तवान् राजसत्तमः ॥ २०३

भूषणैर्भूषिताङ्गस्य कन्यादानमथाकरोत् ।
कन्याप्रवरमूचेऽथ गुरुः साक्षात् बृहस्पतिः ॥ २०४

अत्रिगोत्रसमुद्भूतां सुवीरस्य प्रपौत्रिकाम् ।
सुधर्मणस्तु पौत्रीं च पुत्रीमाकाशभूपतेः ॥ २०५

त्वमङ्गीकुरु गोविन्द कन्यां कमललोचनाम् ।
एवमुक्ते महाराजो मुदा रत्नाम्बरं ददौ ॥ २०६

प्रपौत्रस्य ययातेस्तु पौत्रस्यामिततेजसः ।
शूरसेनस्य राजेन्द्र वसुदेवस्य भूपतेः ॥ २०७

पुत्रस्य वेङ्कटेशस्य गोत्रे वासिष्ठसंज्ञके ।
जातस्यात्रिकुलोत्पन्नां कन्यां कनकभूषिताम् ॥ २०८

ग्रहीष्यामो वयं राजन् तव पुत्रीं नृपोत्तम ।
कन्यावरप्रवरयोः इत्युच्चारितयोरथ ॥ २०९

धरण्या सह राजेन्द्रः कन्यादानपरायणः ।
प्रहृष्टहृदयः प्राह श्रीनिवासं परात्परम् ॥ २१०

कन्यामिमां प्रदास्यामि गृहाण पुरुषोत्तम ।
इत्युक्त्वा प्राक्षिपत् राजा धरण्या स्नावितां तदा ॥

मन्त्रपूतां स्वामिती र्थधारां सकनकां हरे ।
दक्षिणे श्रीनिवासस्य ददौ पद्मावतीं ततः ॥ २१२

विधानं च ततश्चक्रे राजेन्द्रः सपुरोहितः ।
पूजयित्वा जगन्नाथं गन्धवस्त्रानुलेपनैः ॥ २१३

कङ्कणं बन्धयामास वासुदेवकराम्बुजे ।
पद्मावत्याः कराम्भोजेऽबन्धयत् कङ्कणं गुरुः ॥ २१४

तथा माङ्गल्यसूत्रस्य बन्धं वैवाहिकं तथा ।
श्रीनिवासेन देवेन अकारयत् स पुरोहितः ॥ २१५

सावित्रीव च कल्याणि बहुपुत्रवती भव ।
सर्वलोकस्य जननी भव मङ्गलदायिनी ॥ २१६

इत्थं सुमङ्गलीस्त्रीषु गायन्तीषु शुभाशिषः ।
ब्राह्मणानां करस्पर्शात् राज्ञश्चापि महात्मनः ॥ २१७

बबन्ध पूतं माङ्गल्यसूत्रं मन्त्राभिमन्त्रितम् ।
कण्ठे पद्मावतीदेव्याः श्रीनिवासो जगत्पतिः ॥ २१८

मुनिभिस्सह विद्वद्भिः लाजैर्होमं पुरोहितः ।
वसिष्ठोऽकारयत् पद्मावत्यञ्जल्यर्पितैस्ततः ॥ २१९

यजुश्शाखाक्रमेणैव जुहावाग्नौ यथाविधि ।
सर्वं वैवाहिकविधिं वसिष्ठोऽथ समापयत् ॥ २२०

ततः पुरोहितो राज्ञः स्वस्तिवाचनपूर्वकम् ।
मुनीनां अञ्जलिपुटे नवरत्नाक्षतान् ददौ ॥ २२१

ते वेदमन्त्रैः जगदीशमूर्ध्नि
रत्नाक्षतान् वेदविदः प्रचिक्षिपुः ।

तदा नृणां तत्र महोत्सवोऽभूत्
आकाशराजस्य पुरीनिवासिनाम् ॥ २२२

महोत्सवं तं तु अनुभूय देवताः
ब्रह्मेशपूर्वाः समहर्षिसत्तमाः ।
जग्मुः स्वकं धाम महानुभावाः
राजेन्द्रपूज्यं प्रशशंसुरादरात् ॥ २२३

गते देवगणे तत्र तु अगस्त्यनिलयं ततः ।
भुञ्जानो भोगमतुलं तत्रास्ते भगवान् हरिः ॥ २२४

विवाहाध्यायमाहात्म्यं ये शृण्वन्ति जनेश्वर ।
तेषां भाग्योदयं वक्ष्ये शृणु राजन् सविस्तरम् ॥ २२५

कोटिकन्याप्रदानेन यावद्भूमिप्रदानतः ।
यत्फलं लभते देही तत् फलं श्रवणादरात् ॥ २२६

ये उत्सवं कारयन्ति वैवाहं वेङ्कटेशितुः ।
तस्योत्सवो भवेत् राजन् वेङ्कटेशप्रसादतः ॥ २२७

इति ते कथितं राजन् विवाहचरितं हरेः ।
शृणुयात् श्रावयेत् वापि सर्वाभीष्टमवाप्नुयात् ।
शुभदं शृण्वतां चैव सर्वेषां मङ्गलप्रदम् ॥ २२८

इति वराह - भविष्योत्तरपुराणान्तर्गतं
पद्मावतीकल्याणं सम्पूर्णम् ॥

॥ श्रीः ॥

शुभं अस्तु

# * श्री गोदाकल्याणम् *

(दिव्यसूरिचरितात् सङ्गृहीतम् )

ततः पुरे धन्विनवाभिधे विधेः
सरोवत् उद्यानमभूत् मरुद्धृतम् ।
अनन्तशाखान्तपरायणद्विज-
प्रकाश्यमानश्रुतिलालितस्वनम् ॥ १

अशोकमन्दारनमेरुपाटली-
रसालचाम्पेयकपूगकेसरैः ।
निवार्यमाणोष्णकरातपोदयं
निरङ्कुशानन्दकरं पतत्रिणाम् ॥ २

गलन्मधूलीरसपानगर्वित-
द्विरेफमालाकुलमालतीततिः ।
पटीरवाटीषु निबद्धभोगिराट्-
फणामणीनां प्रभया परिष्कृतम् ॥ ३

सुपक्वजम्बूफलदाडिमीरसैः
सुहृत्तशौकाहितचाटुसङ्कुलम् ।
तमालमालागृहमेधिबर्हिणां-
उदारकेकारवपूरितान्तरम् ॥ ४

प्रसूनसन्दोहपरागमण्डली-
विचित्रविस्तीर्णवितानविभ्रमम् ।
पवित्र पत्रोच्चयनीलतेजसां
परिष्कृतान्तं तुलसीवनेन तत् ॥ ५

समन्ततो वीक्ष्य चरन् तदन्तरे
नवप्रसूनान्यपचित्य कुत्रचित् ।
स विष्णुचित्तस्तुलसीवनावनं
खनित्रवक्त्रेण निखन्य कल्पयन् ॥ ६

शुभे मुहूर्ते शुभमासि फाल्गुनी-
प्रतीततारे तुलसीवनान्तरे ।
भुवोऽभवत् काचन बालकन्यका
स तां तदा प्रेक्ष्य विसिष्मये मुदा ॥ ७

अयोनिजेयं तुलसीपदे कथं
समुद्गता प्रागिव जानकी भुवः ।
इति स्मरन् पाणितलेन धारयन्
तमालयन्तीं स्वरुचा समन्ततः ॥ ८

तदाऽशरीरप्रभवापि वागभूत्
पुरा मही सूकररूपिणोद्धृता ।
तमाह सा विष्णुमभीष्टमाचरन्
करोतु किं वा तव किङ्करस्त्विति ॥ ९

स्तवेन माल्येन च येऽर्चयन्ति मां
ददामि तेभ्यस्त्वविनाशिसम्पदः ।
प्रसूनदानां फलदोऽस्मि सूरिभिः
स्तवाद्दशांस्तुल्यगणांश्च कारये ॥ १०

इति क्षितिं सोऽवददादिसूकरः
तदा प्रभृत्यात्मगुणानुरूपिणः ।
अभावतो भूरभिवर्धकस्य सा
न चावतीर्णा सुचिरं समुत्सुका ॥ ११

इयं धरित्री तुलसीवनोदरात्
समुत्थिता साद्य शिशुत्वमेयुषी ।
प्रसाधितुं स्तोत्रसुमैर्मुरद्विषं
विवर्धयैनामिति सन्दिदेश तम् ॥ १२

यथैव सीतां जनकाधिपः पुरा
यथैव लक्ष्मीं कलशार्णवस्तथा ।
स विष्णुचित्तोपि तथैत्य तां सुतां
ननन्द यद्वन्निधिमेत्य निर्धनः ॥ १३

स तां समालिङ्ग्य समूह्य चोरसा
स्वगेहमासाद्य शुभावहोदयाम् ।
स्वधर्मपत्न्याः करसम्पुटे सुतां
विवर्धयैनामिति भाषयन् ददौ ॥ १४

ततः समेत्याखिलदेशमानुषाः
सदारपुत्राः सुसमीक्ष्य तत्सुताम् ।
न विष्णुचित्तः सुकृती तु केवलं
वयं च सर्वे शुभयानयाधिकम् ॥ १५

इति ब्रुवाणाः परिरभ्य ते मिथो
जगुश्च केचिन्ननृतुश्च केचन ।
ननन्दुरन्ये च सुतोदयोत्सवं
वितेनुरेवं विविधं कुतूहलात् ॥ १६

कटाहसम्पूरिततैलसेचनैः
कनन्निशाचूर्णसुपूर्णमुष्टिभिः ।
विसारकर्पूरपरागवृष्टिभिः
परस्परं चक्रुरुदारमुत्सवम् ॥ १७

यथोचितं तानखिलान् समागतान्
सबालवृद्धान् समभासयद्धनैः ।
ददाति गा इत्यरविन्दचक्षुषे
चकार गोदेत्यभिधां शुभेऽहनि ॥ १८

स सव्यपाणौ दुहितुर्विलोकयन्
त्रिलोकनेतुर्महिषीत्वसूचकम् ।
ध्वजातपत्राम्बुरुहादिलक्षणं
मुदङ्कुरं प्रापदभङ्गुरं गुरुः ॥ १९

पदाम्बुजे पल्लवरागपाटले
समीक्ष्य मेने दुहितुः सुलक्षणम् ।
स सर्वगीर्वाणकलत्रकुन्तल-
प्रसूनपूज्याङ्घ्रिरियं भवेदिति ॥ २०

सुवर्णपर्यङ्कमसावुपेयुषी
चिरं रुदन्त्यन्यकथाविधाश्रवात् ।
उदारदामोदरकेलिकीर्तनात्
अदृश्यत स्मेरमुखाम्बुजा मुदा ॥ २१

गृहाङ्गणे पांसुविहारहारिणी
पदद्वयी शिञ्जितमञ्जुनूपुरा ।
करेण पर्यायनिवेशचारुणा
क्रमेण गोदा अकृतचारुचंक्रमम् ॥ २२

मुखावलम्बानलकान्मुहुर्मुहुः
सरोजलोभाद्भ्रमरानिवागतान् ।
निवारयन्ती करपल्लवाञ्चलात्
प्रसूनपांसौ विजहार सा गृहे ॥ २३

ललाटडोलायितरत्नभूषणां
मनोज्ञमन्दस्मितमन्थराननाम् ।
रजोनुलिप्तामुपगूह्य तां पिता
शिरस्यजिघ्रच्चिरमानुनन्द च ॥ २४

प्रगृह्य धात्री करपल्लवाङ्गुलिं
　शनैः समुत्थाय पदानि कानिचित् ।
गृहाङ्गणे रिङ्खणवन्ति साऽकरोत्
　स्वकीयपित्रोर्हृदये च सम्पदम् ॥　२५

क्रमेण धात्री वचनानुवर्तिनी
　जगाद तातेति च मातरित्यपि ।
चकार बाला करतालघट्टनं
　मुकुन्द गोविन्द पदानुवादिनी ॥　२६

पुरापराधीत्यवमत्य वायसं
　सुपर्णमालोक्य समाजुहाव सा ।
क्षपाकरं हृद्यमवेक्ष्य चक्रिणः
　प्रतिक्षपं साऽऽह्वयति स्म सादरम् ॥　२७

वधूवरौ कृत्रिमपुत्रिकासुतौ
　विभाव्य गोदा किल रुक्मिणीं हरिम् ।
स्वयंवरोद्वाहविधामरीरचत्
　रणेन साकं बलभद्रचैद्ययोः ॥　२८

समिद्धय सा स्फाटिकवेदिकान्तरे
　प्रवालवह्निं हरिचन्दनेन्धनैः ।
अकारयन्मौक्तिकलाजमोक्षतो
　विवाहलीलां कृतकात्मपुत्रयोः ॥　२९

कुबेरदृक्केलिषु तां पराजितां
सखीजने पृच्छति नाम तत्पतेः ।
विलज्जिता सा शनकैः स्ववल्लभं
जगाद देवं वटपत्रशायिनम् ॥ ३०

गुणत्रयाकारसुवर्णगोलकान्
करद्वयेनाप्युपलाल्य सोन्मुखी ।
शनैः समुद्गाय तदङ्गमङ्गना
मुरारिगाथा विजहार मोहिनीः ॥ ३१

स्रजं स्वपित्रा निहितां समर्पणात्
पुरा हरेः सा विनिवेश्य कुन्तले ।
विलोक्य वक्त्रं गृहकूपदर्पणे
विमुच्य तां पूर्वपदेऽकरोत् पुनः ॥ ३२

यथा तदीयालकमुक्तपूर्वया
स्रजा मुदं प्राप मुरारिरन्वहम् ।
तथा न तस्या जनकप्रदिष्टया
पुरा न वा माल्यकृतोपनीतया ॥ ३३

उपेत्य दिव्योपवनान्तमन्वहं
नवीनपुष्पाण्यपचित्य सा हरेः ।
विधाय मालामदिशत् पितुः करे
स्वकेशलेशप्रतिपन्नसौरभाम् ॥ ३४

अतीत्य सा शैशवमायतेक्षणा
  जगाम गोदा नवयौवनोदयम् ।
पुरारिनेत्रानलदग्धमन्मथं
  पुनः समुज्जीवयितुं मुरारिणा ॥ ३५

तदङ्गदेशे कुचकोकविभ्रमा
  नदी नवा कान्तिमयी व्यवर्धत ।
स्मराविला लोलविलोचनोत्पला
  क्रमेण नारायणसिन्धुगामिनी ॥ ३६

तनोरयत्नोपनतं विभूषणं
  महास्त्रलाभः सुकरो मनोभुवः ।
प्रमोदधारा मुरवैरिचक्षुषोः
  वपुष्यमुष्याः प्रससार यौवनम् ॥ ३७

सविभ्रमभ्रूलतमायतेक्षणं
  पयोधराक्रान्तवलग्नवल्लरी ।
उदग्ररोमालि करालकुन्तलं
  विदिद्युतेऽस्याः नवयौवनं वपुः ॥ ३८

गभीरनाभीसरसा लसद्भुजा-
  लतेन तुङ्गस्तनकेलिभूभृता ।
तदङ्गकेनेक्षणभृङ्गचारुणा
  बभूव लीलोपवनी मनोभुवः ॥ ३९

अमोघमस्याः यदपाङ्गवीक्षणं
स्मरेण बाणत्वमनायि साम्प्रतम् ।
यदि प्रसूनं विशिखीकरोत्यसौ
कुतोस्य लोकेशजिगीषुता कथा ॥ ४०

त एव धन्याश्चिकुराः समायताः
मृगीदृशो यैरुपभुक्तमुक्तया ।
अतुष्यदीर्ष्यापरुषेन्दिरेक्षितः
प्रसूनदाम्ना परमः पुमानपि ॥ ४१

सुधामयूखेन सुजातमाननं
व्यधायि नूनं विधिना नतभ्रुवः ।
न चेदमुष्मिन् हरिणादृते कथं
विशृङ्खलं जाग्रति पुष्कलाः कलाः ॥ ४२

शिरीषमालासुकुमारतासखी
भुजालता सा स्फुरति स्म सुभ्रुवः ।
ययापनीषद्यत निर्विशेषता
मुरारिकण्ठे तुलसीदलस्रजा ॥ ४३

पदद्वयं मत्तचकोरचक्षुषः
प्रभापराभूतपयोजपल्लवम् ।
कथं सहेतोरसि कैटभद्विषः
कठोरतां कौस्तुभरत्नसम्भवाम् ॥ ४४

दिने दिनेऽवर्धत सा पितुर्गृहे
विवेकबुद्ध्या सह विष्णुसक्तया ।
कलेव कान्त्या हिमदीधितेर्नवा
पटीरवल्लीव च गन्धसम्पदा ॥ ४५

अथ समधिकस्फायत्तारुण्यसम्पदलङ्क्रिया-
ललितवपुषस्तस्याश्चित्तं प्रसक्तमजायत ।
भगवति चिदानन्दे कन्दे पुराणगिरां हरौ
प्रकृतिरुचिरे भावः प्रायो लगत्यचलात्मनाम् ॥ ४६

श्रीविष्णुचित्तः सम्पूज्य सौरभोद्दामदामभिः ।
वटदामपतिं विष्णुं वासं निजमुपागमत् ॥ ४७

अक्षव्यापारमखिलं निक्षिपन्ती मुरद्विषि ।
गुरुं व्यजिज्ञपत् गोदा शुश्रूषुर्भगवद्गुणान् ॥ ४८

चरितानि जगत्त्राणचतुराणि मुरद्विषः ।
सकलान्यपि यत्तात जानीषे त्वं विशेषतः ॥ ४९

अवन्यां कति धामानि हरेरर्चावतारिणः ।
अपदानं त्वमेतेषां अधुना वक्तुमर्हसि ॥ ५०

इति प्रश्रयशालिन्या पुत्र्या विज्ञापितः पिता ।
वैभवं वैष्णवं वक्तुं वावदूकः प्रचक्रमे ॥ ५१

अष्टोत्तरशतं धाम्नामस्त्यर्चारूपिणो हरेः ।
भुवि यद्वैभवश्रुत्या पुंसां मुक्तिः करस्थिता ॥ ५२

विष्णुधामापदानानि विष्णुचित्ते विवृण्वति ।
मधुराधीशकृष्णस्य वृत्तेनाजनि विस्मिता ॥ ५३

ततः सुन्दरराजस्य चरितं शृण्वती मुदा ।
उदारपुलकाङ्कूरामुवाह सुतनुस्तनुम् ॥ ५४

वेङ्कटाद्रिपतेर्विष्णोः कथाकर्णनकर्मणा ।
रमणीये मुखे तस्याः विकासोऽभूद्विजृम्भितः ॥ ५५

श्रीमतो रङ्गराजस्य शृण्वती महिमोदयम् ।
अधत्तामन्दमानन्दं अरविन्ददलेक्षणा ॥ ५६

अतृप्ता रङ्गराजस्य प्रभावामृतपारणात् ।
इति स्मेरमुखी गोदा सवितारमभाषत ॥ ५७

चरित्राणि पवित्राणि समस्तानि सविस्तरम् ।
क्रियासमभिहारेण कीर्तितव्यानि रङ्गिणः ॥ ५८

इत्युक्तवत्यां गोदायां विष्णुचित्तोऽवदन्मुदा ।
तादृशीं भक्तिमालोक्य तस्याः श्रीरङ्गधामनि ॥ ५९

श्रूयतामादितो वक्ष्ये त्वया दत्तावधानया ।
दयाकरस्य चरितं देवदेवस्य रङ्गिणः ॥ ६०

तत्तादृशेन तपसा सन्तुष्टः परमेष्ठिनः ।
उदगादुदरात्सिन्धोः उरगेन्द्रशयः स्वयम् ॥ ६१

चतुर्वेदमयोत्तुङ्गशृङ्गशृङ्गारिणा हरिः ।
रङ्गसंज्ञविमानेन सङ्गतः प्रणवात्मना ॥ ६२

समस्तोपनिषत्कन्दं सम्भूतं क्षीरसागरात् ।
प्रीतस्तमर्चयामास सत्यलोके सरोजभूः ॥ ६३

सत्रमारभत ब्रह्मा तत्र तत्प्रीतिकारणम् ।
तदर्थमाययुः सर्वे सुरासुरनरर्षयः ॥ ६४

ईश्वरः सूर्यवंश्यानां इक्ष्वाकुर्मनुनन्दनः ।
इष्टिं पैतामहीं प्रापदिन्धानगुणविक्रमः ॥ ६५

तत्र संसेव्य रङ्गेशं भगवन्तं परात्परम् ।
इक्ष्वाकुस्तपसा कर्तुमियेष कुलदैवतम् ॥ ६६

विताने विरते सम्यग्विरिञ्चेन विसर्जितः ।
अयोध्यां रङ्गनिलयं ययौ ध्यायन् धरापतिः ॥ ६७

अवाप्तुकामस्तं देवमरविन्दासनादसौ ।
तत्प्रसादफलाकांक्षी तपस्तेपे सुदुश्चरम् ॥ ६८

तत्तत्तपःप्रभावेन तं लब्ध्वा कुलदैवतम् ।
ईशं रङ्गपतिः साक्षादिक्ष्वाकुः सममोदत ॥ ६९

इक्ष्वाकुप्रमुखैर्भूपैरिनवंश्यैः परः पुमान् ।
पंक्तिस्यन्दनपर्यन्तैरयोध्यायामपूज्यत ॥ ७०

रामेण स्वस्वरूपेण रावणप्राणहारिणा ।
विभीषणाय यद्रङ्गं प्रादायि सह लङ्कया ॥ ७१

सैकते सह्यकन्यायाः चन्द्रपुष्करिणीतटे ।
मध्येपद्धति तन्न्यस्तं रक्षसा नियमेषिणा ॥ ७२

निर्वृत्तनियमे तस्मिंस्तत्समुद्धर्तुमक्षमे ।
विषण्णे व्योमनीयं वागशरीरिण्यजृम्भत ॥ ७३

मद्विमानापरिस्पन्दात् मा विषीद विभीषण ।
ममैषा सह्यजामध्यमही हृद्या महीयसी ॥ ७४

तपस्यां सफलीकर्तुं आद्रिये धर्मवर्मणः ।
नवतीर्थनिविष्टानां ऋषीणामपि तादृशीम् ॥ ७५

एतस्मिन् पुलिनाभोगे भोगे गन्धवहान्धसः ।
समीक्ष्य तावकीं लङ्कां शयेयं योगमुद्रया ॥ ७६

इति प्रस्थाप्य तं लङ्कां भक्तिप्रह्वं विभीषणम् ।
प्रशास्त्यद्यापि रङ्गेशो भुवनानि चतुर्दश ॥ ७७

चन्द्रपुष्करिणीतीरे चञ्चत्पुन्नागभूषिते ।
रङ्गधाम्नि वसन् विष्णुः सप्तावरणभूषिते ॥ ७८

कन्यां चोलेन्द्रसिंह्मस्य कमलां भूविहारिणीम् ।
उपयेमे स रङ्गेन्दुः निचुलापुरवल्लरीम् ॥ ७९

तत्परिग्रहतः प्राप भगवान् रङ्गनायकः ।
जगद्विमोहनो नाम्ना सौम्यजामातृनाथताम् ॥ ८०

अष्टोत्तरशते धाम्नां विष्णो रङ्गं विशिष्यते ।
ग्रहेषु नवसु श्रेयान्नलिनीबान्धवो यथा ॥ ८१

न केवलममुष्याज्ञा नाकिभिः शिरसोह्यते ।
विहितार्चावताराणां देवानामपि मौलिभिः ॥ ८२

सप्तोत्तरशती विष्णुधाम्नां रङ्गपुरेशितुः ।
विहारोपवनाकारं विवृणोति समन्ततः ॥ ८३

मुक्तभोग्यस्य करुणावरुणालयचक्षुषः ।
रङ्गिणो नाथनाथस्य महिमा वागगोचरः ॥ ८४

इति सा तन्मुखाच्छ्रुत्वा गोदा रङ्गेशवैभवम् ।
पुष्यद्रागाऽभवत्तस्मिन्पूषणीव अरविन्दिनी ॥ ८५

नालीकनयना रङ्गनायकानुबुभूषया ।
अन्यभावान् जहाति स्म मन्यमाना तमाशये ॥ ८६

ध्यायन्ती केशवं सा यत्तन्मयं जगदैक्षत ।
सर्वं विष्णुमयं विश्वमिति नासीत्प्रथा मुधा ॥ ८७

गुरुं संविनया अवादीत् गोदा कौतूहलात्पुनः ।
कुलकन्याः प्रपद्येरन् कथं नाथमधोक्षजम् ॥ ८८

इत्युक्तस्तनयामाह गुरुर्गोप्यः स्मरातुराः ।
मार्गशीर्षव्रताचाराद्वल्लभं कृष्णमाप्नुवन् ॥ ८९

त्वमप्याचर तन्वङ्गि मार्गशीर्षे महद्व्रतम् ।
मुदितस्तेन भवतीं मुकुन्दोऽङ्गीकरिष्यति ॥ ९०

इत्थं तातेन सन्दिष्टा गोदा गुरुवशंवदा ।
तद्व्रताचरणोपायं तर्कयामास मानसे ॥ ९१

गोपिकाभावमास्थाय तद्व्रतार्थप्रकाशकम् ।
प्रबन्धं प्राह सा गेयं त्रिंशद्गाथाभिरुज्ज्वलम् ॥ ९२

कामेन भूयसा भूयो गोदा चक्रे यथाश्रुतम् ।
गाथाद्विगुणसप्तत्या प्रबन्धं रसबन्धुरम् ॥ ९३

कन्यया विष्णुचित्तस्य कलिताभूत्कृतिद्वयी ।
जन्यध्वखेदनोदाय जगदुज्जीवनाय च ॥ ९४

अम्भोजनयना यत्नादनवाप्तमनोरथा ।
सङ्गे रङ्गेश्वरस्याशु बभूवोत्सुकमानसा ॥ ९५

कथं रङ्गपतिः श्रीमान्मामकीं यौवनश्रियम् ।
दयालुररीकुर्यात् परिरम्भादिकर्मभिः ॥ ९६

इति चिन्तयमाना सा सुष्वाप कमलेक्षणा ।
स्वप्ने तमेव रङ्गेन्दुं यथावाञ्छितमन्वभूत् ॥ ९७

साक्षादनुभवन्तीव रमणी रङ्गनायकम् ।
प्रबुद्धा सहसैवासीत् विप्रयोगसमाकुला ॥ ९८

तदात्व एव तन्वङ्गीं व्यधत्त विषमायुधः ।
विविधाशुगविक्षेपविह्वलीकृतचेतनाम् ॥ ९९

अरविन्ददृशोऽकस्मादकम्पत वपुर्लता ।
विषमायुधकोदण्डविस्फारश्रवणादिव ॥ १००

प्रबोधमेत्य यद्गोदा नापश्यद्रङ्गनायकम् ।
तच्चित्तकुहरे तस्या लग्नो नूनमजायत ॥ १०१

आहारे न विहारे च हारादिपरिकर्मसु ।
बभूव विरहार्तायास्तस्याः किमपि कौतुकम् ॥ १०२

अमृतांशुः करैर्नूनं असिताक्षीमबाधत ।
विधित्सुस्तन्मुखेन्दुश्रीविजितस्तत्प्रतिक्रियाम् ॥ १०३

ततो गुरुजनाद्भीता विनेतुं विरहव्यथाम् ।
साकमालीजनैर्गोदा चम्पकाराममासदत् ॥ १०४

आसाद्य चम्पकाराममालीपरिषदावृता ।
अखिद्यत भृशं सुभ्रूरसह्यविरहव्यथा ॥ १०५

प्राप गोदा यदारामं वियोगज्वरशान्तये ।
प्रशमाय कृशानोस्तदभूत् प्राज्याज्यसेचनम् ॥ १०६

गोदाया यद्वियोगाग्निर्दिदीपे मन्दवायुना ।
उदपादि ततो वायोरुषर्बुधसहायता ॥ १०७

साम्प्रतं चन्दनारामः प्राप्तो यत्तदसाम्प्रतम् ।
अविजानानया तन्व्या मन्मथं प्रसवायुधम् ॥ १०८

बाला च मारवीरास्त्रशालां आरामवाटिकाम् ।
कोलाहलं कोकिलानां हालाहलममन्यत ॥ १०९

मन्दादपि मरुत्पोतस्पन्दात् साऽपदलं व्यथाम् ।
मन्दारकलिकासीधुस्यन्दाहरणतुन्दिलात् ११०

कृशेन वपुषा तस्याः कृतं विरहपाण्डुना ।
प्रतिपद्रजनीनाथकलाकेलिविडम्बनम् ॥ १११

गोदाया विष्णुविश्लेषवेदनानोदनैषिणी ।
कस्यापि भुवि विप्रस्य कन्या भावमवाप या ॥ ११२

इत्थमुत्तप्यमानां तां सा कृशाङ्गीमभाषत ।
अनुग्रहाख्या मुरजिच्चामरग्राहिणी सखी ॥ ११३

शृणोमि त्वमपि स्नेहाद्यदि सत्यमभाषथाः ।
किं न पृच्छति वृत्तान्तं समदुःखसुखो जनः ॥ ११४

चिन्ता मनसि जागर्ति सन्तापः कोपि वर्ष्मणि ।
त्वं तावत्कथयस्वालि रन्ता कस्तव वर्तते ॥ ११५

साकं सखीजनैस्तन्वि वञ्चयित्वा गुरूनपि ।
धन्यः को वा युवाऽध्यास्ते तावकं रमयन्मनः ॥ ११६

इति सख्यानुग्रह्या पृष्टा गोदा ह्रियाऽवदत् ।
अन्यो नारायणान्नास्ते धन्यो रमयिता हृदि ॥ ११७

चित्तं तदीयमधुना सक्तं श्रीपुरुषोत्तमे ।
जानती मधुरं गोदां प्रत्यवोचदनुग्रहा ॥ ११८

सत्यमात्थ मयाज्ञायि गोदे कस्ते मनोहरः ।
आलिख्यन्ते मया पट्यां हरयोऽर्चावतारिणः ॥ ११९

इत्यनुग्रह्या सख्या पटे सम्यक् प्रदर्शिते ।
आलोक्य गोदा रङ्गेशं व्रीलयासीदवाङ्मुखी ॥ १२०

मनोज्ञं रङ्गधामानं मत्वा तच्चित्तहारिणम् ।
अपत्रपानतमुखीमाह गोदामनुग्रहा ॥ १२१

यदि विश्वसनीयाहं यद्यास्ते मय्यनुग्रहः ।
कथयस्व यथावृत्तं गोप्तुं मामालि नार्हसि ॥ १२२

भावबन्धोऽस्ति चेत् प्रौढस्तव श्रीरङ्गधामनि ।
अचिरादेव तं देवमानेष्यामि त्वदन्तिकम् ॥ १२३

इति कर्णामृतं सख्याः श्रुत्वा वाक्यं सुलोचना ।
हारं मन्दस्मितव्याजात् अर्पयन्तीव साऽवदत् ॥ १२४

यत् त्रातुं हरिविरहव्यथाकुलां मां
प्रायस्त्वं प्रियसखि भूतलेऽवतीर्णा ।
तज्जाने मदभिमतार्थयोजनायां
तज्जायां तव करवर्तिजीवितं मे ॥ १२५

प्रत्यक्षं कलयसि मामकीमवस्थां
जानीषे सखि समयोचितं वयश्च ।
रङ्गेन्दोः कथय यथावदित्यमन्दं
सन्दिष्टोदचलत् अनुग्रहा प्रणम्य ॥ १२६

रङ्गभूपतिरथैकदा रण-
द्भृङ्गकोकिलकदम्बसङ्कुलम् ।
प्राप पुष्पसमयोत्सवोचितं
बाह्यकेलिवनमध्यमण्टपम् ॥ १२७

तत्र मध्यदिवसोचिताः क्रियाः
तादृशीरसदृशीः समाप्य सः ।
रङ्गभूपतिरुपह्वरेऽवसत्
सान्तरङ्गपरिमेयकिङ्करः ॥ १२८

वातपोतपरिधूतमाधवी
चूतचम्पकनमेरुमेदुरम् ।
तत्र कन्दलितपुष्पसायकं
पश्यति स्म स वसन्तवैभवम् ॥ १२९

तत्र सर्वमनोमनोहरं
शोभमानवनमालिकाञ्चितम् ।
पञ्चबाणजनकं जनार्दनः
स्वयथा परमबोधि माधवम् ॥ १३०

मन्दमारुतरथास्थितस्तदा
मत्तकोकिलमनोज्ञकाहलः ।
मन्मथः सह वसन्तमन्त्रिणा
माधवस्य पुरतोऽवसन्मुदा ॥ १३१

चिन्तयन् किमपि वञ्चिताशयः
पञ्चभिः शफरकेतुहेतिभिः ।
आस्त दुःसहवियोगवेदना-
क्लान्तमूर्तिररविन्दलोचनः ॥ १३२

प्राप्य केलिविपिनं तिरोहिता
कुत्रचिद्व्रततिमन्दिरान्तरे ।
विष्णुचित्ततनयाप्तदूतिका
रङ्गराजसमयं व्यलोकत ॥ १३३

सव्यथं प्रसवबालपल्लव-
प्रस्तरोदरलुठत्कलेबरम् ।
रङ्गनायकमवेक्ष्य तादृशं
मानसे किमपि सा व्यशङ्कत  १३४

विप्रयोगशिखितापविह्वलं
पुष्पतल्पपतितं मुहुर्मुहुः ।
याति मर्दिततमालपल्लव-
प्रौढिमस्य किमिदं कृशं वपुः ॥  १३५

चिन्तयत्किमपि चित्तमादरात्
निर्निमेषनिभृते च लोचने ।
वक्त्रमुत्पुलकगन्धमङ्गकं
स्विन्नमस्य पुनरात्तसाध्वसम् ॥  १३६

आत्तसात्विकविकारचारुणा
मानसे ध्रुवमनेन रङ्गिणा ।
काचन प्रियतमानुभूयते
मामकीं किमु सखी पराऽथवा  १३७

अस्य भावमवगत्य तत्वतः
तादृशं प्रियसखीवचस्ततः ॥
तद्दशामपि निवेदयेयमि-
त्याप सन्निधिमनुग्रहा हरेः ॥  १३८

विष्णुचित्ततनयानियोगतो
धन्विनूतनपुरादिहागता ।
इत्युदीर्य विनयेन रङ्गिणः
प्राणमच्चरणयोरनुग्रहा ॥ १३९

तन्निशम्य वचनं तदा हरिः
पुस्रुवः श्रुतिपुटाद्भुतं भृशम् ।
उत्थितः कुसुमकेलिसंस्तरात्
आस्त मन्दमहिपत्यपाश्रयः ॥ १४०

अथ दक्षिणविलोचनाञ्चल-
स्पन्दनं सफलमित्यनुस्मरन् ।
तामवोचदथ गोदया समं
विष्णुचित्तसुमतिः सुखी किमु ॥ १४१

भट्टनाथदुहितुस्त्वमन्तिकात्
आगता मम विषण्णमाशयम् ।
नन्दयस्यनुपमाङ्गि साम्प्रतं
तादृगागमनकारणं वद ॥ १४२

रङ्गिणैवमनुरागिणेरिता
सा बभाण सह गोदया सुखी ।
देव तावकदयाविशेषतो
विष्णुचित्तसुमतिः समेधते ॥ १४३

स्वालकोदरनिवासवासितां
प्राभृतं प्रणतिभिः सह स्रजम् ।
प्राहिणोदथ च सन्दिदेश सा
मन्मुखात् प्रणयनिर्भरं वचः ॥ १४४

एकदा निशि विहारसंस्तरे
यस्त्वयाऽक्रियत सङ्गमोत्सवः ।
सोऽद्य नाल्पदिवसैर्व्यथामयो
रङ्गनायक मयाऽनुभूयते ॥ १४५

त्वद्वियोगजनितोग्रवेदना-
नोदनाय सहसा सखीजनैः ।
कल्पितप्रसवतल्पशायिनी
चम्पकोपवनसीम्नि ताम्यति ॥ १४६

या सरोजनयना शुचिस्मिता ।
वासवेभपतिमस्तकस्तनी ।
वल्लकीस्वनमनोज्ञभाषिणी
फुल्लपद्मरुचिधूर्वहानना ॥ १४७

या प्रसृत्वरविशालभास्वर-
स्फारवीक्षणपुरस्कृतस्वना ।
सान्द्रयौवनविधूदयोल्लस
त्कान्तिसिन्धुजलजाभकन्धरा ॥ १४८

सा स्मरस्य महिमाब्धिचन्द्रिका
चक्षुषोरमृतवर्तिका नृणाम् ।
अङ्गनानिवहशिल्पकल्पना-
नैपुणी सफलता स्वयम्भुवः ॥ १४९

साद्य बाष्पसलिलाविलेक्षणा
स्वान्ततान्तिविगतस्मिताङ्कुरा ।
दुःसहालघुवियोगपावक-
ज्वालदग्धकुचहारमौक्तिका ॥ १५०

उत्कहंसरवगद्गदस्वरा
दुःशकश्वसितदूषितानना ।
कामभूपतिनिशातसायक-
स्तोमनिर्घृणनिशातविग्रहा ॥ १५१

विप्रयोगशिखितापशोषतो
बुद्बुदामलमृणालभूषणा ।
देव तावकपदाम्बुजेप्सया
प्रासवैः प्रहरमाणमायुधैः ॥ १५२

प्राञ्जलिः प्रणवपूर्वया गिरा
याचते मम सखी मनोभुवम् ।
नाथ कौसुमपरागमण्डलैः
केलिवेश्म विरचय्य मे सखी ॥ १५३

तद्विलोपविधयेऽभिवाञ्छति
　　त्वत्समागमं उदारविभ्रमा ।
यां पुरा समवलम्ब्य भावनां
　　त्वामयुर्यदुधुरीणगोपिकाः ॥　　१५४

तां तदा कृतिमपि प्रपद्य सा
　　त्वत्पदाब्जमधुना युयुक्षते ।
तत्र कुन्दतरुश्रृङ्गसङ्गतं
　　त्वां विभाव्य भगवन् सरस्तटे ॥　　१५५

अञ्जलिं शिरसि सा निबध्नती
　　याचते त्वदपनीतमंशुकम् ।
तत्र सास्रनयना कथञ्चन
　　त्वत्समागममहोत्सवोत्सुका ॥　　१५६

मौक्तिकेन विरचय्य मण्डलं
　　सङ्गमाख्यशकुनं निरीक्षते ।
वक्ति सा प्रति वनप्रियान् प्रियस्या-
　　गमार्थमिह कूजताद्य मे ॥　　१५७

सत्फलान्युपहराम्यतो वना-
　　दन्यथा यदि विवासयेय वः ।
अन्वभाविषत तत्र सुप्तया
　　गोदया तव करग्रहक्रियाः ॥　　१५८

कौतुकग्रथनलाजमोचन-
ग्रावपादविनिवेशनादयः ।
प्रेक्ष्य हंसमधिवापि कौतुकात्
पाञ्चजन्यमनसा तु पृच्छति ॥ १५९

पद्मगन्धि घनसारगन्धि वा
स्वादु किञ्च महितं प्रियाननम् ।
अम्बुवाहनिकुरुम्बमम्बरे
वीक्ष्य देव तव कान्ति सुन्दरम् ॥ १६०

हन्त सन्दिशति जातकौतुका
स्वां दशां कथयितुं तवाग्रतः ।
रङ्गिकेल्युपवनेषु वेङ्कटा-
रामभूधरमुखेषु धामसु ॥ १६१

मां वियोगपरिदूनमानसां
न्यस्ततेत्यभिदधाति सा सखी ।
कम्बुना निजकराग्रवर्तिना
रङ्गराडपरितृप्तमानसः ॥ १६२

मामकं च करकम्बुमीहते
यद्युपैतु मम गोचरं दृशोः ।
सागरावृतधरात्रिविष्टप-
त्राणशासनकलापरायणः ॥ १६३

अद्य रङ्गधनिकः स मामकात्
　　कङ्कणं कथमपाहरत् करात् ।
वामनत्वमधिगम्य रङ्गराट्
　　कङ्कणं बलिकराद्यदग्रहीत् ॥　　१६४

अप्रभूतमिति तद्विचिन्तयन्
　　याचतेऽद्य मम पाणिकङ्कणम् ।
राघवो जनकनन्दिनीकृते
　　बद्धसिन्धुरभिहत्य राक्षसान् ॥　　१६५

तामलब्ध पुनरीदृशः कथं
　　नास्मरन्मम स रङ्गनायकः ।
मज्जतीं प्रलयसागरे भुवं
　　यः समेत्य च निकृष्टदंष्ट्रिताम् ॥　　१६६

रक्षति स्म समुदंच्य सोऽद्य मां
　　शोकसागरगतां न मन्यते ।
उद्विपक्षशिशुपाल सन्निधौ
　　रुक्मिणीमपहरन् पुरा बलात् ॥　　१६७

कामिनीषु सघृणोऽपि मां कथं
　　रङ्गभूपतिरसौ उपेक्षते ।
दन्तिगौतम वधूविभीषण-
　　द्रौपदीप्रभृतिदीनरक्षिणः ॥　　१६८

रङ्गनेतुरमलं यशो मया
दीनयाद्य मलिनीकरिष्यते ।
यत्त्वदीयविरहे न जीवितुं
शक्नुयां कथमपीत्युदीर्य च ॥ १६९

नास्मरन्मम चिरं स रङ्गराट्
तद्द्विजिह्वशयनीयसंस्तरात् ।
इत्युदीर्य वचसां निबन्धनं
देव सा त्वदनुरागसूचकम् ॥ १७०

रङ्गराज भवदङ्घ्रिलिप्सया
कण्ठवर्ति न जहाति जीवितम् ।
तन्निशम्य वचनं तयोदितं
तद्दशाप्रणयभङ्गिसूचकम् ॥ १७१

खेदमोदविवशीकृताशयः
प्रत्युवाच भगवाननुग्रहाम् ।
पञ्चभिः प्रसवसायकैः स्मरो
मां त्वदालिहृदये न केवलम् ॥ १७२

अत्र च प्रहरतीति यत्ततः
त्वत्सखीद्विगुणितैव मे व्यथा ।
त्वत्सखीं मनसि भावयन्नहं
भृङ्गकीटविधिना तादाकृतिः ॥ १७३

आसमद्य न हि चेदसून् कथं
धारयेयमबलां विनापि ताम् ।
कापि गोपवनिता विचिन्त्य मां
प्रागसून् व्यसृजदद्य तत्फलम् ॥ १७४

त्वत्सखीं मनसि भावयन्नहो
तादृशीमनुभवाम्यहं दशाम् ।
पश्य बालहरिणाक्षि यत्पुरा
मामकं प्रकृतिमेचकं वपुः ॥ १७५

तद्वियोगसमये विपाण्डरं
याति चन्द्रकितपुष्करद्युतिम् ।
तादृशोऽपि मम पञ्च हेतय-
स्तन्वि पञ्चविशिखीं मनोभुवः ॥ १७६

नो विजेतुमशकन् यदस्य तत्
तत्कटाक्षपरमाणुवैभवः ।
चन्द्रिकादिचकितं मनस्तनो-
र्मामकीनममुमुक्षदप्यसून् ॥ १७७

नाजिहास दयितां कदापि य-
ज्जीवितादपि हि सा गरीयसी ।
दक्षिणानलमनन्यजानल-
प्रौढिहेतुमपि मामकं वपुः ॥ १७८

आलिलिङ्क्षति तत्कचस्फुरन्
मालिकाभरसुगन्धभागिति ।
तन्वि तत्कचभरोज्झिता स्फुरत्-
केसरा स्रगियमातनोति मे ॥ १७९

उल्लसत्फुलकजालतङ्गजा-
वल्लरीमृदुनिवेशविभ्रमम् ।
कौमुदी नयनयो रसायनं
चेतसो न वसुधा च वर्ष्मणः ॥ १८०

कारणं किमपि जीवितस्य मे
मौलिदाम तदुपायनीकृतम् ।
लिप्सवः श्रुतिसुधाभिवर्षिणीं
गेयभङ्गिमचिरात्पराङ्कुशात् ॥ १८१

मूर्तयोऽधिकुरुकापुरं ममा-
यान्तु साष्टशतधामधूर्वहाः ।
चारुभाषिणि सरः पुरःसरा
तत्र भक्तिपरिषद्गमिष्यति ॥ १८२

गोदया तव वयस्यया समं
विष्णुचित्तविबुधोऽपि यास्यति ।
मादृशां तव सखीदशामपि
प्रेक्ष्य तत्र परमार्थवेदिनी ॥ १८३

आवयोः सपदि संयुयुक्षया
    मन्त्रयेत्किमपि भक्तमण्डली ।
भट्टनाथशठकोपपद्मभू-
    मुख्यतद्गुरुसमूहशासनात् ॥  १८४

प्रस्तुतेऽधिकुरुकं स्वयंवरे
    तत्करग्रहमहो भविष्यति ।
इत्युदीर्य भगवाननुग्रहां
    तन्मुदे मृगमदाभिमोदिनीम् ।
हल्लकस्रजमनुत्तमामदात्
    अङ्गुलीयमपि नाममुद्रितम् ॥  १८५

रङ्गाधिपस्य वचनं परिगृह्य साकं
    मुद्राङ्गुलीयनवहल्लकमालिकाभ्याम् ।
गत्वाम्बुदालिरिव गां शुचिकालतप्तां
    आलिं समाश्वसितुमारभत स्मरार्ताम् ॥  १८६

अथ सपदि गृहीत्वानुग्रहायाः सकाशात्
    सह सकलमुदन्तं लक्ष्मणा रङ्गनेतुः ।
समयमपि तदीयं वीक्ष्यमाणाऽस्त गोदा
    दिवसपरिबृढस्य प्रोद्गमं पद्मिनीव ॥  १८७

श्रीविष्णुचित्तविबुधो दुहितुः समीक्ष्य
    पत्त्रायुधाभ्युदयपल्लवितं वयश्च ।

भावं च कन्दलितरागभरं मुकुन्दे
तस्मै पुनर्भगवते तनयामदित्सत् ॥ १८८

स ज्यायसा शठजितानुमतस्तदग्रे
गोदाकरग्रहमहोत्सवमानिनंुः ।
पण्ड्येश्वरेण सह वल्लभदेवनाम्ना
शिष्येण च स्वसुतया कुरुकां प्रतस्थे ॥ १८९

तत्राग्रजस्य वकुलाभरणस्य सोऽङ्घ्रौ
साकं नृपेण सुतया च मुदा न्यनंसीत् ।
अन्वग्रहीत्तदनु तां नयनाञ्चलेन
सोऽपि प्रभूतकरुणावरुणालयेन ॥ १९०

तत्र प्रभूत वकुलाभरणप्रणीत-
कर्णामृतद्रविडसूक्तिनिबन्धलिप्सून् ।
अर्चाकृतीनुपगतानपनिद्रचिञ्चा-
शाखान्तरालनिलयान् स हरीनपश्यत् ॥ १९१

अर्चाकृतीनभिविवन्दिषया मुकुन्दान्
तत्रागतान्महितरङ्गधुरीणमुख्यान् ।
आयान्तमैक्षत स विष्णुपदे सुराणां
बृन्दे विरिञ्चिपुरुहूतपुरःसराणाम् ॥ १९२

कासार-भूत-महदाह्वय-भक्तिसार-
भक्ताङ्घ्रिरेणु-कुलशेखरयोगिवाहान् ।

आसाद्य तत्र कवितामधुरेण युक्ता-
नन्योन्यवन्दनमहोत्सवमन्वभूत्सः ॥ १९३

भक्ताः सरःप्रभृतयोऽपि पराङ्कुशस्य
पादारविन्दयुगले प्रणिपत्य भक्त्या ।
अश्रौषुरस्य चतुरांश्चतुरः प्रबन्धान्
अश्रावयन् पुनरमुं च निजप्रबन्धान् ॥ १९४

साकं सरःप्रमुखभक्तगणैः शठारिः
गोदाकृतं कृतियुगं सरसं निशम्य ।
वीक्ष्याननन्द विषमेषुसखं वयोऽस्याः
दीनां दशां च हृदयं मुरवैरिसक्तम् ॥ १९५

अर्चावतारहरिमुख्यवराय दातुं
गोदां स्वयंवरविधानमहोत्सवेन ।
सत्संविधानकृतये मधुरं कवीन्द्रं
राज्यादिशच्छठरिपुः सह वल्लभेन ॥ १९६

आज्ञापितौ शठजिता मणिमण्टपं तौ
प्रालम्बचामरविचित्रवितानरम्यम् ।
सौवर्णसाष्टशतमञ्चमहःप्ररोह-
नीराजिताखिलदिगन्तममू व्यधाताम् ॥ १९७

यत्रोत्सवोचितसमस्तपदार्थजातं
सम्पाद्य तौ सकलभूतलधामदेवैः ।

साकं समस्तनृपतीन् हरिभक्तबृन्दैः
पाराङ्कुशं पुरमनीनयतां ऋषींश्च ॥ १९८

भुव्यानकेन सुरदुन्दुभयः प्रणेदुः
वाराङ्गनाभिरमरीपरिषन्ननर्त ।
गानैः समं नभसि किन्नरगीतिरीतिः
प्रीतिः समाऽजनि नृणां च तदा सुराणाम् ॥

अर्चाकृतीन्मधुरिपूनथ रङ्गिमुख्यान्
मञ्चेषु तौ मणिमरीचिनिचोलितेषु ।
भक्त्या निवेश्य परया सकलां सपर्यां
तेषां यथोचितमुदारमुभावकार्ष्टाम् ॥ २००

श्रीविष्णुचित्ततनया अलमकारि ताभ्यां
वैवाहिकैर्मणिमयाभरणप्रकाण्डैः ।
वासन्तिकेव कुसुमैर्मधुमाधवाभ्यां
व्योमस्थलीव किरणैर्विधुभास्कराभ्याम् ॥ २०१

अग्रे श्रिया पितृगणैः शठकोपमुख्यैः
पश्चाद् वृता च विमलामुखमातृवर्गैः ।
सानुग्रहाभिरखिलालिभिरात्तपार्श्वा
गोदा स्वयंवरणमण्टपमाससाद ॥ २०२

मञ्चान्तरालनिलयं मधुवैरिबृन्दं
गोदासखः शठरिपुः प्रणिपत्य भक्तैः ।

तत्रावलम्ब्य करपल्लवमात्मजायाः
　　तस्यै न्यवेदयदमूनवलोकयेति ॥　　२०३

वत्से स्वयंवरविधेः तव वत्सलत्वाद्
　　वैकुण्ठदिव्यनगरादपि दुग्धसिन्धोः ।
सान्तःपुरौ ससुरसूरिमुनीश्वरौ तौ
　　प्रत्यक्षिताविह पुरः पुरुषः प्रधानौ ॥　　२०४

चोलागतान्दशगुणांश्चतुरश्च पाण्ड्या-
　　दष्टादशापि दशकेरलतस्त्रिभिश्च ।
मध्यादुभौ ह्यधिकविंशदवेहि विष्णून्
　　तोण्डीरतश्च दश सैकमिहोत्तरा त्वम् ॥　　२०५

एकं वृणीष्व वरमेष्विति तान्निगद्य
　　पूर्वं समीरितसमस्तगुणापदानान् ।
अस्यै प्रदर्शय यथाक्रममम्बुजाक्षान्
　　इत्यादिदेश स शठारिरनुग्रहां ताम् ॥　　२०६

आज्ञां सरः शठजितादिगुरुव्रजाना -
　　मादाय सप्रणयमालिरनुग्रहाख्या ।
अस्यै क्रमादखिलधामनिकेतनाना-
　　माख्यातुमारभत वैभवमच्युतानाम् ॥　　२०७

पत्ये समस्तमरुतां प्रथमं प्रणम्य
　　रङ्गेन्दवे प्रियसखीं परिगृह्य पश्चात् ।

सा तत्तदच्युतसमीपमुपेत्य तेषां
वेषापदानपुरनामगुणानभाणीत् ॥ २०८

तांश्चातिलङ्घ्य सकलानरविन्दनाभान्
श्रीरङ्गनायकमवाप मुदा सुरूपम् ।
उल्लङ्घ्यफुल्लकुमुदोत्पलहल्लकादीन्
हंसीव नव्यमरविन्दमरालकेशी ॥ २०९

सोयं पुरः सुमुखि सह्यसुतान्तरीप-
श्रीरङ्गधामपतिसौम्यवराधिराजः ।
तत्तादृशां परिणतिस्तपसां विधातुः
इक्ष्वाकुवंशधनमिष्टफलप्रदाता ॥ २१०

पारे सुधाकरसरः प्रणवात्मरङ्ग-
धामान्यनन्तफणिभोगपरार्ध्यमञ्चे ।
स्वापं प्रबोधमिलितं कलयन्सलीलं
योगेन भोगविभवानुभवं विधत्ते ॥ २११

वैकुण्ठतः प्रथममाविरभूदवन्यां
योऽर्चावतारमुरवैरिकदम्बकेषु ।
तारागणेषु विधुरद्रिषु रत्नसानू-
रत्नेषु कौस्तुभ इवावहते प्रकाशम् ॥ २१२

कस्तूरिकाकलितपुण्ड्रमुखेन्दुचिह्नं
कल्हारदामकमनीयभुजान्तरालम् ।

कन्दर्पदर्पहररूपमुदारहासं
कान्तेऽनुमन्त्रय करार्पणतत्वमेनम् ॥ २१३

यं सूक्तिदामभिरुपांशु पुराऽवृणीथाः
लावण्यरूपगुणरागवयोऽनुरूपम् ।
अग्रेऽधुना मुरभिदामिषुपुष्पदाम्ना
तादृक्षमिन्दुमुखि रङ्गपतिं वृणीष्व ॥ २१४

सानन्दबाष्पमकरन्दमुदग्रपक्ष्म-
किञ्जल्कमुज्वलविलोलकनीनिकालि ।
पूर्वं न्यधत्त नयनोत्पलदाम गोदा
रङ्गेश्वरे स्वकरहल्लकदाम पश्चात् ॥ २१५

गीर्वाणबृन्दकृतकल्पकपुष्पवृष्ट्या
साकं सरःप्रभृतिसम्मदबाष्पवृष्ट्या ।
दृष्ट्या च केशवगणस्य पपात रङ्गि-
कण्ठे तदीयकरहल्लकदामयष्टिः ॥ २१६

गोदार्पिताभिनवहल्लकमालयास्य
वक्षस्थलं विपुलमश्नुत रङ्गभर्तुः ।
बालांशुमत्किरणकन्दलसम्प्रदायात्-
ऊर्जस्वलस्य सुषुमां गगनाङ्गणस्य ॥ २१७

तस्याः पाणिग्रहणविषये विष्णुबृन्दानि वेधो-
मुख्या देवाः कमलजमुखांस्तान्पुरस्कृत्य भक्ताः ।

ताक्ष्यारूढं सह तनयया विष्णुचित्तस्य जग्मुः
श्रीरङ्गेशं शठरिपुगृहप्रेप्सया राजमार्गम् ॥ २१८

मुक्ताच्छत्रं फणिपतिरधाद्गन्धवाहाम्बुनाथौ
शुद्धां वालव्यजनयुगलीमुज्वले तालवृन्ते ।
चन्द्रादित्यौ हरशतमखौ तोत्रवेत्रे कलाचीं
यक्षेशोऽपि प्रथितगरुडाधिष्टिते रङ्गराजे ॥ २१९

अथ प्रतिद्वारवितर्दिभाग-
निविष्टजाम्बूमदपूर्णकुम्भम् ।
मन्दारपुष्पस्तबकाचिताभिः
मनोहरं वन्दनमालिकाभिः ॥ २२०

प्रासादबन्धोच्छ्रितकेतुमालं
प्रत्युग्रपुष्पप्रकरावकीर्णम् ।
निःसाणतूर्यानकशङ्खभेरी-
निस्वाननीरन्ध्रितसौधभागम् ॥ २२१

प्रसिच्यमानं हिमवारिपूरैः
प्रलम्बमुक्ताकलिकानुविद्धम् ।
नानामणिश्रेणिमहःप्ररोह-
प्रदर्शितानेकमहेन्द्रचापम् ॥ २२२

रङ्गाधिराजे कुरुकापुरस्य
मनोज्ञमासेदुषि राजमार्गम् ।

तदा तदालोकनलोलुपानां
　　वामभ्रुवां कश्चन विभ्रमोऽभूत् ॥　　२२३

ताटङ्कितैकश्रवणा प्रयान्ती
　　न्यस्ताञ्जनैकेक्षणपङ्कजैका ।
एकाङ्घ्रिणाऽङ्गीकृतपादुकाभूत्
　　अनङ्गसीमास्थितिकारिणीव ॥　　२२४

प्रासादवातायनमारुरुक्षुः
　　काचित्प्रविष्टं मणिभित्तिभागे ।
पर्याकुला स्वप्रतिबिम्बमेव
　　समाललम्बे परिचारबुद्ध्या ॥　　२२५

अन्या तदालोकनपारवश्यात्
　　आत्मीयवक्त्रप्रतिबिम्बभाजि ।
अग्राङ्गुलीसङ्गतमात्मदर्शे
　　कस्तूरिकाचित्रकमाततान ॥　　२२६

हस्तोद्धृतालक्तकपङ्कयाऽन्या
　　कयापि सैरन्ध्रिकया पुरन्ध्री ।
गृहीतपादा प्रतिपाद्य तस्यै
　　प्रायादशोकद्रुमदोहदं सा ॥　　२२७

नितम्बबिम्बावगलद्दुकूला
　　निर्मुक्तबन्धाकुलकेशपाशा ।

जगाम गोविन्दपरायणाऽन्या
दुःखं विनापि द्रुपदात्मजाभाम् ॥ २२८

आतन्वती हंसकमंसभागे
केयूरमङ्घ्रौ रशनां च कण्ठे ।
मुक्ताकलापं जघने च काचित्
विभूषणव्यत्ययमाचचार ॥ २२९

विस्रस्तधम्मिल्लभराच्चलन्त्याः
पुष्पावलिर्निष्पतिता धराङ्के ।
कस्याश्चिदासीत्सहसा व्रजेति
पुष्पेषुणा मुक्तशरच्छटेव ॥ २३०

अस्मै विदीर्यालकदाम गोदा
प्रापेदृशं भाग्यमितीर्ष्ययेव ।
सौधाधिरोहश्लथकेशमुक्त-
माल्यच्छलात्कापि हरेः पुरोऽभात् ॥ २३१

कस्तूरिकापुण्ड्रकलङ्कितानां
सुजातमन्दस्मितचन्द्रिकाणाम् ।
छन्नो वधूवक्त्रसुधाकराणां
गणैरभूत्सौधगवाक्षमार्गः ॥ २३२

अहासिषुः साकमरागकृत्यैः
अपत्रपां रङ्गिविलोकनोत्काः ।

आचारलाजानकिरन्समन्तात्
　　साकं मृगाक्ष्यः करकङ्कणेन ॥　　　　२३३

रङ्गेन्दुसन्दर्शननिर्निमेष-
　　दृशो न निश्चेतुमलम्बभूवुः ।
नराः सुराः सौधविमानभाजः
　　पुराङ्गनास्तत्र सुराङ्गनाश्च ॥　　　　२३४

त एव गोदागुरवः शठारि-
　　पुरोगभक्ताः खलु भाग्यवन्तः ।
येषां त्रिलोकैकधुरन्धरोऽयं
　　जामतृतां रङ्गपतिर्जगाम ॥　　　　२३५

गोदैव धन्या किल कन्यकासु
　　यामादरात् सम्प्रति पर्यगृह्णात् ।
उपेक्ष्य रङ्गेन्दुररुरोगृहिण्यां
　　पद्मालयायां प्रणयातिरेकम् ॥　　　　२३६

अर्चावतारेषु सुरानतेषु
　　श्रीरङ्गधौरेयक एव धन्यः ।
यं पाणिदामार्पणतोऽवरिष्ट
　　गोदा समक्षं सकलामराणाम् ॥　　　　२३७

स्वाहेव वह्नेर्गिरिजेव शम्भोः
　　छायेव सूर्यस्य शचीव जिष्णोः ।

रतिर्यथा पञ्चशरस्य गोदा
श्रीरङ्गिणः श्रीरिव वल्लभाऽभूत् ॥ २३८

एवंविधाः पौरविलासिनीनां
शृण्वन्कथाः श्रोत्ररसायनानि ।
सम्मानयंस्ताश्च कटाक्षपातैः
शठारिवेश्मान्तिकमाससाद ॥ २३९

सौधस्थिताभिः प्रतिरङ्गराजं
विमुक्तमिन्दीवरलोचनाभिः ।
कदम्बकं कौसुमकन्दुकानां
अपाकरोत्ताक्ष्यगरुत्समीरः ॥ २४०

ताक्ष्याधिरूढस्य हरेस्तदात्वे
पराङ्कुशाग्रेसरभक्तलोकः ।
कर्पूरनीराजनमङ्गलादिं
भक्त्या सपर्याविधिमाचचार ॥ २४१

रङ्गेन्दुरालम्ब्य करं हरस्य
स्कन्धात् सुपर्णस्य तदावतीर्णः ।
धात्रा कृतस्वस्त्ययनः स भेजे
शठारिणा दर्शितवर्त्म सद्म ॥ २४२

अनेकरम्भाक्रमुकाभिरामं
आबद्धमुक्ताफलमञ्जरीकम् ।

रङ्गेन्दुरारोपितरत्नदीपं
　वैवाहिकं मण्टपमाससाद ॥　२४३

आलम्बमुक्ताकलिकाप्रभाभिः
　आम्रेडित क्षौमवितानशोभाम् ।
चतुष्कवेदिं शठजिन्निनाय
　स भद्रपीठां सह गोदया तम् ॥　२४४

शुभे मुहूर्ते सुरमन्त्रिक्लृप्ते
　पुण्योदक प्रोक्षितचारुमूर्त्योः ।
पितामहः सादरमाबबन्ध
　तयोः शये कौतुकमाशये च ॥　२४५

स सत्कृतः पद्मभवः पुरोधाः
　कृशानुमादाय घृतेन हुत्वा ।
वधूवरौ तस्य च सन्निधाने
　संयोजयामास समानुरागौ ॥　२४६

करं गृहीत्वा सुदृशः करेण
　रङ्गाधिपः सातिशयं रराज ।
स्पृष्ट्वा यथा चण्डकरः करेण
　सरोरुहिण्याः शतपत्रकोशम् ॥　२४७

रराज पाणिग्रहणप्रसङ्गे
　तयोः करात् स्वेदपयःकणालिः ।

अन्योन्यरागव्यतिहारक्लृप्तः
धारेव वारां मदनेन दत्ता ॥ २४८

कुतूहलात्पूर्वमुदञ्चितानि
पश्चात् त्रपाभारनिकुञ्चितानि ।
विरेजुराविष्कृतविभ्रमाणि
तयोस्तदान्योन्यविलोकनानि ॥ २४९

जायापती हव्यवहं ज्वलन्तं
प्रदक्षिणं तौ बभतुश्चरन्तौ ।
प्रातः प्रबुद्धं परितोऽरविन्दं
कृतप्रचाराविव राजहंसौ ॥ २५०

धात्रा प्रयुक्ता परिणेतृपाणि-
स्थितेन गोदा करसम्पुटेन ।
अमन्दमन्दाक्षविवर्तिताक्षी
चकार सप्तार्चिषि लाजहोमम् ॥ २५१

शिखावतो लाजविमोक्षकाले
धूमावलिः प्राज्यहविस्सुगन्धिः ।
मुहूर्तमापद्यत कातराक्ष्याः
मुखारविन्दे भ्रमरालिशोभाम् ॥ २५२

स चोदितः शङ्करवासवाभ्यां
अश्मानमारोपयति स्म तस्याः ।

## श्रीगोदाकल्याणम्

श्रीविष्णुचित्तकुलनन्दनकल्पवल्लीं
श्रीरङ्गराजहरिचन्दनयोगदृश्याम् ।
साक्षात् क्षमां करुणया कमलामिवान्यां
गोदां अनन्यशरणः शरणं प्रपद्ये ॥

दोर्भिश्चतुर्भिश्चरणं चिकीर्षुः
　　प्रायः स्वहृत्कौस्तुभसङ्गयोग्यम् ॥　　२५३

इत्थं स गोदां परिणीय रङ्गी
　　स्तुतो हरब्रह्ममुखैरमर्त्यैः ।
यथा विरेजे न तथा पयोधेः
　　अवाप्य लक्ष्मीं मरुतां समक्षम् ॥　　२५४

इति दिव्यसूरिचरितात् सङ्कलितं श्रीगोदाकल्याणं सम्पूर्णम् ।

॥ श्रीः ॥

शुभं अस्तु

# * श्रीरुक्मिणीकल्याणम् *

(श्रीमद्भागवतात् उद्धृतम् )

श्रीशुक उवाच—

राजाऽऽसीद् भीष्मको नाम विदर्भाधिपतिर्महान् ।
तस्य पञ्चाभवन् पुत्राः कन्यैका च वरानना ॥ १

रुक्म्यग्रजो रुक्मरथो रुक्मबाहुरनन्तरः ।
रुक्मकेशो रुक्ममाली रुक्मिण्येषां स्वसा सती ॥ २

सोपश्रुत्य मुकुन्दस्य रूपवीर्यगुणश्रियः ।
गृहागतैर्गीयमानाः तं मेने सदृशं पतिम् ॥ ३

तां बुद्धिलक्षणौदार्यरूपशीलगुणाश्रयाम् ।
कृष्णश्च सदृशीं भार्यां समुद्वोढुं मनो दधे ॥ ४

बन्धूनामिच्छतां दातुं कृष्णाय भगिनीं नृप ।
ततो निवार्य कृष्णद्विड् रुक्मी चैद्यममन्यत ॥ ५

तदवेत्यासितापाङ्गी वैदर्भी दुर्मना भृशम् ।
विचिन्त्याप्तं द्विजं कञ्चित् कृष्णाय प्राहिणोद् द्रुतम् ॥ ६

द्वारकां स समभ्येत्य प्रतीहारैः प्रवेशितः ।
अपश्यदाद्यं पुरुषं आसीनं काञ्चनासने ॥ ७

दृष्ट्वा ब्रह्मण्यदेवस्तमवरुह्य निजासनात् ।
उपवेश्यार्हयाञ्चक्रे यथाऽऽत्मानं दिवौकसः ॥ ८

तं भुक्तवन्तं विश्रान्तं उपगम्य सतां गतिः ।
पाणिनाभिमृशन् पादावव्यग्रस्तमपृच्छत ॥  ९
कच्चिद् द्विजवर श्रेष्ठ धर्मस्ते वृद्धसम्मतः ।
वर्तते नातिकृच्छ्रेण संतुष्टमनसः सदा ॥  १०
सन्तुष्टो यर्हि वर्तेत ब्राह्मणो येन केन चित् ।
अहीयमानः स्वाद् धर्मात् स ह्यस्याखिलकामधुक् ॥ ११
असन्तुष्टोऽसकृल्लोकानाप्नोत्यपि सुरेश्वरः ।
अकिञ्चनोपि सन्तुष्टः शेते सर्वाङ्गविज्वरः ॥  १२
विप्रान् स्वलाभसंतुष्टान् साधून् भूतसुहृत्तमान् ।
निरहङ्कारिणः शान्तान् नमस्ये शिरसासकृत् ॥  १३
कच्चिद् वः कुशलं ब्रह्मन् राजतो यस्य हि प्रजाः ।
सुखं वसन्ति विषये पाल्यमानाः स मे प्रियः ॥  १४
यतस्त्वमागतो दुर्गं निस्तीर्येह यदिच्छया ।
सर्वं नो ब्रूह्यगुह्यं चेत् किं कार्यं करवाम ते ॥ १५
एवं सम्पृष्टसम्प्रश्नः ब्राह्मणः परमेष्ठिना ।
लीलागृहीतदेहेन तस्मै सर्वमवर्णयत् ॥  १६

रुक्मिण्युवाच—

श्रुत्वा गुणान् भुवनसुन्दर शृण्वतां ते
निर्विश्य कर्णविवरैर्हरतोऽङ्गतापम् ।
रूपं दृशां दृशिमतामखिलार्थलाभं
त्वय्यच्युताविशति चित्तमपत्रपं मे ॥  १७

का त्वां मुकुन्द महती कुलशीलरूप-
विद्यावयोद्रविणधामभिरात्मतुल्यम् ।
धीरा पतिं कुलवती न वृणीत कन्या
काले नृसिंह नरलोकमनोऽभिरामम् ॥ १८

तन्मे भवान् खलु वृतः पतिरङ्ग जायां
आत्मार्पितश्च भवतोऽत्र विभो विधेहि ।
मा वीरभागमभिमर्शतु चैद्य आरात्
गोमायुवन्मृगपतेर्बलिमम्बुजाक्ष ॥ १९

पूर्तेष्टदत्तनियमव्रतदेवविप्र-
गुर्वर्चनादिभिरलं भगवान् परेशः ।
आराधितो यदि गदाग्रज एत्य पाणिं
गृण्हातु मे न दमघोषसुतादयोऽन्ये ॥ २०

श्वो भाविनि त्वमजितोद्वहने विदर्भान्
गुप्तः समेत्य पृतनापतिभिः परीतः ।
निर्मथ्य चैद्यमगधेन्द्रबलं प्रसह्य
मां राक्षसेन विधिनोद्वह वीर्यशुल्काम् ॥ २१

अन्तःपुरान्तरचरीमनिहत्य बन्धून्
त्वामुद्वहे कथमिति प्रवदाम्युपायम् ।
पूर्वेद्युरस्ति महती कुलदेवियात्रा
यस्यां बहिर्नववधूः गिरिजामुपेयात् ॥ २२

यस्याङ्घ्रिपङ्कजरजःस्नपनं महान्तो
वाञ्छन्त्युमापतिरिवात्मतमोऽपहत्यै ।
यर्ह्यम्बुजाक्ष न लभेय भवत्प्रसादं
जह्यामसून् व्रतकृशाञ्छतजन्मभिः स्यात्॥ २३

ब्राह्मण उवाच—

इत्येते गुह्यसन्देशा यदुदेव मयाऽऽहृताः ।
विमृश्य कर्तुं यच्चात्र क्रियतां तदनन्तरम् ॥ २४
वैदर्भ्याः स तु सन्देशं निशम्य यदुनन्दनः ।
प्रगृह्य पाणिना पाणिं प्रहसन्निदमब्रवीत् ॥ २५

श्रीभगवानुवाच—

तथाहमपि तच्चित्तः निद्रां च न लभे निशि ।
वेदाहं रुक्मिणा द्वेषान्ममोद्वाहो निवारितः ॥ २६
तामानयिष्य उन्मथ्य राजन्यापसदान्मृधे ।
मत्परामनवद्याङ्गीमेधसोऽग्निशिखामिव ॥ २७

श्री शुक उवाच—

उद्वाहर्क्षं च विज्ञाय रुक्मिण्याः मधुसूदनः ।
रथः संयुज्यतामाशु दारुकेत्याह सारथिम् ॥ २८
स चाश्वैः शैव्यसुग्रीवमेघपुष्पबलाहकैः ।
युक्तं रथमुपानीय तस्थौ प्राञ्जलिरग्रतः ॥ २९
आरुह्य स्यन्दनं शौरिः द्विजमारोप्य तूर्णगैः ।
आनर्त्तादेकरात्रेण विदर्भानगमद्धयैः ॥ ३०

राजा स कुण्डिनपतिः पुत्रस्नेहवशं गतः ।
शिशुपालाय स्वां कन्यां दास्यन् कर्माण्यकारयत् ॥ ३१

पुरं सम्मृष्टसंसिक्तमार्गरथ्याचतुष्पथम् ।
चित्रध्वजपताकाभिः तोरणैः समलङ्कृतम् ॥ ३२

स्रग्गन्धमाल्याभरणैः विरजोऽम्बरभूषितैः ।
जुष्टं स्त्रीपुरुषैः श्रीमद्गृहैरगुरुधूपितैः ॥ ३३

पितॄन् देवान् समभ्यर्च्य विप्रांश्च विधिवन्नृप ।
भोजयित्वा यथान्यायं वाचयामास मङ्गलम् ॥ ३४

सुस्नातां सुदतीं कन्यां कृतकौतुकमङ्गलाम् ।
अहतांशुकयुग्मेन भूषितां भूषणोत्तमैः ॥ ३५

चक्रुः सामर्ग्यजुर्मन्त्रैर्वध्वा रक्षां द्विजोत्तमाः ।
पुरोहितोऽथर्वविद् वै जुहाव ग्रहशान्तये ॥ ३६

हिरण्यरूप्यवासांसि तिलांश्च गुडमिश्रितान् ।
प्रादाद् धेनूश्च विप्रेभ्यः राजा विधिविदां वरः ॥ ३७

एवं चेदिपती राजा दमघोषः सुताय वै ।
कारयामास मन्त्रज्ञैः सर्वमभ्युदयोचितम् ॥ ३८

मदच्युद्भिर्गजानीकैः स्यन्दनैर्हेममालिभिः ।
पत्त्यश्वसङ्कुलैः सैन्यैः परीतः कुण्डिनं ययौ ॥ ३९

तं वै विदर्भाधिपतिः समभ्येत्याभिपूज्य च ।
निवेशयामास मुदा कल्पितान्यनिवेशने ॥ ४०

तत्र साल्वो जरासन्धो दन्तवक्त्रो विदूरथः ।
आजग्मुश्चैद्यपक्षीयाः पौण्ड्रकाद्याः सहस्रशः ॥　४१
कृष्णरामद्विषो यत्ताः कन्यां चैद्याय साधितुम् ।
यद्यागत्य हरेत् कृष्णो रामाद्यैर्यदुभिर्वृतः ॥　४२
योत्स्यामः संहतास्तेन इति निश्चितमानसाः ।
आजग्मुर्भूभुजः सर्वे समग्रबलवाहनाः ॥　४३
श्रुत्वैतद् भगवान् रामः विपक्षीयनृपोद्यमम् ।
कृष्णं चैकं गतं हर्तुं कन्यां कलहशङ्कितः　४४
बलेन महता सार्धं भ्रातृस्नेहपरिप्लुतः ।
त्वरितः कुण्डिनं प्रागाद् गजाश्वरथपत्तिभिः ॥　४५
भीष्मकन्या वरारोहा काङ्क्षन्त्यागमनं हरेः ।
प्रत्यापत्तिमपश्यन्ती द्विजस्याचिन्तयत्तदा ॥　४६
अहो त्रियामान्तरित उद्वाहो मेऽल्पराधसः ।
नागच्छत्यरविन्दाक्षः नाहं वेद्म्यत्रकारणम् ॥　४७
सोऽपि नावर्ततेऽद्यापि मत्सन्देशहरो द्विजः ।
अपि मय्यनवद्यात्मा दृष्ट्वा किञ्चिज्जुगुप्सितम् ॥　४८
मत्पाणिग्रहणे नूनं नायाति हि कृतोद्यमः ।
दुर्भगाया न मे धाता नानुकूलो महेश्वरः ॥　४९
देवी वा विमुखी गौरी रुद्राणी गिरिजा सती ।
एवं चिन्तयती बाला गोविन्दहृतमानसा ॥　५०

न्यमीलयत कालज्ञा नेत्रे चाश्रुकलाकुले ।
एवं वध्वाः प्रतीक्षन्त्या गोविन्दागमनं नृप ॥ ५१
वाम ऊरुर्भुजो नेत्रमस्फुरन् प्रियभाषिणः ।
अथ कृष्णविनिर्दिष्टः स एव द्विजसत्तमः ॥ ५२
अन्तःपुरचरीं देवीं राजपुत्रीं ददर्श ह ।
सा तं प्रहृष्टवदनमव्यग्रात्मगतिं सती ॥ ५३
आलक्ष्य लक्षणाभिज्ञा समपृच्छच्छुचिस्मिता ।
तस्या आवेदयत् प्राप्तं शशंस यदुनन्दनम् ॥ ५४
उक्तं च सत्यवचनमात्मोपनयनं प्रति ।
तमागतं समाज्ञाय वैदर्भी हृष्टमानसा ॥ ५५
न पश्यन्ती ब्राह्मणाय प्रियमन्यन्ननाम सा ।
प्राप्तौ श्रुत्वा स्वदुहितुः उद्वाहप्रेक्षणोत्सुकौ ॥ ५६
अभ्ययात्तूर्यघोषेण रामकृष्णौ समर्हणैः ।
मधुपर्कमुपानीय वासांसि विरजांसि सः ॥ ५७
उपायनान्यभीष्टानि विधिवत् समपूजयत् ।
तयोर्निवेशनं श्रीमदुपकल्प्य महामतिः ॥ ५८
ससैन्ययोः सानुगयोरातिथ्यं विदधे यथा ।
एवं राज्ञां समेतानां यथावीर्यं यथावयः ॥ ५९
यथाबलं यथावित्तं सर्वैः कामैः समर्हयत् ।
कृष्णमागतमाकर्ण्य विदर्भपुरवासिनः ॥ ६०

आगत्य नेत्राञ्जलिभिः पपुः तन्मुखपङ्कजम् ।
अस्यैव भार्या भवितुं रुक्मिण्यर्हति नापरा ॥ ६१

असावप्यनवद्यात्मा भैष्म्याः समुचितः पतिः ।
किञ्चित् सुचरितं यन्नस्तेन तुष्टस्त्रिलोककृत् ॥ ६२

अनुगृण्हातु गृह्णातु वैदर्भ्याः पाणिमच्युतः ।
एवं प्रेमकलाबद्धाः वदन्ति स्म पुरौकसः ॥ ६३

कन्या चान्तःपुरात् प्रागाद् भटैर्गुप्ताम्बिकालयम् ।
पद्भ्यां विनिर्ययौ द्रष्टुं भवान्याः पादपल्लवम् ॥ ६४

सा चानुध्यायती सम्यक् मुकुन्दचरणाम्बुजम् ।
यतवाङ् मातृभिः सार्धं सखीभिः परिवारिता ॥ ६५

गुप्तराजभटैः शूरैः सन्नध्दैरुद्यतायुधैः ।
मृदङ्गशङ्खपणवाः तूर्यभेर्यश्च जघ्निरे ॥ ६६

नानोपहारबलिभिः वारमुख्याः सहस्रशः ।
स्रग्गन्धवस्त्राभरणैः द्विजपत्न्यः स्वलङ्कृताः ॥ ६७

गायन्तश्च स्तुवन्तश्च गायका वाद्यवादकाः ।
परिवार्य वधूं जग्मुः सूतमागधवन्दिनः ॥ ६८

आसाद्य देवीसदनं धौतपादकराम्बुजा ।
उपस्पृश्य शुचिः शान्ता प्रविवेशाम्बिकान्तिकम् ॥ ६९

तां वै प्रवयसो बालां विधिज्ञाः विप्रयोषितः ।
भवानीं वन्दयाञ्चक्रुः भवपत्नीं भवान्विताम् ॥ ७०

नमस्ये त्वा अम्बिकेऽभीक्ष्णं स्वसन्तानयुतां शिवाम् ।
भूयात् पतिर्मे भगवान् कृष्णस्तदनुमोदताम् ॥ ७१

अद्भिर्गन्धाक्षतैर्धूपैः वासःस्रङ्माल्य भूषणैः ।
नानोपहारबलिभिः प्रदीपावलिभिः पृथक् ॥ ७२

विप्रस्त्रियः पतिमतीः तथा तैः समपूजयन् ।
लवणापूपताम्बूलकण्ठसूत्रफलेक्षुभिः ॥ ७३

तस्यै स्त्रियस्ताः प्रददुः शेषां युयुजुराशिषः ।
ताभ्यो देव्यै नमश्चक्रे शेषां च जगृहे वधूः ७४

मुनिव्रतमथ त्यक्त्वा निश्चक्रामाम्बिकागृहात् ।
प्रगृह्य पाणिना भृत्यां रत्नमुद्रोपशोभिना ॥ ७५

तां देवमायामिव वीरमोहिनीं
सुमध्यमां कुण्डलमण्डिताननाम् ।
श्यामां नितम्बार्पितरत्नमेखलां
व्यञ्जत्स्तनीं कुन्तलशङ्कितेक्षणाम् ॥ ७६

शुचिस्मितां बिम्बफलाधरद्युति-
शोणायमानद्विजकुन्दकुड्मलाम् ।
पदा चरन्तीं कलहंसगामिनीं
सिञ्जत्कलानूपुरधामशोभिना ॥ ७७

विलोक्य वीरा मुमुहुः समागताः
यशस्विनस्तत्कृतहृच्छयार्दिताः ।

यां वीक्ष्य ते नृपतयस्तदुदारहास-
　　व्रीडावलोकहृतचेतस उज्झितास्त्राः ॥　　७८

पेतुः क्षितौ गजरथाश्वगता विमूढा
　　यात्राच्छलेन हरयेऽर्पयतीं स्वशोभाम् ।
सैवं शनैश्चलयती चलपद्मकोशौ
　　प्राप्तिं तदा भगवतः प्रसमीक्षमाणा ॥　　७९

उत्सार्य वामकरजैरलकानपाङ्गैः
　　प्राप्तान् ह्रियैक्षत नृपान् ददृशेऽच्युतं सा ।
तां राजकन्यां रथमारुरुक्षतीं
　　जहार कृष्णो द्विषतां समीक्षताम् ॥　　८०

रथं समारोप्य सुपर्णलक्षणं
　　राजन्यचक्रं परिभूय माधवः ।
ततो ययौ रामपुरोगमैः शनैः
　　सृगालमध्यादिव भागहृद्धरिः ॥　　८१

तं मानिनः स्वाभिभवं यशःक्षयं
　　परे जरासन्धवशा न सेहिरे ।
अहो धिगस्मान् यश आत्तधन्वनां
　　गोपैर्हृतं केसरिणां मृगैरिव ॥　　८२

इति सर्वे सुसंरब्धा वाहानारुह्य दंशिताः ।
स्वैः स्वैर्बलैः परिक्रान्ता अन्वीयुर्धृतकार्मुकाः ॥　　८३

तानापतत आलोक्य यादवानीकयूथपाः
तस्थुस्तत्संमुखा राजन् विस्फूर्ज्य स्वधनूंषि ते ॥ ८४
अश्वपृष्ठे गजस्कन्धे रथोपस्थे च कोविदाः ।
मुमुचुः शरवर्षाणि मेघा अद्रिष्वपो यथा ॥ ८५
पत्युर्बलं शरासारैश्छन्नं वीक्ष्य सुमध्यमा ।
सव्रीडमैक्षत्तद्वक्त्रं भयविह्वललोचना ॥ ८६
प्रहस्य भगवानाह मा स्म भैः वामलोचने ।
विनङ्क्ष्यत्यधुनैवैतत्तावकैः शात्रवं बलम् ॥ ८७
तेषां तद्विक्रमं वीरा गतसङ्कर्षणादयः ।
अमृष्यमाणा नाराचैर्जघ्नुः हयगजान् रथान् ॥ ८८
पेतुः शिरांसि रथिनामश्विनां गजिनां भुवि ।
सकुण्डलकिरीटानि सोष्णीषाणि च कोटिशः ॥ ८९
हस्ताः सासिगदेष्वासाः करभा ऊरवोऽङ्घ्रयः ।
अश्वाश्वतरनागोष्ट्रखरमर्त्यशिरांसि च ॥ ९०
हन्यमानबलानीका वृष्णिभिर्जयकाङ्क्षिभिः ।
राजानो विमुखा जग्मुः जरासन्धपुरःसराः ॥ ९१
शिशुपालं समभ्येत्य हृतदारमिवातुरम् ।
नष्टत्विषं गतोत्साहं शुष्यद्वदनमब्रुवन् ॥ ९२
भो भोः पुरुषशार्दूल दौर्मनस्यमिदं त्यज ।
न प्रियाप्रिययो राजन् निष्ठा देहिषु दृश्यते ॥ ९३

यथा दारुमयी योषिन्नृत्यते कुहकेच्छया ।
एवमीश्वरतन्त्रोऽयमीहते सुखदुःखयोः ॥　९४

शौरेः सप्तदशाहं वै संयुगानि पराजितः ।
त्रयोविंशतिभिः सैन्यैः जिग्य एकमहं परम् ॥　९५

तथाप्यहं न शोचामि न प्रहृष्यामि कर्हिचित् ।
कालेन दैवयुक्तेन जानन् विद्रावितं जगत् ॥　९६

अधुनापि वयं सर्वे वीरयूथपयूथपाः ।
पराजिताः फल्गुतन्त्रैः यदुभिः कृष्णपालितैः ॥　९७

रिपवो जिग्युरधुना काल आत्मानुसारिणि ।
तदा वयं विजेष्यामो यदा कालः प्रदक्षिणः ॥　९८

एवं प्रबोधितो मित्रैश्चैद्योऽगात् सानुगः पुरम् ।
हतशेषाः पुनस्तेऽपि ययुः स्वं स्वं पुरं नृपाः ॥　९९

रुक्मी तु राक्षसोद्वाहं कृष्णद्विडसहन् स्वसुः ।
पृष्ठतोऽन्वगमत् कृष्णमक्षौहिण्या वृतो बली ॥　१००

रुक्म्यमर्षी सुसंरब्धः शृण्वतां सर्वभूभुजाम् ।
प्रतिजज्ञे महाबाहुः दंशितः सशरासनः ॥　१०१

अहत्वा समरे कृष्णमप्रत्यूह्य च रुक्मिणीम् ।
कुण्डिनं न प्रवेक्ष्यामि सत्यमेतद् ब्रवीमि वः ॥　१०२

इत्युक्त्वा रथमारुह्य सारथिं प्राह सत्वरः ।
चोदयाश्वान् यतः कृष्णस्तस्य मे संयुगं भवेत् ॥　१०३

अद्याहं निशितैर्बाणैः गोपालस्य सुदुर्मतेः ।
नेष्ये वीर्यमिदं येन स्वसा मे प्रसभं हृता ॥ १०४

विकत्थमानः कुमतिरीश्वरस्याप्रमाणवित् ।
रथेनैकेन गोविन्दं तिष्ठ तिष्ठेत्यथाह्वयत् ॥ १०५

धनुर्विकृष्य सुदृढं जघ्ने कृष्णं त्रिभिः शरैः ।
आह चात्र क्षणं तिष्ठ यदूनां कुलपांसन ॥ १०६

कुत्र यासि स्वसारं मे मुषित्वा ध्वाङ्क्षवद्धविः ।
हरिष्येऽद्य मदं मन्द मायिनः कूटयोधिनः ॥ १०७

यावन्न मे हतो बाणैः शयीथाः मुञ्च दारिकाम् ।
स्मयन् कृष्णो धनुश्छित्वा षड्भिर्विव्याध रुक्मिणम्॥१०८

अष्टभिश्चतुरो वाहान् द्वाभ्यां सूतं ध्वजं त्रिभिः ।
स चान्यद् धनुरादाय कृष्णं विव्याध पञ्चभिः ॥ १०९

तैस्ताडितः शरौघैस्तु चिच्छेद धनुरच्युतः ।
पुनरन्यदुपादत्त तदप्यच्छिनदव्ययः ॥ ११०

परिघं पट्टिशं शूलं चर्मासी शक्तितोमरौ ।
यद् यदायुधमादत्त तत्सर्वं सोऽच्छिनद्धरिः ॥ १११

ततो रथादवप्लुत्य खड्गपाणिर्जिघांसया ।
कृष्णमभ्यद्रवत् क्रुद्धः पतङ्ग इव पावकम् ॥ ११२

तस्य चापततः खड्गं तिलशश्चर्म चेषुभिः ।
छित्वा असिमाददे तिग्मं रुक्मिणं हन्तुमुद्यतः ॥ ११३

दृष्ट्वा भ्रातृवधोद्योगं रुक्मिणी भयविह्वला ।
पतित्वा पादयोर्भर्तुरुवाच करुणं सती ॥ ११४

योगेश्वराप्रमेयात्मन् देवदेव जगत्पते ।
हन्तुं नार्हसि कल्याण भ्रातरं मे महाभुज ॥ ११५

तया परित्रासविकम्पिताङ्ग्या
शुचावशुष्यन्मुखरुद्धकण्ठया ।
कातर्यविस्रंसितहेममालया
गृहीतपादः करुणो न्यवर्तत ॥ ११६

चैलेन वध्वाः तमसाधुकारिणं
सश्मश्रुकेशं प्रवपन् व्यरूपयत् ।
तावन्ममर्दुः परसैन्यमद्भुतं
यदुप्रवीरा नलिनीं यथा गजाः ॥ ११७

कृष्णान्तिकमुपव्रज्य ददृशुस्तत्र रुक्मिणम् ।
तथाभूतं हतप्रायं दृष्ट्वा सङ्कर्षणो विभुः ॥ ११८

विमुच्य बद्धं करुणो भगवान् कृष्णमब्रवीत् ।
असाध्विदं त्वया कृष्ण कृतमस्मज्जुगुप्सितम् ॥ ११९

वपनं श्मश्रुकेशानां वैरूप्यं सुहृदो वधः ।
मैवास्मान् साध्वि असूयेथाः भ्रातुर्वैरूप्यचिन्तया ॥ १२०

सुखदुःखदो न चान्योऽस्ति यतः स्वकृतभुक् पुमान् ।
बन्धुर्वधार्हदोषोऽपि न बन्धोर्वधमर्हति ॥ १२१

त्याज्यः स्वेनैव दोषेण हतः किं हन्यते पुनः ।
क्षत्रियाणामयं धर्मः प्रजापतिविनिर्मितः ॥ १२२
भ्रातापि भ्रातरं हन्याद् येन घोरतरस्ततः ।
राज्यस्य भूमेर्वित्तस्य स्त्रियो मानस्य तेजसः ॥ १२३
मानिनोऽन्यस्य वा हेतोः श्रीमदान्धाः क्षिपन्ति हि ।
तवेयं विषमा बुद्धिः सर्वभूतेषु दुर्हृदाम् ॥ १२४
यन्मन्यसे सदाभद्रं सुहृदां भद्रमज्ञवत् ।
आत्ममोहो नृणामेषः कल्प्यते देवमायया ॥ १२५
सुहृद्दुर्हृदुदासीन इति देहात्ममानिनाम् ।
एक एव परो ह्यात्मा सर्वेषामपि देहिनाम् ॥ १२६
नानेव गृह्यते मूढैः यथा ज्योतिर्यथा नभः ।
देह आद्यन्तवानेषः द्रव्यप्राणगुणात्मकः ॥ १२७
आत्मन्यविद्यया क्लृप्तः संसारयति देहिनम् ।
नात्मनोऽन्येन संयोगो वियोगश्चासतः सति ॥ १२८
तद्धेतुत्वात्तत्प्रसिद्धेः दृग्रूपाभ्यां यथा रवेः ।
जन्मादयस्तु देहस्य विक्रिया नात्मनः क्वचित् ॥ १२९
कलानामिव नैवेन्दोः मृतिर्ह्यस्य कुहूरिव ।
यथा शयान आत्मानं विषयान् फलमेव च ॥ १३०
अनुभुङ्क्तेऽप्यसत्यर्थे तथाऽऽप्नोत्यबुधो भवम् ।
तस्मादज्ञानजं शोकमात्मशोकविमोहनम् ।

कल्याणलक्षणयुतं त्रिभङ्गं सिम्हविष्टरे ।
तिष्ठन्तं रुक्मिणीसत्यभामाभ्याञ्च निषेवितम् ॥
ईषत्कुञ्चितवामाङ्घ्रिं सुस्थितेतरमद्भुतम् ।
मेघश्यामं विशालाक्षं पीतकौशेयवाससम् ॥

देवीभुजदढन्यस्तवामहस्तविराजितम् । वामेतरकरासक्तलीलायष्टिमनोहरम् ॥
पूर्णचन्द्राननं देवं मणिस्फुरितकुन्तलम् । बद्धालकधरं सर्वदृष्टिचित्तापहारिणम् ॥
रुक्मिणीं दक्षिणे पार्श्वे सत्यभामामथोत्तरे । समस्तफलदं देवं राजगोपहरिं भजे ॥

तत्वज्ञानेन निर्हृत्य स्वस्था भव शुचिस्मिते ॥ १३१

एवं भगवता तन्वी रामेण प्रतिबोधिता ।
वैमनस्यं परित्यज्य मनो बुद्ध्या समादधे ॥ १३२

प्राणावशेष उत्सृष्टो द्विड्भिर्हतबलप्रभः ।
स्मरन् विरूपकरणं वितथात्ममनोरथः ॥ १३३

चक्रे भोजकटं नाम निवासाय महत् पुरम् ।
अहत्वा दुर्मतिं कृष्णमप्रत्यूह्य यवीयसीम् ॥ १३४

कुण्डिनं न प्रवेक्ष्यामीत्युक्त्वा तत्रावसद् रुषा ।
भगवान् भीष्मकसुतामेवं निर्जित्य भूमिपान् ॥ १३५

पुरमानीय विधिवदुपयेमे कुरूद्वह ।
तदा महोत्सवो नृणां यदुपुर्यां गृहे गृहे ॥ १३६

अभूदनन्यभावानां कृष्णे यदुपतौ नृप ।
नरा नार्यश्च मुदिताः प्रमृष्टमणिकुण्डलाः ।
पारिबर्हमुपाजह्रुः वरयोश्चित्रवाससोः ॥ १३७

सा वृष्णिपुर्युत्तभितेन्द्रकेतुभिः
विचित्रमाल्याम्बररत्नतोरणैः ।
बभौ प्रतिद्वार्युपक्लृप्तमङ्गलैः
आपूर्णकुम्भागुरुधूपदीपकैः ॥ १३८

सिक्तमार्गा मदच्युद्भिराहूतप्रेष्ठभूभुजाम् ।
गजैर्द्वास्सु परामृष्टरम्भापूगोपशोभिता ॥ १३९

कुरुसृञ्जयकैकेयविदर्भयदुकुन्तयः ।
मिथो मुमुदिरे तस्मिन् सम्भ्रमाद् परिधावताम् ॥ १४०

रुक्मिण्याहरणं श्रुत्वा गीयमानं ततस्ततः ।
राजानो राजकन्याश्च बभूवुः भृशविस्मिताः ॥ १४१

द्वारकायामभूद् राजन् महामोदः पुरौकसाम् ।
रुक्मिण्या रमयोपेतं दृष्ट्वा कृष्णं श्रियः पतिम् ॥ १४२

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे
रुक्मिणीकल्याणं नाम चतुःपञ्चाशत्तमोऽध्यायस्सम्पूर्णः ।

---

॥ श्रीः ॥

शुभं अस्तु

# श्रीसत्यभामाजाम्बवतीकल्याणम्

(श्रीमद्भागवतात् सङ्कलितम् )

श्री शुक उवाच—

आसीत् सत्राजितः सूर्यो भक्तस्य परमः सखा ।
प्रीतस्तस्मै मणिं प्रादात् सूर्यस्तुष्टः स्यमन्तकम् ॥ १

स तं बिभ्रन् मणिं कण्ठे भ्राजमानो यथा रविः ।
प्रविष्टो द्वारकां राजन् तेजसा नोपलक्षितः ॥ २

तं विलोक्य जनाः दूरात्तेजसा मुष्टदृष्टयः ।
दीव्यतेऽक्षैर्भगवते शशंसुः सूर्यशङ्किताः ॥ ३

नारायण नमस्तेऽस्तु शङ्खचक्रगदाधर ।
दामोदरारविन्दाक्ष गोविन्द यदुनन्दन ॥ ४

एव आयाति सविता त्वां दिदृक्षुर्जगत्पते ।
मुष्णन् गभस्तिचक्रेण नृणां चक्षूंषि तिग्मगुः ॥ ५

नन्वन्विच्छन्ति ते मार्गं त्रिलोक्या विबुधर्षभाः ।
ज्ञात्वाद्य गूढं यदुषु द्रष्टुं त्वां यात्यजः प्रभो ॥ ६

निशम्य बालवचनं प्रहस्याम्बुजलोचनः ।
प्राह नासौ रविर्देवः सत्राजिन्मणिना ज्वलन् ॥ ७

सत्राजित्स्वगृहं श्रीमत् कृतकौतुकमङ्गलम् ।
प्रविश्य देवसदने मणिं विप्रैर्न्यवेशयत् ॥ ८

दिने दिने स्वर्णभारानष्टौ स सृजति प्रभो ।
दुर्भिक्षमार्यरिष्टानि सर्पाधिव्याधयोऽशुभाः ।
न सन्ति मायिनस्तत्र यत्रास्तेऽभ्यर्चितो मणिः ॥ ९
स याचितो मणिं क्वापि यदुराजाय शौरिणा ।
नैवार्थकामुकः प्रादाद् याच्ञाभङ्गमतर्कयन् ॥ १०
तमेकदा मणिं कण्ठे प्रतिमुच्य महाप्रभम् ।
प्रसेनो हयमारुह्य मृगयां व्यचरद् वने ॥ ११
प्रसेनं सहयं हत्वा मणिमाच्छिद्य केसरी ।
गिरिं विशञ्जाम्बवता निहतो मणिमिच्छता ॥ १२
सोऽपि चक्रे कुमारस्य मणिं क्रीडनकं बिले ।
अपश्यन् भ्रातरं भ्राता सत्राजित् पर्यतप्यत ॥ १३
प्रायः कृष्णेन निहतो मणिग्रीवो वनं गतः ।
भ्राता ममेति तच्छ्रुत्वा कर्णे कर्णेऽजपञ्जनाः ॥ १४
भगवांस्तदुपश्रुत्य दुर्यशो लिप्तमात्मनि ।
मार्ष्टुं प्रसेनपदवीमन्वपद्यत नागरैः ॥ १५
हतं प्रसेनमश्वं च वीक्ष्य केसरिणा वने ।
तं चाद्रिपृष्ठे निहतं ऋक्षेण ददृशुर्जनाः ॥ १६
ऋक्षराजबिलं भीममन्धेन तमसाऽऽवृतम् ।
एको विवेश भगवानवस्थाप्य बहिः प्रजाः ॥ १७
तत्र दृष्ट्वा मणिश्रेष्ठं बालक्रीडनकं कृतम् ।

हर्तुं कृतमतिस्तस्मिन्नवतस्थेऽर्भकान्तिके ॥ १८

तमपूर्वं नरं दृष्ट्वा धात्री चुक्रोश भीतवत् ।
तच्छ्रुत्वाभ्यद्रवत् क्रुध्दो जाम्बवान् बलिनां वरः ॥ १९

स वै भगवता तेन युयुधे स्वामिनाऽऽत्मनः ।
पुरुषं प्राकृतं मत्वा कुपितो नानुभाववित् ॥ २०

द्वन्द्वयुध्दं सुतुमुलमुभयोर्विजिगीषतोः ।
आयुधैश्च द्रुमैर्दोर्भिः क्रव्यार्थे श्येनयोरिव ॥ २१

आसीत्तदष्टाविंशाहमितरेतरमुष्टिभिः ।
वज्रनिष्पेषपरुषैरविश्रममहर्निशम् ॥ २२

कृष्णमुष्टिविनिष्पातनिष्पिष्टाङ्गोरुबन्धनः ।
क्षीणसत्वः स्विन्नगात्रः तमाहातीव विस्मितः ॥ २३

जाने त्वां सर्वभूतानां प्राण ओजः सहो बलम् ।
विष्णुं पुराणपुरुषं प्रभविष्णुमधीश्वरम् ॥ २४

त्वं हि विश्वसृजां स्रष्टा सृज्यानामपि यच्च सत् ।
कालः कलयतामीशः पर आत्मा तथात्मनाम् ॥ २५

यस्येषदुत्कलितरोषकटाक्षमोक्षैः
वर्त्मादिशत् क्षुभितनक्रतिमिङ्गिलोऽब्धिः ।
सेतुः कृतः स्वयशउज्ज्वलिता च लङ्का
रक्षःशिरांसि भुवि पेतुरिषुक्षतानि ॥ २६

इति विज्ञातविज्ञानं ऋक्षराजानमच्युतः ।

व्याजहार महाराज भगवान् देवकीसुतः ॥ २७

अभिमृश्यारविन्दाक्षः पाणिना शङ्करेण तम् ।
कृपया परया भक्तं प्रेमगम्भीरया गिरा ॥ २८

मणिहेतोरिह प्राप्ता वयमृक्षपते बिलम् ।
मिथ्याभिशापं प्रमृजन्नात्मनो मणिनामुना ॥ २९

इत्युक्तः स्वां दुहितरं कन्यां जाम्बवतीं मुदा ।
अर्हणार्थं स मणिना कृष्णायोपजहार ह ॥ ३०

अदृष्ट्वा निर्गमं शौरेः प्रविष्टस्य बिलं जनः ।
प्रतीक्ष्य द्वादशाहानि दुःखिताः स्वपुरं ययुः ॥ ३१

निशम्य देवकी देवी रुक्मिण्यानकदुन्दुभिः ।
सुहृदो ज्ञातयोऽशोचन् बिलात् कृष्णमनिर्गतम् ॥ ३२

सत्राजितं शपन्तस्ते दुःखिताः द्वारकौकसः ।
उपतस्थुर्महामायां दुर्गां कृष्णोपलब्धये ॥ ३३

तेषां तु देव्युपस्थानात् प्रत्यादिष्टाशिषा स च ।
प्रादुर्बभूव सिद्धार्थः सदारो हर्षयन् हरिः ॥ ३४

उपलभ्य हृषीकेशं मृतं पुनरिवागतम् ।
सह पत्न्या मणिग्रीवं सर्वे जातमहोत्सवाः ॥ ३५

सत्राजितं समाहूय सभायां राजसन्निधौ ।
प्राप्तिं चाख्याय भगवान् मणिं तस्मै न्यवेदयत् ॥ ३६

स चातिव्रीडितो रत्नं गृहीत्वाऽवाङ्मुखस्ततः ।

अनुतप्यमानो भवनमगमत् स्वेन पाप्मना ॥ ३७

सोऽनुध्यायंस्तदेवाघं बलवद्विग्रहाकुलः ।
कथं मृजाम्यात्मरजः प्रसीदेद् वा अच्युतः कथम् ॥

किं कृत्वा साधु मह्यं स्यान्न शपेद् वा जनो यथा ।
अदीर्घदर्शनं क्षुद्रं मूढं द्रविणलोलुपम् ॥ ३९

दास्ये दुहितरं तस्मै स्त्रीरत्नं रत्नमेव च ।
उपायोऽयं समीचीनस्तस्य शान्तिर्न चान्यथा ॥ ४०

एवं व्यवसितो बुद्ध्या सत्राजित् स्वसुतां शुभाम् ।
मणिं च स्वयमुद्यम्य कृष्णायोपजहार ह ॥ ४१

तां सत्यभामां भगवानुपयेमे यथाविधि ।
बहुभिर्याचितां शीलरूपौदार्यगुणान्विताम् ॥ ४२

भगवानाह न मणिं प्रतीच्छामो वयं नृप ।
तवास्तां देवभक्तस्य वयं च फलभागिनः ॥ ४३

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे स्यमन्तकोपाख्याने जाम्बवती सत्यभामा कल्याणं नाम षट्पञ्चाशत्तमोऽध्यायः सम्पूर्णः ।

---

॥ श्रीः ॥

शुभं अस्तु

# ❋ श्रीराधाकल्याणम् ❋

(ब्रह्मवैवर्तपुराणात् सङ्गृहीतम्)

एकदा कृष्णसहितो नन्दो बृन्दावनं ययौ ।
तत्रोपवनभाण्डीरे चारयामास गोधनम् ॥ १

सरस्सु स्वादु तोयं च पाययामास तत्पपौ ।
उवास वृक्षमूले च बालं कृत्वा स्ववक्षसि ॥ २

एतस्मिन् अन्तरे कृष्णः मायामानुषविग्रहः ।
चकार माययाऽकस्मात् मेघाच्छन्नं नभो मुने ॥ ३

मेघावृतं नभो दृष्ट्वा श्यामलं काननान्तरम् ।
झञ्झावातं मेघशब्दं वज्रशब्दं च दारुणम् ॥ ४

वृष्टिधारां अतिस्थूलां कम्पमानान् च पादपान् ।
दृष्ट्वैवं पतितस्कन्धान् नन्दो भयं अवापह ॥ ५

कथं यास्यामि गोबत्सान् विहाय स्वाश्रमं बत ।
गृहं यदि न यास्यामि भविता बालकस्य किम् ॥ ६

एवं नन्दे प्रवदति रुरोद श्रीहरिस्तदा ।
पयोभिया हरिश्चैव पितुः कण्ठं दधार सः ॥ ७

एतस्मिन् अन्तरे राधा जगाम श्रीकृष्णसन्निधिम् ।
गमनं कुर्वती राजहंसखञ्जनगञ्जनम् ॥ ८

शरत्पार्वणचन्द्राभाऽमुष्टवक्त्रमनोहरा ।
शरन्मध्याह्नपद्मानां शोभामोचनलोचना ॥ ९

परितस्तारकापक्ष्मविचित्रकज्जलोज्ज्वला ।
खगेन्द्र-चञ्चु-चारुश्री-सङ्ग-नाशक-नासिका ॥ १०

तन्मध्यस्थलशोभार्हस्थूलमुक्ताफलोज्ज्वला ।
कबरींवेषसंयुक्ता मालतीमाल्यवेष्टिता ॥ ११

ग्रीष्ममध्याह्नमार्तण्डप्रभामुष्टककुण्डला ।
पक्वबिम्बफलानां च श्रीमुष्टाधरयुग्मका ॥ १२

मुक्तापंक्तिप्रभातैकदन्तपंक्तिसमुज्ज्वला ।
ईषत्प्रफुल्लकुन्दानां सुप्रभानाशकस्मिता ॥ १३

कस्तूरीविन्दुसंयुक्तसिन्दूरबिन्दुभूषिता ।
कपालं मल्लिकायुक्तं बिभ्रती श्रीयुतं सती ॥ १४

सुचारुवर्तुलाकारकपोलपुलकान्विता ।
मणिरत्नेन्द्रसाराणां हारोरःस्थलभूषिता ॥ १५

सुचारुश्रीफलयुगकठिनस्तनसङ्गता ।
पत्रावलीश्रिया युक्ता दीप्ता सद्रत्नतेजसा ॥ १६

सुचारु वर्तुलाकारं उदरं सुमनोहरम् ।
विचित्रत्रिवलीयुक्तं निम्ननाभिं च बिभ्रती ॥ १७

सद्रत्नसाररचितमेखलाजालभूषिता ।
कामास्त्रसारभ्रूभङ्ग्योगीन्द्रचित्तमोहिनी ॥ १८

कठिनश्रोणियुगलं धरणीधरनिन्दितम् ।
स्थलपद्मप्रभामुष्टचरणं दधती मुदा ॥ १९

रत्नभूषणसंयुक्तं यावकद्रवसंयुतम् ।
मणीन्द्रशोभासंमुष्टसालक्तकपुनर्भवम् ॥ २०

सद्रत्नसाररचितक्वणन्मञ्जीररञ्जिता ।
रत्नकङ्कण केयूर चारु शङ्खविभूषिता ॥ २१

रत्नाङ्गुलीयनिकरवह्निशुद्धांशुकोज्ज्वला ।
चारुचम्पकपुष्पाणां प्रभामुष्टकलेवरा ॥ २२

सहस्रदलसंयुक्तक्रीडाकमलमुज्ज्वलम् ।
श्रीमुखश्रीदर्शनार्थं बिभ्रती रत्नदर्पणम् ॥ २३

दृष्ट्वा तां निर्जने नन्दो विस्मयं परमं ययौ ।
चन्द्रकोटिप्रभामुष्टां भासयन्तीं दिशो दश ॥ २४

ननाम तां साश्रुनेत्रः भक्तिनम्रात्मकन्धरः ।
जानामि त्वां गर्गमुखात् पद्माधिकप्रियां हरेः ॥ २५

जानामीमं महाविष्णोः परं निर्गुणमच्युतम् ।
तथापि मोहितोऽहं च मानवो विष्णुमायया ॥ २६

गृहाण प्राणनाथं च गच्छ भद्रे यथासुखम् ।
पश्चात् दास्यसि मत्पुत्रं कृत्वा पूर्णमनोरथम् ॥ २७

इत्युक्त्वा प्रददौ तस्यै रुदन्तं बालकं भिया ।
जग्राह बालकं राधा जहास मधुरं सुखात् ॥ २८

उवाच नन्दं सा यत्नात् न प्रकाश्यं रहस्यकम् ।
अहं दृष्टा त्वया नन्द कति जन्मफलोदयात् ॥ २९

प्राज्ञस्त्वं गर्गवचनान् सर्वं जानासि कारणम् ।
अकथ्यं आवयोः गोप्यं चरितं गोकुले व्रज ॥ ३०

वरं वृणु व्रजेश त्वं यत्ते मनसि वाञ्छितम् ।
ददामि लीलया तुभ्यं देवानामपि दुर्लभम् ॥ ३१

राधिकावचनं श्रुत्वा तामुवाच व्रजेश्वरः ।
युवयोश्चरणे भक्तिं देहि नान्यत्र मे स्पृहा ॥ ३२

युवयोः सन्निधौ वासं दास्यसि त्वं सुदुर्लभम् ।
आवाभ्यां देहि जगतां अम्बिके परमेश्वरि ॥ ३३

श्रुत्वा नन्दस्य वचनं उवाच परमेश्वरी ।
दास्यामि दास्यमतुलं इदानीं भक्तिरस्तु ते ॥ ३४

आवयोः चरणाम्भोजे युवयोश्च दिवानिशम् ।
प्रफुल्लहृदये शश्वत् स्मृतिरस्तु सुदुर्लभा ॥ ३५

एवमुक्त्वा तु सा नन्दं कृत्वा कृष्णं स्ववक्षसि ।
दूरं निनाय श्रीकृष्णं बाहुभ्यां च यथेप्सितम् ॥ ३६

एतस्मिन्नन्तरे राधा मायासद्रत्नमण्डपम् ।
ददर्श रत्नकलशशतेन च समन्वितम् ॥ ३७

सा देवी मण्डपं दृष्ट्वा जगाम अभ्यन्तरं मुदा ।
ददर्श तत्र ताम्बूलं कर्पूरादिसमन्वितम् ॥ ३८

पुरुषं कमनीयं च किशोरं श्यामसुन्दरम् ।
कोटिकन्दर्पलीलाभं चन्दनेन विभूषितम् ॥ ३९

शयानं पुष्पशय्यायां सस्मितं सुमनोहरम् ।
पीतवस्त्रपरीधानं प्रसन्नवदनेक्षणम् ॥ ४०

मणीन्द्रसारनिर्माणं क्वणन्मञ्जीररञ्जितम् ।
सद्रत्नसारनिर्माणकेयूरवलयान्वितम् ॥ ४१

मणीन्द्रकुण्डलाभ्यां च गण्डस्थलविराजितम् ।
कौस्तुभेन मणीन्द्रेण वक्षस्स्थलसमुज्वलम् ॥ ४२

शरत्पार्वणचन्द्राभप्रभामुष्टमुखोज्ज्वलम् ।
शरत्प्रफुल्लकमलप्रभामोचनलोचनम् । ४३

मालतीमाल्यसंश्लिष्टशिखिपिच्छसुशोभितम् ।
त्रिवङ्कचूडां बिभ्रन्तं पश्यन्तं रत्नमन्दिरम् ॥ ४४

क्रोडं बालकशून्यं च दृष्ट्वा तं नवयौवनम् ।
सर्वस्मृतिस्वरूपा सा तथापि विस्मयं ययौ ॥ ४५

रूपं रासेश्वरी दृष्ट्वा मुमोह सुमनोहरम् ।
कामात् चक्षुश्चकोराभ्यां मुखचन्द्रं पपौ मुदा ॥ ४६

निमेषरहिता राधा नवसंगमलालसा ।
पुलकाङ्कित सर्वाङ्गी सस्मिता मदनातुरा ॥ ४७

तामुवाच हरिस्तत्र स्मेराननसरोरुहाम् ।
नवसंगमयोग्यां च पश्यन्तीं वक्त्रचक्षुषा ॥ ४८

राधे स्मरसि गोलोकवृत्तान्तं सुरसंसदि ।
अद्य पूर्णं करिष्यामि स्वीकृतं यत्पुरा प्रिये ॥ ४९
त्वं मे प्राणाधिका राधे प्रेयसी च वरानने ।
यथा त्वं च तथा अहं च भेदो हि नावयोः ध्रुवम् ॥ ५०
यथा क्षीरे च धावल्यं यथा अग्नौ दाहिका सति ।
यथा पृथिव्यां गन्धश्च तथाहं त्वयि सन्ततम् ॥ ५१
विना मृदा घटं कर्तुं विना स्वर्णेन कुण्डलम् ।
कुलालः स्वर्णकारश्च न हि शक्तः कदाचन ॥ ५२
तथा त्वया विना सृष्टिं अहं कर्तुं न च क्षमः ।
सृष्टेराधारभूता त्वं बीजरूपोऽहमच्युतः ॥ ५३
कृष्णं वदन्ति मां लोकाः त्वयैव रहितं यदा ।
श्रीकृष्णं च तदा तेऽपि त्वयैव सहितं परम् ॥ ५४
त्वं च श्रीः त्वं च सम्पत्तिः त्वं आधारस्वरूपिणी ।
त्वं स्त्री पुमान् अहं राधे इति वेदेषु निर्णयः ॥ ५५
सर्वशक्तिस्वरूपासि सर्वरूपोऽहं अक्षरः ।
ममाङ्गांशस्वरूपा त्वं मूलप्रकृतिरीश्वरी ॥ ५६
शक्त्या बुध्या च ज्ञानेन मया तुल्या वरानने ।
"रा"शब्दं कुर्वतः त्रस्तो ददामि भक्तिमुत्तमाम् ॥ ५७
"धा" शब्दं कुर्वतः पश्चात् यामि श्रवणलोभतः ।
तिष्ठ भद्रे क्षणं भद्रं करिष्यामि तव प्रिये ॥ ५८

त्वन्मनोरथपूर्णस्य स्वयं कालस्समागतः ।
एतस्मिन् अन्तरे ब्रह्मा आजगाम पुरतो हरेः ॥ ५९

मालाकमण्डलुधरः ईषत्स्मेरचतुर्मुखः ।
गत्वा ननाम तं कृष्णं प्रतुष्टाव यथागमम् ॥ ६०

साश्रुनेत्रः पुलकितः भक्तिनम्रात्मकंधरः ।
स्तुत्वा नत्वा जगद्धाता जगाम हरिसंनिधिम् ॥ ६१

पुनर्नत्वा प्रभुं भक्त्या जगाम राधिकान्तिकम् ।
मूर्ध्ना ननाम भक्त्या च मातुस्तच्चरणाम्बुजे ॥ ६२

चकार संभ्रमेणैव जटाजालेन वेष्टितम् ।
कमण्डलुजलेनैव शीघ्रं प्रक्षालितं मुदा ॥ ६३

यथागमं प्रतुष्टाव पुटाञ्जलियुतः पुनः ।
हे मातस्त्वपदाम्भोजं दृष्टं कृष्णप्रसादतः ॥ ६४

सुदुर्लभं च सर्वेषां भारते च विशेषतः ।
षष्ठिवर्षसहस्राणि तपस्तप्तं मया पुरा ॥ ६५

भास्करे पुष्करे तीर्थे कृष्णस्य परमात्मनः ।
आजगाम वरं दातुं वरदाता हरिः स्वयम् ॥ ६६

वरं वृणीष्व इत्युक्ते स्वाभीष्टं च वृतं मुदा ।
राधिकाचरणाम्भोजं सर्वेषामपि दुर्लभम् ॥ ६७

हे गुणातीत मे शीघ्रं अधुनैव प्रदर्शय ।
मयेत्युक्तो हरिरयं उवाच मां तपस्विनम् ॥ ६८

दर्शयिष्यामि काले च वत्सेदानीं क्षमेति च ।
न्महीश्वराज्ञा विफला तेन दृष्टं पदाम्बुजम् ॥ ६९

सर्वेषां वाञ्छितं मातः गोलोके भारतेऽधुना ।
सर्वा देव्यः प्रकृत्यंशाः जन्याः प्राकृतिका ध्रुवम् ॥ ७०

त्वं कृष्णाङ्गार्धसंभूता तुल्या कृष्णेन सर्वतः ।
श्रीकृष्णस्त्वमयं राधा त्वं राधा वा हरिः स्वयम् ॥ ७१

न हि वेदेषु मे दृष्टः इति केन निरूपितम् ।
ब्रह्माण्डात् बहिरूर्ध्वं च गोलोकोऽस्ति यथाम्बिके ॥

वैकुण्ठश्चाप्यजन्यश्च त्वमजन्या तथाम्बिके ।
यथा समस्तब्रह्माण्डे श्रीकृष्णांशांशजीविनः ॥ ७३

तथा शक्तिस्वरूपा त्वं तेषु सर्वेषु संस्थिता ।
पुरुषाश्च हरेरंशाः त्वदंशा निखिलाः स्त्रियः ॥ ७४

आत्मना देहरूपा त्वं अस्याधारस्त्वमेव हि।
अस्यानुप्राणैः त्वं मातः त्वत्प्राणैरयमीश्वरः ॥ ७५

किमहो निर्मितः केन हेतुना शिल्पकारिणा ।
नित्योऽयं च तथा कृष्णः त्वं च नित्या तथाम्बिके ॥ ७६

अस्यांशा त्वं त्वदंशो वाप्ययं केन निरूपितः ।
अहं विधाता जगतां देवानां जनकः स्वयम् ॥ ७७

तं पठित्वा गुरुमुखात् भवन्त्येव बुधा जनाः ।
गुणानां वास्तवानां ते शतांशं वक्तुं अक्षमः ॥ ७८

वेदो वा पण्डितो वा अन्यः को वा त्वां स्तोतुं ईश्वरः ।
स्तवानां जनकं ज्ञानं बुद्धिर्ज्ञानाम्बिका सदा ॥ ७९
त्वं बुद्धेर्जननी मातः को वा त्वां स्तोतुमीश्वरः ।
यत् वस्तु दृष्टं सर्वेषां तद्धि वक्तुं बुधः क्षमः ॥ ८०
यत् अदृष्टाश्रुतं वस्तु तत् निर्वक्तुं च कः क्षमः ।
अहं महेशोऽनन्तश्च स्तोतुं त्वां कोऽपि न क्षमः ॥ ८१
सरस्वती च वेदाश्च क्षमः कः स्तोतुं ईश्वरः ।
यथागमं यथोक्तं च न मां निन्दितुं अर्हसि । ८२
ईश्वराणां ईश्वरस्य योग्यायोग्ये समा कृपा ।
जनस्य प्रतिपाल्यस्य क्षणे दोषः क्षणे गुणः । ८३
जननी जनको यो वा सर्वं क्षमति स्नेहतः ।
इत्युक्त्वा जगतां धाता तस्थौ च पुरतस्तयोः ॥ ८४
प्रणम्य चरणाम्भोजं सर्वेषां वन्द्यं ईप्सितम् ।
ब्रह्मणस्स्तवनं श्रुत्वा तामुवाच ह राधिका ॥ ८५
वरं वृणु विधातस्त्वं यत् ते मनसि वर्तते ।
राधिकावचनं श्रुत्वा तामुवाच जगद्विधिः ॥ ८६
वरं च युवयोः पादपद्मभक्तिं च देहि मे ।
इत्युक्ते विधिना राधा तूर्णं ओम् इत्युवाच ह ॥ ८७
पुनर्ननाम तां भक्त्या विधाता जगतां पतिः ।
तदा ब्रह्मा तयोः मध्ये प्रज्वाल्य च हुताशनम् ॥ ८८

हरिं संस्मृत्य हवनं चकार विधिना विधिः ।
उत्थाय शयनात् कृष्णः उवास वह्निसन्निधौ ॥ ८९
ब्राह्मणोक्तेन विधिना चकार हवनं स्वयम् ।
प्रणमय्य पुनः कृष्णं राधां तां जनकः स्वयम् ॥ ९०
कौतुकं कारयामास सप्तधा च प्रदक्षिणम् ।
पुनः प्रदक्षिणां राधां कारयित्वा हुताशनम् ॥ ९१
प्रणमय्य ततः कृष्णं वासयामास तं विधिः ।
तस्या हस्तं च श्रीकृष्णं ग्राहयामास तं विधिः ॥ ९२
वेदोक्तसप्तमन्त्रांश्च पाठयामास माधवम् ।
संस्थाप्य राधिकाहस्तं हरेर्वक्षसि वेदवित् ॥ ९३
श्रीकृष्णहस्तं राधायाः पृष्ठदेशे प्रजाप्रतिः ।
स्थापयामास मन्त्रान् त्रीन् पाठयामास राधिकाम् ॥ ९४
पारिजात प्रसूनानां मालां जानुविलम्बिताम् ।
श्रीकृष्णस्य गले ब्रह्मा राधाद्वारा ददौ मुदा ॥ ९५
प्रणमय्य पुनः कृष्णं राधां च कमलोद्भवः ।
राधागले हरिद्वारा ददौ मालां मनोहराम् ॥ ९६
पुनश्च वासयामास श्रीकृष्णं कमलोद्भवः ।
तद्वामपार्श्वे राधां च सस्मितां कृष्णचेतसम् ॥ ९७
पुटाञ्जलिं कारयित्वा माधवं राधिकां विधिः ।
पाठयामास वेदोक्तान् पञ्च मन्त्रांश्च नारद ॥ ९८

प्रणमय्य पुनः कृष्णं समर्प्य राधिकां विधिः ।
कन्यकां च यथा तातो भक्त्या तस्थौ हरेः पुरः ॥ ९९
एतस्मिन् अन्तरे देवाः सानन्दपुलकोद्गमाः ।
दुन्दुभिं वादयामासुः च आनकं मुरजादिकम् ॥ १००
पारिजातप्रसूनानां पुष्पवृष्टिः बभूव ह ।
जगुर्गन्धर्वप्रवराः ननृतुश्चाप्सरोगणाः ॥ १०१

उद्धव उवाच—

वन्दे राधापदाम्भोजं ब्रह्मादिसुरवन्दितम् ।
यत्कीर्तिः कीर्तनेनैव पुनाति भुवनत्रयम् ॥ १०२
नमो गोकुलवासिन्यै राधिकायै नमो नमः ।
शतशृङ्गनिवासिन्यै चन्द्रावत्यै नमो नमः ॥ १०३
तुलसीवनवासिन्यै बृन्दारण्यै नमो नमः ।
रासमण्डलवासिन्यै रासेश्वर्यै नमो नमः ॥ १०४
विरजातीरवासिन्यै बृन्दायै च नमो नमः ।
बृन्दावनविलासिन्यै कृष्णायै च नमो नमः ॥ १०५
नमः कृष्णप्रियायै च शान्तायै च नमो नमः ।
कृष्णवक्षस्स्थितायै च तत्प्रियायै नमो नमः ॥ १०६
नमो वैकुण्ठवासिन्यै महालक्ष्म्यै नमो नमः
विद्याधिष्ठातृदेव्यै च सरस्वत्यै नमो नमः ॥ १०७
सर्वैश्वर्याधिदेव्यै च कमलायै नमो नमः ।
पद्मनाभप्रियायै च पद्मायै च नमो नमः ॥ १०८

महाविष्णोश्च मात्रे च पराद्यायै नमो नमः ।
नमस्सिन्धुसुतायै च मर्त्यलक्ष्म्यै नमो नमः ॥ १०९
नारायणप्रियायै च नारायण्यै नमो नमः ।
नमोऽस्तु विष्णुमायायै वैष्णव्यै च नमो नमः ॥ ११०
महामायास्वरूपायै सम्पद्दायै नमो नमः ।
नमः कल्याणरूपिण्यै शुभायै च नमो नमः ॥ १११
मात्रे चतुर्णां वेदानां सावित्र्यै च नमो नमः ।
नमोऽस्तु बुद्धिरूपायै ज्ञानदायै नमो नमः ॥ ११२
नमो दुर्गविनाशिन्यै दुर्गादेव्यै नमो नमः ।
तेजस्सु सर्वदेवानां पुरा कृतयुगे मुदा ॥ ११३
अधिष्ठानकृतायै च प्रकृत्यै च नमो नमः ।
नमस्त्रिपुरहारिण्यै त्रिपुरायै नमो नमः ॥ ११४
सुन्दरीषु च रम्यायै निर्गुणायै नमो नमः ।
नमो निद्रास्वरूपायै निर्गुणायै नमो नमः ॥ ११५
नमो [illegible]यै च नमस्सत्यै नमो नमः ।
नमश्शैलसुतायै च पार्वत्यै च नमो नमः ॥ ११६
नमो नमस्तपस्विन्यै हि उमायै च नमो नमः ।
निराहारस्वरूपायै हि अपर्णायै नमो नमः ॥ ११७
गौरीलोकविलासिन्यै नमो गौर्यै नमो नमः ।
नमः कैलासवासिन्यै महेश्वर्यै नमो नमः ॥ ११८

निद्रायै च दयायै च श्रद्धायै च नमो नमः ।
नमो धृत्यै क्षमायै च लज्जायै नमो नमः ॥ ११९
तृष्णायै क्षुत्स्वरूपायै स्थितिकर्त्र्यै नमो नमः ।
भयायै च अभयायै च मुक्तिदायै नमो नमः ॥ १२०
नमस्स्वधायै स्वाहायै शान्त्यै कान्त्यै नमो नमः ।
नमस्तुष्ट्यै च पुष्ट्यै च दयायै च नमो नमः ॥ २२१
नमो निद्रास्वरूपायै श्रद्धायै च नमो नमः ।
नमो धृत्यै क्षमायै च चेतनायै नमो नमः ॥ १२२
क्षुत्पिपासास्वरूपायै लज्जायै च नमो नमः ।
सर्वशक्तिस्वरूपिण्यै सर्वमात्रे नमो नमः ॥ १२३
अग्नौ दाहस्वरूपायै भद्रायै च नमो नमः ।
शोभायै पूर्णचन्द्रे च शरत्पद्मे नमो नमः ॥ १२४
नास्ति भेदो यथा देवि दुग्धधावल्ययोस्सदा ।
यथैव गन्धभूम्योश्च यथेव जलशैत्ययोः ॥ १२५
यथैव शब्दनभसोः ज्योतिस्सूर्यकयोर्यथा ।
लोके वेदे पुराणे च राधामाधवयोस्तथा ॥ १२६
इत्युद्धवकृतं स्तोत्रं यः पठेत् भक्तिपूर्वकम् ।
इह लोके सुखं भुक्त्वा यात्यन्ते हरिमन्दिरम् ॥ १२७
न भवेत् बन्धुविच्छेदो रोगः शोकस्सुदारुणः ।
प्रोषिता स्त्री लभेत् कान्तं भार्याभेदी लभेत् प्रियाम् ॥

अपुत्रो लभते पुत्रान् निर्धनो लभते धनम् ।
निर्भूमिर्लभते भूमिं प्रजाहीनो लभेत् प्रजाम् ॥ १२९
रोगात् विमुच्यते रोगी बद्धो मुच्येत बन्धनात् ।
भयात् मुच्येत भीतस्तु मुच्येत आपन्न आपदः ॥ १३०
अस्पष्टकीर्तिः सुयशाः मूर्खो भवति पण्डितः ।
शृणोति दुर्भगा चेत् तु सौभाग्यं स्वामिनो लभेत् ॥ १३१
मृतवत्सा काकवन्ध्या महावन्ध्या च पापिनी ।
आख्यानश्रवणात् लेभे पुत्रं च चिरजीविनम् ॥ १३२
अपुत्रो लभते पुत्रं अभार्यो लभते प्रियाम् ।
कायेन मनसा वाचा परं भक्त्या दिवानिशम् ।
भज सत्यं परं ब्रह्म राधेशं त्रिगुणात् परम् ॥ १३३

इति ब्रह्मवैवर्तपुराणात् सङ्गृहीतम् श्रीराधाकल्याणं सम्पूर्णम् ॥

---

कुटुम्बवृद्धिं धनधान्यवृद्धिं
स्त्रियश्च मुख्याः सुखं उत्तमञ्च ।
श्रुत्वा शुभं ग्रन्थमिमं महार्थं
प्राप्नोति सर्वां भुवि चार्थसिद्धिम् ॥

आयुष्यं आरोग्यकरं यशस्यं
सद्भर्तृदं ऋद्धिकरं शुभञ्च ।
अध्येयं एतत् नियमेन भक्त्या
आख्यानं ओजस्करं ईप्सितार्थदम् ॥

* शुभं अस्तु । सर्वकल्याणसमृद्धिः अस्तु ॥ *

॥ श्रीः ॥

शुभं अस्तु

प्रतिदिनं अथवा पारायणसमाप्तौ पठनीयाः

## प्रार्थनाश्लोकाः

मुदा कराात्तमोदकं सदा विमुक्तिसाधकं
कलाधरावतंसकं विलासिलोकरक्षकम् ।
अनायकैकनायकं विनाशितेभदैत्यकं
नतअशुभआशुनाशकं नमामि तं विनायकम् ॥ १

समस्तलोकशङ्करं निरस्तदैत्यकुञ्जरं
दरेतरोदरं वरं वरेभवक्त्रं अक्षरम् ।
कृपाकरं क्षमाकरं मुदाकरं यशस्करं
मनस्करं नमस्कृतां नमस्करोमि भास्करम् ॥ २

नमः शिवाभ्यां नवयौवनाभ्यां
परस्पराश्लिष्टवपुर्धराभ्याम् ।
नगेन्द्रकन्यावृषकेतनाभ्यां
नमो नमः शङ्करपार्वतीभ्याम् ॥ ३

नमः शिवाभ्यां सरसोत्सवाभ्यां
नमस्कृताभीष्टवरप्रदाभ्याम् ।
नारायणेनार्चितपादुकाभ्यां
नमो नमः शङ्करपार्वतीभ्याम् ॥ ४

स्नात्वा प्रत्यूषकाले स्नपनविधिविधौ नाहृतं गाङ्गतोयं
पूजार्थं वा कदाचित् बहुतरगहनेऽखण्डबिल्वीदलं वा ।
नानीता पद्ममाला सरसि विकसिता गन्धपुष्पैस्त्वदर्थं
क्षन्तव्यो मेऽपराधः शिव शिव शिव भोः श्रीमहादेव शम्भो ॥

आकाशश्चिकुरायते दश दिशाभोगो दुकूलायते
शीतांशुः प्रसवायते स्थिरतरानन्दः स्वरूपायते ।
वेदान्तो निलयायते सुविनयो यस्य स्वभावायते
तस्मिन् मे हृदयं सुखेन रमतां साम्बे परब्रह्मणि ॥ ६

करचरणकृतं वा कर्म वाक्कायजं वा
श्रवणनयनजं वा मानसं वा अपराधम् ।
विहितं अविहितं वा सर्वं एतत् क्षमस्व
शिव शिव करुणाब्धे श्रीमहादेव शम्भो ॥ ७

निरवधिकरुणाब्धेः निह्नुताशेषदोषैः
अमृतरसझराणां अन्तरङ्गैः अपाङ्गैः ।
अघं अखिलं अपास्यन् अस्य डिम्भस्य शम्भुः
सकलभयनिवृत्तिं साम्बमूर्तिः विधत्ताम् ॥ ८

अहं पापी पापक्षपणनिपुणः शङ्कर भवान्
अहं भीतो भीताभयवितरणे ते व्यसनिता ।
अहं दीनो दीनोद्धरणविधिसज्जः त्वं इतरत्
न जानेऽहं वक्तुं कुरु सकलशोच्ये मयि दयाम् ॥ ९

श्रीमाता विश्वजननी मे माता ललिताम्बिका ।
सर्वेष्टार्थप्रदा भूयात् सन्ततं सततं शिवा ॥ १०

अनादिमध्यान्तं अपाञ्चभौतिकं
अवाङ्मनोगम्यं अतर्क्यवैभवम् ।
अरूपं अद्वन्द्वं अदृष्टिगोचरं
प्रभावं अग्र्यं कथं अम्ब वर्णये ॥ ११

मुखे ते ताम्बूलं नयनयुगले कज्जलकला
ललाटे काश्मीरं विलसति गले मौक्तिकलता ।
स्फुरत्काञ्चीशाटी पृथुकटितटे हाटकमयी
भजामि त्वां गौरीं नगपतिकिशोरीं अविरतम् ॥

सुधामपि आस्वाद्य प्रतिभयजरामृत्युहरिणीं
विपद्यन्ते विश्वे विधिशतमखाद्याः दिविषदः ।
करालं यत् क्ष्वेलं कबलितवतः कालकलना
न शम्भोः तन्मूलं तव जननि ताटङ्कमहिमा ॥ १३

तनोतु क्षेमं नः तव वदनसौन्दर्यलहरी-
परीवाहः स्रोतस्सरणिरिव सीमन्तसरणिः ।
वहन्ती सिन्दूरं प्रबलकबरीभारतिमिर-
द्विषां बृन्दैः बन्दीकृतमिव नवीनार्ककिरणम् ॥ १४

त्रातव्य एष इति चेत् करुणा मयि स्यात्
त्रायस्व किं सुकृतदुष्कृतचिन्तया मे ।

कर्तुं जगत् तिरयितुं च विशृङ्खलायाः
कर्मानुरोध इति कं प्रति वञ्चनेयम् ॥ १५

जगन्मातस्तावत् तव चरणसेवा न रचिता
न वा दत्तं देवि द्रविणं अतिभूयः तव मया ।
तथापि त्वं स्नेहं मयि निरुपमं यत् प्रकुरुषे ।
कुपुत्रो (कुपुत्री) जायेत क्वचिदपि कुमाता न भवति ॥

चिताभस्मालेपो गरलं अशनं दिग्पटधरः
जटाधारी कण्ठे भुजगपतिहारी पशुपतिः ।
कपाली भूतेशो भजति जगदीशैकपदवीं
भवानि त्वत्पाणिग्रहणपरिपाटीफलमिदम् ॥ १७

वृषो वृद्धो यानं विषं अशनं आशा निवसनं
श्मशानं क्रीडाभूः भुजगनिवहो भूषणविधिः ।
समग्रा सामग्री जगति विदितैव स्मररिपोः
यदेतस्य ऐश्वर्यं तव जननि सौभाग्यमहिमा ॥ १८

प्रातर्वदामि ललिते तव पुण्यनाम
कामेश्वरीति कमलेति महेश्वरीति ।
श्रीशाम्भवीति जगतां जननी परेति
वाग्देवतेति वचसा त्रिपुरेश्वरीति ॥ १९

शब्दब्रह्ममयी चराचरमयी ज्योतिर्मयी वाङ्मयी
नित्यानन्दमयी निरञ्जनमयी तत्त्वंमयी चिन्मयी ।

तत्त्वातीतमयी परात्परमयी मायामयी श्रीमयी
सर्वैश्वर्यमयी सदाशिवमयी मां पाहि मीनाम्बिके ॥

आपत्सु मग्नः स्मरणं त्वदीयं
करोमि दुर्गे करुणार्णवे शिवे ।
नैतच्छठत्वं मम भावयेथाः
क्षुधातृषार्ता जननीं स्मरन्ति ॥ २१

ब्रह्मविष्णुशिवाराध्ये प्रसीद जगदम्बिके ।
मनोऽभिलषितं देवि वरं देहि नमोऽस्तु ते ॥ २२

प्रसीद परदेवते, मम हृदि प्रभूतं भयं
विदारय, दरिद्रतां दलय, देहि सर्वज्ञताम् ।
निधेहि करुणानिधे चरणपद्मयुग्मं स्वकं,
निवारय जरामृती त्रिपुरसुन्दरि श्रीशिवे ॥ २३

प्रसीद विश्वेश्वरि विश्ववन्दिते
प्रसीद विश्वेश्वरि वेदरूपिणि ।
प्रसीद मायामयि मन्त्रविग्रहे
प्रसीद सर्वेश्वरि सर्वरूपिणि ॥ २४

यथाब्धेस्तरङ्गाः लयं यान्ति तुङ्गाः
तथैवापदस्सन्निधौ सेवतां मे ।
इतीवोर्मिपङ्क्तीः नृणां दर्शयन्तं
सदा भावये हृत्सरोजे गुहं तम् ॥ २५

पुलिन्देशकन्याघनाभोगतुङ्ग-
स्तनालिङ्गनासक्त काश्मीररागम् ।
नमस्यामि अहं तारकारे तवोरः
स्वभक्तावने सर्वदा सानुरागम् ॥ २६

कुमारेशसूनो गुह स्कन्द सेना-
पते शक्तिपाणे मयूराधिरूढ ।
पुलिन्दात्मजाकान्त भक्तार्तिहारिन्
प्रभो तारकारे सदा रक्ष मां त्वम् ॥ २७

या दृष्टा निखिलाघसंघशमनी स्पृष्टा वपुःपावनी
रोगाणां अभिवन्दिता निरसनी सिक्तान्तकत्रासिनी ।
प्रत्यासत्तिविधायिनी भगवतः कृष्णस्य संरोपिता
न्यस्ता तच्चरणे विमुक्तिफलदा तस्यै तुलस्यै नमः ॥

तुलसि श्रीसखि शुभे पापहारिणि पुण्यदे ।
नमस्ते नारदनुते नारायणमनःप्रिये ॥ २९

वैदेहीसहितं सुरद्रुमतले हैमे महामण्टपे
मध्येपुष्पकं आसने मणिमये वीरासने सुस्थितम् ।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥

वामे भूमिसुता पुरश्च हनुमान् पश्चात् सुमित्रासुतः
शत्रुघ्नो भरतश्च पार्श्वदलयोः वाय्वादिकोणेषु च ।

सुग्रीवश्च विभीषणश्च युवराट् तारासुतो जाम्बवान्
मध्ये नीलसरोजकोमलरुचिं रामं भजे श्यामलम् ॥ ३१

करीन्द्रकरबाहवे करधृताशुगासेषवे
प्रशस्तगुणसिन्धवे प्रणतिकर्मिणां बन्धवे ।
कलीरिततमोमुषे कलितपुण्यहृज्जग्मुषे
नमोऽस्तु रघुसूनवे नतमनस्तमोभानवे ॥ ३२

हरे राम सीतापते रावणारे
खरारे मुरारेऽसुरारे परेति ।
लपन्तं नयन्तं सदाकालमेवं
समालोकयालोकयाशेषबन्धो ॥ ३३

पयोदाभदेहं परारण्यदाहं
रमाचारुगेहं रसादिष्टदोहम् ।
विमुच्याद्य मोहं विशेषेण सोऽहं
भजे भव्यवाहं भवाद्भक्तगूहम् ॥ ३४

रघूत्तंस रक्षोऽपकारिन् रणोग्र-
प्रताप प्रचण्डारिनाशैकनिष्ठ ।
रमानाथ रामेति ते नामपुञ्जं
रटन् गोचरस्यां स्यात् ते कृपायाः ॥ ३५

शिवाख्यातनामा शिवावाहिभूमा
स्वभक्तौघकामावहापाङ्गदामा ।

रिपूणां विरामाद्दता नित्यधामा
सदा पातु रामाभिधा मुक्तिसीमा ॥ ३६

पिता मे च माता श्रिताभीष्टदाता
स रामो धराजाऽभिरामोऽमरार्च्यः ।
न चान्यो विचारो न चारुः प्रचारः
स रक्षेत् मम क्षेमपक्षे विविक्षेत् ॥ ३७

नमस्ते सुमित्रासुपुत्राभिवन्द्य
नमस्ते सदा कैकयीनन्दनेड्य ।
नमस्ते सदा वानराधीशवन्द्य
नमस्ते नमस्ते सदा रामचन्द्र ॥ ३८

प्रसीद प्रसीद प्रचण्डप्रताप
प्रसीद प्रसीद प्रचण्डारिकाल ।
प्रसीद प्रसीद प्रपन्नानुकम्पिन्
प्रसीद प्रसीद प्रभो रामचन्द्र ॥ ३९

सीता मीरध्वजसुता सीमातीतगुणोज्वला ।
सौन्दर्यसारसर्वस्वभूता सौभाग्यदायिनी ॥ ४०

देवी देवार्चितपदा दिव्या दशरथस्नुषा ।
रामा रामप्रिया रम्या राकेन्दुवदनोज्वला ॥ ४१

वन्दारुवत्सला वीरमाता वृतरघूत्तमा
सम्पत्करी सदा तुष्टा साक्षिणी साधुसम्मता ॥ ४२

नित्या नियतसंस्थाना नित्यानन्दा नुतिप्रिया ।
पृथ्वी पृथ्वीसुता पुत्रदायिनी प्रकृतिः परा ॥ ४३

कृताकृतजगद्धेतुः कृतराज्याभिषेकका ।
सौभाग्यदं इदं स्तोत्रं सीतादेव्यास्तु या वधूः ॥ ४४

भक्तियुक्ता पठेत् सा तु पुत्रपौत्रादिनन्दिता ।
धनधान्यसमृद्धा स्यात् दीर्घसौभाग्यदर्शिनी ॥ ४५

अयोध्यापुरनेतारं मिथिलापुरनायिकाम् ।
राघवाणां अलङ्कारं वैदेहानां अलङ्क्रियाम् ॥ ४६

रघूणां कुलदीपञ्च निमीनां कुलदीपिकाम् ।
सूर्यवंशसमुद्भूतं सोमवंशसमुद्भवाम् ॥ ४७

पुत्रं दशरथस्याद्यं पुत्रीं जनकभूपतेः ।
वसिष्ठानुमताचारं शतानन्दमतानुगाम् ॥ ४८

कौसल्यागर्भसंभूतं वेदिगर्भोदितां स्वयम् ।
पुण्डरीकविशालाक्षं स्फुरदिन्दीवरेक्षणाम् ॥ ४९

चन्द्रकान्ताननाम्भोजं चन्द्रबिम्बोपमाननाम् ।
मत्तमातङ्गगमनं मत्तहंसवधूगताम् ॥ ५०

चन्दनार्द्रभुजामध्यं कुङ्कुमार्द्रकुचस्थलीम् ।
चापालङ्कृतहस्ताब्जं पद्मालङ्कृतपाणिकाम् ॥ ५१

शरणागतगोप्तारं प्रणिपातप्रसादिकाम् ।
कालमेघनिभं रामं कार्तस्वरसमप्रभाम् ॥ ५२

दिव्यसिम्हासनासीनं दिव्यस्रग्वस्त्रभूषणाम् ।
अनुक्षणं कटाक्षाभ्यां अन्योन्येक्षणकांक्षिणौ ॥ ५३

अन्योन्यसदृशाकारौ त्रैलोक्यगृहदम्पती ।
इमौ युवां प्रणम्याहं भजामि अतिकृतार्थताम् ॥ ५४

अमोघं पुण्डरीकाक्षं नृसिम्हं दैत्यसूदनम् ।
हृषीकेशं जगन्नाथं वागीशं वरदायकम् ॥ ५५

गुणत्रयं गुणातीतं गोविन्दं गरुडध्वजम् ।
जनार्दनं जनातीतं जानकीवल्लभं हरिम् ॥ ५६

केशवं माधवं विष्णुं वामनं मधुसूदनम् ।
प्रणमामि सदा भक्त्या नारायणं अतः परम् ॥ ५७

सत्यनारायणं देवं वन्देऽहं कामदं प्रभुम् ।
लीलया विततं विश्वं येन तस्मै नमो नमः ॥ ५८

चतुर्मुखादिसंस्तुतं समस्तसात्वतानुतम् ।
हलायुधादिसंयुतं नमामि राधिकापतिम् ॥ ५९

नमो देव दामोदरानन्त विष्णो
प्रसीद प्रभो दुःखजालाब्धिमग्नम् ।
कृपादृष्टिवृष्ट्याऽतिदीनं च रक्ष
गृहाणेश मामज्ञं एव अक्षिदृश्यम् ॥ ६०

नमस्ते सुदाम्ने स्फुरद्दीप्तधाम्ने
तथोरस्थविश्वस्य धाम्ने नमस्ते ।

नमो राधिकायै त्वदीयप्रियायै
नमोऽनन्तलीलाय देवाय तुभ्यम् ॥ ६१

क्षीराम्भोनिधिरत्नमण्डपमहासौवर्णसिह्मासने
वामाङ्के स्थितया प्रसन्नवदनं श्रीकान्तयाऽलिङ्गितम् ।
दोर्दण्डाञ्चितशङ्खपङ्कजगदाचक्रैः उदारश्रियं
त्वां इत्थं कलयामि भक्तिविनतो लक्ष्मीश नारायणम् ॥६२

प्रह्लाद-नारद-पराशर-पुण्डरीक -
व्यासादिभागवतपुङ्गवहृन्निवासम् ।
भक्तानुरक्तपरिपालनपारिजात
लक्ष्मीनृसिह्म मम देहि करावलम्बम् ॥ ६३

प्रसीद मे महालक्ष्मि सुप्रसीद महाशिवे ।
अचला भव सुप्रीता सुस्थिरा भव मद्गृहे ॥ ६४

यथा वैकुण्ठनगरे यथा वै क्षीरसागरे
तथा मद्भवने तिष्ठ स्थिरं श्रीविष्णुना सह ॥ ६५

योगिनां हृदये नित्यं यथा तिष्ठसि विष्णुना ।
तथा मद्भवने तिष्ठ स्थिरं श्रीविष्णुना सह ॥ ६६

पृथ्वीपतित्वं पुरुषोत्तमत्वं
विभूतिवासं विविधार्थसिद्धिम् ।
सम्पूर्णकीर्तिं बहुवर्षभोगं
प्रदेहि मे लक्ष्मि पुनः पुनस्त्वम् ॥ ६७

वादार्थसिद्धिं बहुलोकवश्यं
युधि स्थिरत्वं ललनासुभोगम् ।
पौत्रादिलब्धिं सकलार्थसिद्धिं
प्रदेहि मे भार्गवि जन्मजन्मनि ॥ ६८

सुवर्णवृद्धिं कुरु मे गृहे श्रीः
सुधान्यवृद्धिं कुरु मे गृहे श्रीः ।
कल्याणवृद्धिं कुरु मे गृहे श्रीः
विभूतिवृद्धिं कुरु मे गृहे श्रीः ॥ ६९

* शुभं अस्तु *

---

## INDEX OF PROVERBS OCCURRING IN THE TEXT

# कल्याणमञ्जरीस्थानि सुभाषितानि


| | PAGE-SLOKA |
|---|---|
| अज्ञानी कातरः शोके विपत्तौ च न पण्डितः | 285-263A |
| अपहाय गृहे यो वै पितरौ तीर्थमाव्रजेत् ।<br>तस्य पापं तथा प्रोक्तं हनेन च तयोर्यथा ॥ | 5-40 |
| अप्रदाता पिता वाच्यः वाच्यश्चानुपयन् पतिः ।<br>मृते पितरि पुत्रश्च वाच्यो मातुररक्षिता | 237-37 |
| अब्भक्षाः वायुभक्षाश्च फलाहाराः दृढव्रताः ।<br>दुर्बला अपि विप्रा हि बलीयांसः स्वतेजसा ॥<br>जामदग्न्येन रामेण निर्जिताः क्षत्रिया युधि ।<br>पीतः समुद्रोऽगत्स्येन अगाधो ब्रह्मतेजसा ॥ | 196-54,55 |
| अर्धप्रसूता सुरभिः सप्तद्वीपवती मही। | 161-25B |
| असन्तुष्टोऽसकृत् लोकान् आप्नोत्यपि सुरेश्वरः ।<br>अकिञ्चनोऽपि सन्तुष्टः शेते सर्वाङ्गविज्वरः ॥ | 391-12 |
| ईश्वराणां ईश्वरस्य योग्यायोग्ये समा कृपा | 420-83A |
| एक एव परो हि आत्मा सर्वेषामपि देहिनाम् | 404-126B |
| एक एव त्रिधा भिन्नः परमात्मा महेश्वरः | 17-82A |
| कार्यभेदो न सिद्धश्चेत् रूपभेदोऽप्रयोजनः । | 17-81B |
| कालक्रीता क्रयक्रीता पितृदत्ता स्वयंयुता ।<br>नारीपुरुषयोरेवं उद्वाहस्तु चतुर्विधः ॥ | 119-77 |
| कालक्रीता तु वेश्या स्यात् क्रयक्रीता तु दासिका ।<br>गान्धर्वोद्वाहिता युक्ता भार्या स्यात् पितृदत्तका ॥ | 119-78 |

| | PAGE-SLOKA |
|---|---|
| कृत्वा परीक्षां कान्तस्य वृणोति कामिनी वरम् ॥ | 267-87B |
| कृत्वा विघ्नं तापसानां रमन्ते पापाचाराः तापसास्तान्न पश्येत् | 172-62, C D |
| क्रीडाभाण्डमिदं विश्वं प्रकृतेः परमात्मनः | 293-350B |
| जननी जनको यो वा सर्वं क्षमति स्नेहतः | 420-84A |
| जनस्य प्रतिपाल्यस्य क्षणे दोषः क्षणे गुणः | 420-83B |
| जन्मादयस्तु देहस्य विक्रिया नात्मनः क्वचित् | 404-129B |
| ज्ञानहीनस्तु पुरुषो मनुते बहु कामकम् | 19-100B |
| दातृप्रतिगृहीतृभ्यां सर्वार्थाः प्रभवन्ति हि | 317-13B |
| देह आद्यन्तवान् एष द्रव्यप्राणगुणात्मकः | 404-127B |
| धिक् तं श्रुतं तस्य सदा यस्य कान्ता मनोऽहरत् । | |
| धैर्यादाकृष्य लौल्येषु मज्जयत्यपि मानसम् ॥ | 217-64 |
| न केवला स्त्री राज्यार्हा पुरुषोऽपि तया विना | 117-57A |
| न च तत् विद्यते कर्म त्रिषु लोकेषु यत् भवेत् । | |
| ब्राह्मणानां असाध्यं च नृषु संस्थानचारिषु ॥ | 196-53 |
| न तथा निन्दकः पापी यथा श्रोता शशिप्रभे | 83-68 |
| न प्रमादश्च धर्मेषु कर्तव्यः | 177-10B |
| न प्रियाप्रिययो राजन् निष्ठा देहिषु दृश्यते | 400-93 |
| नहीश्वराज्ञा विफला | 419-69 |
| निर्विरोधसुखं राजन् को वा त्यजति दुर्लभम् | 268-97B |
| पतिश्वशुरता ज्येष्ठे पतिदेवरताऽनुजे । | |
| मध्यमेषु च पाञ्चाल्याः त्रितयं त्रितयं त्रिषु ॥ | 203-93 |
| पित्रोश्च पूजनं कृत्वा प्रक्रान्तिञ्च करोति यः । | |
| तस्य वै पृथिवीजन्यफलं भवति निश्चितम् ॥ | 5-39 |
| पुत्रस्य च महत्तीर्थं पित्रोश्चरणपङ्कजम् । | 5-41 |
| [illegible]चो हि पुरन्ध्रीणां गतिं धर्मस्य वै विदुः | 85-88 |

| | PAGE-SLOKA |
|---|---|
| पुरुषः पौरुषं च यत्नं आचरेत् नैव भाषयेत् | 330-83, B |
| पुरुषाश्च हरेरंशाः | 419-74B |
| प्रायो व्याकुलिता भवन्ति सुहृदः कन्याविवाहोत्सुकाः । | 95-178 |
| बन्धुर्वधार्हदोषोऽपि न बन्धोः वधं अर्हति । | 403-121B |
| भगवति चिदानन्दे कन्दे पुराणगिरां हरौ<br>प्रकृतिरुचिरे भावः प्रायो लगत्यचलात्मनाम् ॥ | 355-46 C,D |
| मङ्गलाचार्यसंयुक्तं महापुरुषलक्षणम् ।<br>अनुकूलाङ्गनायुक्तं अभिषिञ्चेदिति श्रुतिः ॥ | 117-58 |
| मनसा निश्चयं कृत्वा ततो वाचाभिधीयते ॥ | 183-62B |
| यत् वस्तु दृष्टं सर्वेषां तद्धि वक्तुं बुधः क्षमः | 420-80 |
| यथा माता च भगिनी भ्रातृपत्नी तथा सुता ।<br>एताः कुदृष्ट्या द्रष्टव्याः न कदापि विपश्चिता ॥ | 217-59 |
| यानि कानि च पापानि ब्रह्महत्यादिकानि च ।<br>ज्ञातिद्रोहस्य पापानि कलां नार्हति षोडशीम् ॥ | 291-322 |
| योऽविरोधसुखत्यागी स पशुर्नात्र संशयः । | 268-98A |
| यः कन्यापालनं कृत्वा करोति यदि विक्रयम् ।<br>विक्रेता धनलोभेन कुम्भीपाकं स गच्छति ॥ | 267-92 |
| वराय गुणहीनाय वृद्धाय अज्ञानिने तथा ।<br>दरिद्राय च मूर्खाय रोगिणे कुत्सिताय च ॥<br>अत्यन्त कोपयुक्ताय वा अत्यन्तं दुर्मुखाय च ।<br>पङ्गवे च अङ्गहीनाय च अन्धाय बधिराय च ॥<br>जडाय चैव मूकाय क्लीबतुल्याय पापिने ।<br>ब्रह्महत्यां लभेत् सोऽपि स्वकन्यां प्रददाति यः ॥ | 267-88,89,90 |
| विदग्धायाः विदग्धेन सङ्गमो गुणवान् भवेत् । | 268-97A |
| विना तु तपसा शम्भोः दर्शनं दुर्लभं नृणाम् । | 59-40 |

SLOKA-PAGE

विप्रान् स्वलाभसन्तुष्टान् साधून् भूतसुहृत्तमान् ।
निरहङ्कारिणश्शान्तान् नमस्ये शिरसा सकृत् ॥ 391-13
विवाहकरणं लोके विज्ञेयं परबन्धनम् । 19-101A
विवाहकरणे चैव तथा भवनकर्मणि ।
प्रारब्धस्यान्तपर्यन्तं यो हि यत्नं समाचरेत् ॥
स एव पुण्यवान् लोके कीर्तिमेति न संशयः ॥ 330-80,81A
शङ्खो हरेरधिष्ठानं यत्र शङ्खस्ततो हरिः 305-460
शान्ताय गुणिने चैव यूने च विदुषेऽपि च ।
साधवे च सुतां दत्वा दशयज्ञफलं लभेत् ॥ 267-91
शालग्रामशिला यत्र तत्र संनिहितो हरिः 312-537A
शिवलिङ्गार्चनादेवाचिरेण सुखमेधते 109-113B
सकृदम्शो निपतति सकृत् कन्या प्रदीयते 183-60B
संतानं परमो धर्मः 177-12B
सन्तुष्टो यर्हि वर्तेत ब्राह्मणो येन केन चित् ।
अहीयमानः स्वाद् धर्मात् स हि अस्य अखिलकामधुक् ॥ 391-11
सम्पाद्याः सर्वसम्भाराः शुभकार्येषु पुष्कलाः । 330-81B
समान धर्मिणी युक्ता भार्या पितृवशंवदा 119-79A
समुत्पन्ने च दुःखे च यस्य बुद्धिर्विशिष्यते ।
तस्य दुःखं विनश्येत सूर्ये दृष्टे यथा तमः । 6-51
सर्वा देव्यः प्रकृत्यंशाः 419-70B
सिद्धे फले नराणां हि दुःखं च सुखमुत्तमम् 263-47B

| | PAGE-SLOKA |
|---|---|
| सुखदुःखदो न चान्योऽस्ति यतः स्वकृतभुक् पुमान् | 403-121A |
| सुखं च दुःखं च भवाभवात्मकम् | 185-77A |
| सुखे दुखे भ्रमत्येव कालनेमिक्रमेण च । | 285-263B |
| स्वगृहे को विचारोऽस्ति | 317-16A |

## INDEX OF SUBJECT MATTER

## विषयानुक्रमणिका

N.B.—The First number denotes the page number and second the number of the Slokas.


PAGE-SLOKA

अ

अगस्त्यविवाहचिकीर्षावर्णनम् 155/1-6
अगस्त्यलोपामुद्राविवाहः 157/20-28
अरुन्धतीजन्मवर्णनम् 153/14
अरुन्धती वसिष्ठविवाहः 154
अहल्याजन्म 158
अहल्यापरिणयाय ब्रह्मकृतः पणः 160/15
अहल्यागौतमविवाहः 161

उ

उमायाः विश्वरूपवर्णनम् 38/18-26
उमाशङ्करविवाहः 52/150-169
उषायै पार्वत्या दत्तः वरः 232/10-13
उषासख्या चित्रलेखया अनिरुद्धानयनम् 233/21-25
उषाअनिरुद्धयोः गान्धर्वविवाहः 234/26
उषापतिना कृता देवीस्तुतिः 236/39-67
उषापित्रा अनिरुद्धबान्धवानां रणः 241/86-137

ऋ

ऋष्यश्रृङ्गजन्म 162/2-7
ऋष्यश्रृङ्गसमीपे वारमुख्यानां आगमनं प्रतारणा च 164/1-35

PAGE-SLOKA

ऋष्यश्रृङ्गशान्ताविवाहः 175

क

कामाविर्भाववर्णनम् 109/1-5
कामरतिविवाहः 223
कावेरीसागरविवाहवर्णनम् 187

कृ

कृष्णजाम्बवतोर्युद्धम् 409/20-26
कृष्णजाम्बवतीकल्याणम् 410

ग

गङ्गाशान्तनुसमागमः 228/30-42
गङ्गाशान्तनुविवाहः 230/51-58
गणेशकृतपितृपूजा 3/23-27
गणेशेन पितृभक्ति माहात्म्य प्रतिपादनम् 5/36-46
गणेशविवाहः 7/55-60

गो

गोदाविर्भावः 347
गोदाविषयिणी अशरीरिणी वाक् 347
गोदापूर्वजन्मवृत्तान्तकथनम् 348
गोदाबालक्रीडा 350/22-35

SLOKA-PAGE

गोदासौन्दर्यवर्णनम् 353/35-46
गोदाकृतं विष्णुवैभवश्रवणम् 355/51-85
गोदायै मार्गाशीर्षव्रतानुष्ठानाय उपदेशः 359
गोदायाः विरहव्यथावर्णनम् 360/98-113
गोदासख्या अनुग्रहया रङ्गनाथ समीपे गोदावृत्तान्तप्रतिपादनम् 363/126-170
गोदास्वयंवरवर्णनम् 378/202-217
गोदाकल्याणम् 386/243-254

गौ

गौर्या उमाख्याप्राप्तिः 78/21-22
गौर्यास्तपोवर्णनम् 80/41-44
गौरीनिकटे भिक्षुरूपेण शिवागमनम् 80/45-68
गौरीकल्याणवर्णना 96/185-197

च्य

च्यवनतपोवर्णनम् 206

जा

जाम्बवतीकल्याणम 410

त

तटातकायाः दिग्विजयात्रा-वर्णनम् 98/8-28

तु

तुलसीजन्म 259/8
तुलसीतपस्या 259/14-18

SLOKA-PAGE

तुलस्याः पूर्वजन्मवृत्तान्तवर्णनम् 260/22
तुलसीप्रार्थना 260/21-27
तुलसीशङ्खचूडसमागमः 264/64-147
तुलसीमाहात्म्यप्रतिपादनम् 309/499-516

द

दक्षसमीपे ब्रह्मण आगमनं विवाह प्रस्तावश्च 28/184-194
दाक्षायणीकृतं नन्दाव्रतम् 10/14-28
दाक्षायणीविवाहवर्णना 33/227-236

दे

देवसेना पाणिग्रहणाय षण्मुख प्रति इन्द्रप्रार्थना 129/49
देवसेनाषण्मुखविवाहवर्णनम् 129/54-121

द्रौ

द्रौपद्याः स्वयंवरमण्डपप्रवेशः 190/7-21
द्रौपदीविवाहः 200/80 116

प

पद्मावतीपित्रा मुहूर्तपत्रिकाप्रेषणम् 314
पद्मावतीपित्रे दूतीप्रेषणम् 322
पद्मावतीविवाहशुभदिननिश्चयः 323
पद्मावतीश्रीनिवासविवाहे देवानां सेवा 329
पद्मावतीकृता दुर्गाप्रार्थना 336
पद्मावतीश्रीनिवासकल्याणम् 343

पा

पार्वती सौन्दर्यवर्णनम् 62/70-77

SLOKA-PAGE

पार्वतीपरिणयः 73/174-193

मी

मीनाक्ष्याः दिग्विजययात्रा 98/8-28
मीनाक्षीकल्याणवर्णनम् 107/94-123

मे

मेनायाः सन्तानवर्णनम् 76/1-30

र

रत्याविर्भावः 218
रतिमन्मथविवाहः 223

रा

राधासौन्दर्यवर्णनम् 412/8-23
राधाया नन्दस्य वरप्राप्तिः 415
राधाकृतं बालकृष्णदर्शनम् 416
राधाकृष्णतत्त्वम् 417
राधाकल्याणम् 421
राधाकृष्णस्तुतिः 422/102-126

रु

रुक्मिण्या कृष्णसमीपे ब्राह्मण-प्रेषणम् 390/6-27
रुक्मिण्याः शुभ निमित्तोत्पति वर्णनम् 396/52
रुक्मिणीकृता दुर्गापूजा 398
रुक्मिणीहरणम् 399/80
रुक्मिकृष्णरणवर्णनम् 401/100-135
रुक्मिणीकल्याणम् 405/136-142

ल

लक्ष्मीप्रादुर्भावः 250/8, 253/37

SLOKA-PAGE

लक्ष्म्यभिषेकः 250/9-16
लक्ष्मीस्वयंवरः 252-254
लक्ष्मीस्तुतिः 254/46-69
ललितादेवीस्वरूपवर्णनम् 111/2-5
ललितास्तोत्रम् 111/8-35
ललिताकामेश्वरविवाहवर्णनम् 119/84-119

लो

लोपामुद्राजन्मवर्णनम् 156/7-11
लोपामुद्रा अगस्त्यविवाहवर्णनम् 157/20-28

व

वल्लीजन्म 137
वल्ल्या केदारक्षेत्ररक्षणम् 138/11-14
वल्लीगुहसंवादः 139/18-62
वल्लीसमीपे वृद्धवेषधारिगुहस्य आगमनम् 140
वल्लीपरिणयवर्णनम् 149/125-145
वसिष्ठारुन्धतीविवाहः 154

वि

विश्वकर्मनिर्मितविवाहमण्डप-वर्णनम् 39/35-62

श

शङ्खचूडस्य पूर्ववृत्तान्तवर्णनम् 276/277
शङ्खचूडेन तुलस्यै कालमहात्म्य-प्रतिपदनम् 283/250-267
शङ्खचूडदेवरणवर्णनम् 394/362,454

शा

शान्तनुजन्म 225/1-6

PAGE-SLOKA

शान्तनुगङ्गाविवाहः 230/51-58
शान्ताऋष्यशृङ्गविवाहः 175

शि

शिवस्तुतिः 12/36-67
शिवोत्कर्षः 17/77-84
शिवं प्रति देवकृता प्रार्थना 17/85-93
शिवं प्रति ब्रह्मविष्णुप्रार्थना 20/112-123
शिवेन दाक्षायण्यै वरप्रदानम् 23/135-140
शिवशक्त्योरैक्यप्रदिपादनम् 36/6-18
शिवदर्शनोत्सुकानां पुरस्त्रीणां वर्णनम् 57/25-43, 94/167-173
शिवस्वरूपवर्णनम् 45/84-90
56/9-12, 60/50-56
शिवगोत्रप्रवरप्रश्नः 69/144
शिवस्य नादमयत्व प्रतिपादनम् 70/151-167

श्री

श्रीनिवासेन पद्मावती पित्रे पत्र-प्रेषणम् 326
श्रीनिवासेन कुबेरात् ऋणादनम् 331

PAGE-SLOKA

श्रीनिवासेन ऋणपत्रलेखनम् 332
श्रीनिवासकल्याणम् 343

स

सत्यभामाकल्याणम् 411
सप्तर्षिहिमवत्संवादः 86/101-117

सा

सावित्रीजन्म 176/1-21
सावित्रीवरान्वेषणम् 180/35-45
सावित्रीसत्यवतोः विवाहः 185

सी

सीताविवाहवर्णनम् 217/9,44

सु

सुकन्याकृतः च्यवनायअपराधः 207/13
सुकन्याच्यवनयोर्विवाहः 208/24-28
सुकन्यापतिना च्यवनेन अश्विनी-वरप्रसादात् यौवनप्राप्तिः 209/29-41

स्य

स्यमन्तकमणिप्रति वर्णनम् 407
स्यमन्तकमणिप्रभाववर्णनम् 408

स्व

स्वाहाअग्निविवाहः 189

## INDEX OF STOTRAS

## स्तोत्राणां अनुक्रमणिका


| | PAGE-SLOKA |
|---|---|
| उमामहेश्वरस्तोत्रम् | 426/3—4 |
| कृष्णस्तोत्रम् | 243/109—128 |
| तुलसीस्तोत्रम् | 431/28—29 |
| देवीस्तोत्रम् | 236/41—72 240/79—84 428/10—24 429/20 |
| मीनाक्षीस्तोत्रम् | 429/20 |
| राधास्तोत्रम् | 422/102—126 |
| रामस्तोत्रम् | 431/30—39 |
| ललितादेवीस्तोत्रम् | 111/8 |
| लक्ष्मीस्तोत्रम् | 254/46—70 436/64—69 |
| विघ्नेश्वरस्तोत्रम् | 426/1—2 |
| विष्णुस्तोत्रम् | 245/117—129 435/55—63 |
| शिवस्तोत्रम् | 12/36—67 216/51—54 427/5—9 |
| सीतास्तोत्रम् | 433/40—45 |
| सीतारामस्तोत्रम् | 434/46—54 |
| सुब्रह्मण्यस्तोत्रम् | 430/25—27 |

## INDEX OF IMPORTANT NAMES
(with Derivetion)

## विशिष्टशब्दानां व्युत्पत्तिः


| | SLOKA-PAGE |
|---|---|
| अरुन्धतीशब्दव्युत्पत्तिः | 153/17 |
| ऋष्यश्रृङ्गशब्दव्युत्पत्तिः | 163/8 |
| कन्दर्पशब्दव्युत्पत्तिः | 213/25 |
| काम शब्दव्युत्पत्तिः | 213/24 |
| कामाक्षीशब्दव्युत्पत्तिः | 122/109—110 |
| कामेश्वरीशब्दव्युत्पत्तिः | 122/109—110 |
| कृष्ण शब्दव्युत्पत्तिः | 417/54A |
| गोदाशब्दव्युत्पत्तिः | 349/18 |
| चित्राश्वशब्दव्युत्पत्तिः | 181/48 |
| तुलसीशब्दव्युत्पत्तिः | 259/12—13 |
| मदनशब्दव्युत्पत्तिः | 213/25 |
| मन्मथशब्दव्युत्पत्तिः | 213/23 |
| शान्तनुशब्दव्युत्पत्तिः | 225/4 |
| श्रीकृष्ण शब्दव्युत्पत्तिः | 417/54B |
| सत्यवान्शब्दव्युत्पत्तिः | 181/47 |
| सन्ध्याशब्दव्युत्पत्तिः | 214/29 |
| सावित्रीशब्दव्युत्पत्तिः | 178/21 |

# INDEX OF IMPORTANT WORDS AND NAMES

## विशिष्टशब्दानुक्रमणिका


| | PAGE |
|---|---|
| **अ** | |
| अगस्त्यः | 155, 157 |
| अगस्त्यनिलयम् | 345 |
| अग्निः | 120 |
| अङ्गराजः | 174 |
| अत्रिः | 338 |
| अत्रिकुलोत्पन्ना | 343 |
| अदितिः | 268 |
| अनसूया | 268 |
| अनिरुद्धः | 233, 236 |
| अनिरुद्धविवाहः | 234 |
| अनुग्रहा | 362, 363, 379 |
| अप्सरसः | 249 |
| अरुन्धती | 84,153,176,204,268,339 |
| अर्जुनद्रौपदीविवाहः | 200 |
| अर्जुनेन धनुषि ज्यारोपणम् | 197 |
| अवताराः | 331 |
| अश्वत्थराजः | 332 |
| अश्वपतिः | 176 |
| अष्टवर्गम् | 334 |
| अहल्या | 159, 268 |
| अहिपति | 366 |

| | PAGE |
|---|---|
| **आ** | |
| आकाशराजः | 322 |
| आज्यपाः | 218 |
| आत्मविद्या | 255 |
| आदित्याः | 121 |
| आदिसूकरः | 348 |
| आन्वीक्षिकी | 255 |
| आनकदुन्दुभिः | 233 |
| आनर्त्तः | 393 |
| **इ** | |
| इन्द्रः | 249 |
| इन्द्राणी | 128, 204 |
| इष्ट | 392 |
| इक्ष्वाकुः | 357 |
| इक्ष्वाकुवंश | 380 |
| **उ** | |
| उच्चैःश्रवाः | 249 |
| उत्तरफल्गुनी | 323 |
| उद्धवः | 422 |
| उद्धवकृतं राधास्तोत्रम् | 422 |
| उपनन्दः | 241 |
| उमा | 21, 36 |

# विशिष्टशब्दानुक्रमणिका


| | PAGE |
|---|---|
| उषर्बुद | 361 |
| उषा | 199, 232, 283 |
| **ऊ** | |
| ऊर्मिला | 319 |
| ऊर्वशी | 132 |
| **ऋ** | |
| ऋणपत्रम् | 332 |
| ऋष्यशृङ्गः | 162 |
| **ए** | |
| ऐरावतः | 249 |
| **ओ** | |
| ओषधिप्रस्थम् | 85 |
| **औ** | |
| औशीनरः | 182 |
| **क** | |
| कमलोद्भवः | 259 |
| कर्णः | 194 |
| कर्पूरनीराजन | 386 |
| कल्हारदाम | 380 |
| कव्यम् | 189 |
| कश्यपः | 290,338 |
| **का** | |
| काञ्चनमाला | 98 |
| काञ्चीपुरम् | 137 |
| काञ्चीवनम् | 272 |
| कामः | 213 |
| कामाक्षी | 122 |
| कामेश्वरः | 117 |

| | PAGE |
|---|---|
| कामेश्वरी | 122 |
| काली | 76 |
| कावेरी | 186 |
| काश्यपः | 162, 167 |
| **कु** | |
| कुटिला | 76 |
| कुण्डिनपतिः | 394 |
| कुन्ती | 199 |
| कुबेरः | 120 |
| कुम्भाण्डः | 233 |
| कुम्भोदरः | 105 |
| कुरुकापुरम् | 374, 376, 382 |
| कुलशेखर | 376 |
| कुहूः | 404 |
| कृष्णः | 194,199,390,412 |
| कृष्णा | 193,198 |
| **के** | |
| केरल | 379 |
| **को** | |
| कोटरा | 243 |
| **कौ** | |
| कौतुक | 421 |
| कौस्तुभमणिः | 249 |
| **क्षे** | |
| क्षेमः | |
| **ग** | |
| गङ्गायमुने | 120 |
| गङ्गा | 228, 230 |

## विशिष्टशब्दानुक्रमणिका


PAGE

गणेशः 2,3,4,5
गण्डकी 308
गदाग्रज 392
गन्धमादनः 288
गर्गः 64,414

गा

गालवः 338

गि

गिरिजा 385,392,395

गी

गीष्पतिः 324

गु

गुह्यविद्या 255

गृ

गृह्योक्तविधिः 35

गो

गोदा 349,350,355,375
गोप्यः 359
गोमती 289
गोमायु 392
गोलोक 269,417

गौ

गौतमः 160,338
गौतमवधू 371
गौरी 232,395

ग्र

ग्रहशान्ति 394

PAGE

च

चन्द्रभागा 154,278
चन्द्रभास्करौ 120

चि

चित्ररथः 278
चित्रलेखा 233,234
चित्राश्वः 181
चिन्तामणिमाला 100

चे

चेदिपतिः 394

चै

चैद्य 351,390,392

चो

चोल 379
चोलेन्द्रसिह्मः 358

च्य

च्यवनः 206, 338

छा

छाया 385

ज

जगद्विमोहनः 358
जनकः 319
जनकनन्दिनी 371
जनार्दनः 193,364
जयन्तः 128
जरासन्धः 395

## विशिष्टशब्दानुक्रमणिका


PAGE

**जा**

जाम्बवान् 408,409
जाम्बवती 410
जायापती 388

**जि**

जिष्णुः 195,385

**जी**

जीवन्मुक्तिपुरेश्वरः 107

**ज्व**

ज्वरः 243

**त**

तटातका 93

**ता**

तापसारण्यम् 154
तारा 268
तार्क्ष्य 382,386

**तु**

तुलसी 259,308

**तो**

तोण्डमानः 334, 337
तोण्डीर 379

**द**

दक्षः 9, 221
दक्षिणा 268
दण्डनीतिः 255
दधीचिः 338
दनुः 290
दन्तवक्त्रः 395

PAGE

दन्ति 371
दमघोषः 394
दमघोषसुत 392
दमयन्ती 176,204.268
दशरथः 316

**दा**

दाक्षायणी 24
दारुक 393

**दु**

दुर्गाम् 336.410
दुर्वासाः 338

**दे**

देवकी 410
देवसेना 269
देवसेनापतिः 124
देवहूतिः 268

**द्यु**

द्युमत्सेनाः 180

**द्र**

द्रविडसूक्ति 376

**द्रु**

द्रुपदः 192
द्रुपदात्मजा 384

**द्रौ**

द्रौपदी 176, 190, 192, 371

**द्वा**

द्वारका 390

PAGE

द्वै

द्वैपायनः 199

ध

धन्वन्तरिः 253
धन्विनव: 346
धन्विनूतनपुर 366
धरणी 322, 339
धरा 268
धर्मध्वजः 258
धर्मवर्मा 358
धाशब्द 877

धि

धिषणः 323

धृ

धृष्टद्युम्नः 192

न

नन्दः 241,412,414
नन्दाव्रतम् 10
नन्दी 101
नरवाहनः 330
नलायनी 176
नववधू 392
नारदः 70,138,182,183
नारायणः 321
नासत्यौ 209

नि

निचुलापुरम् 358

PAGE

निष्कः 332,342

नी

नीपवनाधीशः 102
नीलकण्ठः 330

नृ

नृसिम्हः 392

प

पङ्क्तिस्यन्दन 357
पञ्चाक्षरमन्त्रः 99
पद्मालया 385
पद्मावती 324,336
परमेष्ठी 391
पराचलः 128
पराङ्कुश 377
पर्वतेश्वरः 39

पा

पाञ्चजन्य 370
पाञ्चालराजः 190
पाण्डवाः 190,203
पाण्ड्य 379
पाण्ड्येश्वरः 108,376
पारिजातः 249,253
पावकः 189

पि

पितामहः (ब्रह्मा) 16,177

| | PAGE |
|---|---|
| **पु** | |
| पुलस्त्यः | 338 |
| पुष्करक्षेत्र | 418 |
| पुष्टिः | 268 |
| पुष्पदन्तः | 279 |
| पुष्पभद्रा | 272,288 |
| **पू** | |
| पूर्त | 392 |
| **पृ** | |
| पृथा | 204 |
| पृषती | 191 |
| **पौ** | |
| पौण्ड्रकः | 395 |
| **प्र** | |
| प्रतीपः | 225,226 |
| प्रद्युम्नः | 233,241 |
| प्रबन्धम् | 360 |
| प्रसेनः | 408 |
| **ब** | |
| बकुलमालिका | 321 |
| बदरिकाश्रमः | 260 |
| बदरीवनम् | 259 |
| बलभद्र | 351 |
| बलाहक | 393 |
| बलिः | 249,371 |
| **बा** | |
| बाणः | 231.235 |

| | PAGE |
|---|---|
| **बु** | |
| बुद्धिः | 7 |
| **बृ** | |
| बृन्दावनी | 261 |
| **ब्र** | |
| ब्रह्मा | 115,120,418 |
| **भ** | |
| भगीरथः | 327 |
| भट्टनाथ | 366,375 |
| भद्रपीठा | 387 |
| भद्रा | 204 |
| भद्रेश्वरः | 83 |
| भरतः | 319 |
| भरद्वाजः | 338 |
| भवानी | 268 |
| **भा** | |
| भार्गवः | 207,256 |
| भास्करक्षेत्र | 418 |
| **भि** | |
| भिक्षुः | 81 |
| **भी** | |
| भीष्मक | 390 |
| **भृ** | |
| भृगुः | 338 |
| भृङ्गकीटविधिः | 372 |
| **भै** | |
| भैष्मी | 397 |

PAGE

भो

भोजकट 405

म

मङ्गलाष्टकम् 341
मदनः 213
मधुरापुरी 103
मधुसूदनः 393
मन्मथः 213,364
मनोभवः 215
मरीचिः 31,290
मरुतः 121
महादेवी 111
महामाया 410
महालक्ष्मीः 268
महाविद्या 255
मही 347

मा

माण्डवी 319
माधवः 205,235
माधवी 258
मार्कण्डेयः 338

मी

मीनध्वजः 109
मीनाक्षी 98

मु

मुचुकुन्दः 129

PAGE

मू

मूर्द्धास्फाटी 137
मूलप्रकृतिः 417

मृ

मृघशीर्षम् 323
मृत्युञ्जयः 292

मे

मेघपुष्प 393
मेधातिथिः 152
मेध्यारण्यम् 184
मेनका 132
मेना 55

मै

मैनाकः 75

य

यजुश्शाखा 329
यज्ञविद्या 255
यज्ञसेनः 200
यदुदेव 393
यदुनन्दन 393,396
ययातिः 182,343

यु

युधाजित् 316
युधिष्ठिरः 193
युयुधानः 241

| | PAGE | | PGEE |
|---|---|---|---|
| **र** | | रुद्राः | 121 |
| रङ्गपतिः | 385 | रुद्राणी | 395 |
| रङ्गराज | 356 | **रो** | |
| रङ्गेशं | 362 | रोहिणी | 204,268 |
| रतिः | 218,268,386 | **ल** | |
| रत्नाकरः | 120 | लक्ष्मणः | 319 |
| रम्भा | 132 | लक्ष्मीः | 199,204 |
| रमा | 250 | लक्ष्मीपतिः | 120 |
| **रा** | | लवली | 138 |
| रागिणी | 76 | **ला** | |
| राघवः | 371 | लाभः | 8 |
| राक्षसविधि | 392 | **लो** | |
| राधा | 412,416,420 | लोपामुद्रा | 156,176 |
| राधिका | 262,268,415,420 | लोमपादः | 163 |
| राधिकामन्त्र | 262 | **व** | |
| रामः | 194,317,357,395 | वकुला | 534 |
| रामकृष्णौ | 233 | वटद्यामपर्ति | 355 |
| राममुद्रा | 332 | वरुणः | 120 |
| राशब्द | 417 | वल्लभदेव | 376 |
| रासेश्वरी | 260 | वल्ली | 149 |
| **रु** | | वसवः | 121 |
| रुक्मकेशः | 390 | वसिष्ठः | 176,318,329,338 |
| रुक्मबाहुः | 390 | वसुदानम् | 337 |
| रुक्ममाली | 390 | वसुदेव | 343 |
| रुक्मरथः | 390 | वसुपालः | 330 |
| रुक्मिणी | 256,351,371,390,397 | **वा** | |
| रुक्मी | 390 | वामनत्वं | 317 |

PAGE

वार्ता 255
वारुणी 253
वायुः 186
वाल्मीकिः 338
वासिष्ठगोत्रम् 343
वासुदेवः 212

वि

विघ्नेशः 142
विदर्भ 390
विदर्भराजः 156
विदर्भाः 393
विदूरथः 395
विधाता 121
विप्रचित्तिः 290
विभाण्डक 167
विभीषण 357,371
विमला 378
विरजा 276
विश्वकर्मा 7,39,115,120,254,338
विश्वरूपप्रजापतिः 7
विश्वामित्रः 338
विष्णुचित्तः 347,348,355,375
विष्वक्सेनः 334
विष्णुमाया 414

वी

वीटिका 329
वीरबाहुः 124
वीरभद्रः 91

वृ

वृद्धब्राह्मणः 303
वृद्धि 332
वृष्णयः 241

वे

वेङ्कटाद्रिपति 356

वै

वैकर्तनः 194
वैजयन्ती 250
वैदर्भी 157,390,396

श

शक्तिः 37,154
शङ्खचूडः 261,264,266
शङ्खजातिः 304
शची 199,268,385
शठकोप 375,378
शठजित् 376
शठरिपुः 378
शठारिः 377,385
शतरूपा 268
शत्रुघ्नः 319
शरजन्मा 3
शर्यातिः 206

शा

शान्तनु 225—229
शान्ता 173,175

| | PAGE |
|---|---|
| **शि** | |
| शिप्रा | 154 |
| शिबिः | 182 |
| शिवः | 1,137 |
| शिवा | 1 |
| शिशुपाल | 400 |
| **शी** | |
| शीतांशुः | 253 |
| **शु** | |
| शुकः | 325 |
| **शू** | |
| शूरसेन | 343 |
| **शृ** | |
| शृङ्गार | 24 |
| **शे** | |
| शेषः | 334 |
| शेषाद्रिनाथः | 328 |
| **शै** | |
| शैब्य | 393 |
| शैलादिः | 42 |
| **शो** | |
| शोणितपुरम् | 231 |
| **श्र** | |
| श्रवणम् | 323 |
| **श्री** | |
| श्रीः | 250,253,386 |

| | PAGE |
|---|---|
| श्रीनिवासः | 324,331 |
| श्रीपतिः | 331 |
| श्रीरङ्गनायक | 380 |
| श्रीशैलः | 228 |
| श्रीस्तुतिः | 257 |
| श्रीसूक्तम् | 253 |
| श्रुतकीर्तिः | 319 |
| श्रीपरिपूर्णः | 138 |
| श्रीसन्धिनगरम् | 125 |
| **श्वे** | |
| श्वेतवनम् | 186 |
| **ष** | |
| षण्मुखः | 2,125,138,142 |
| **स** | |
| सत्यवान् | 181 |
| सती | 9 |
| सत्यभामा | 411 |
| सत्राजित् | 407,408 |
| सनकः | 338 |
| सनन्दनः | 338 |
| सन्ध्या | 152,233 |
| सप्तर्षयः | 84 |
| सप्तार्चिस् | 388 |
| सरस्वती | 420 |
| सरःप्रभृतयः | 377 |
| सहस्रशीर्षापुरुष | 341 |
| सह्यकन्या | 357 |

PAGE

सा

साध्याः 121
साम्बः 241
सारणः 241
साल्वः 395
सावित्री 177,178,268,344

सि

सिद्धाश्रमः 288
सिद्धिः 7

सी

सीता 176,256

सु

सुकन्या 206
सुग्रीव 393
सुदामा 261,266,276
सुधर्मणः 343
सुन्दरपाण्डयः 98
सुन्दरराजस्य 356
सुनाभः 76
सुब्रह्मण्यः 126
सुमतिः 102
सुरभिः 161,253
सुवीर 343

PAGE

सू

सूकररूपी 347
सूर्यः 153

सो

सोमपाः 218
सोमप्रभा 82
सङ्कर्षणः 400,403

स्क

स्कन्दः 188

स्थ

स्थाणुः 212

स्य

स्यमन्तकः 407

स्व

स्वाहा 188,199,204,268,385

ह

हरिः 205,249
हल्लकस्रक् 375
हलायुधः 193
हव्यम् 189
हालास्येशः 101
हविर्धानी 249

हु

हुताशन 420

## ERRATA

| PAGE | LINE | FOR | READ |
|---|---|---|---|
| 1 | 1 | सम्यजनि | सम्यग्जनि |
| 1 | 3 | तत्वं | तत्त्वं |
| 13 | 6 | स्वात्मानीदं | स्वात्मनीदं |
| 15 | 11 | सर्वे | सर्वः |
| 16 | 2 | सद्भिक्ति | सद्भक्ति |
| 19 | 5 | सुरश्रैष्ठौ | सुरश्रेष्ठौ |
| 22 | 5 | तथास्तुतिं | तथास्तु इति |
| 22 | 8 | सर्वेदेवैश्च | सर्वैर्देवैश्च |
| 28 | 18 | सकाशं महं | सकाशमहं |
| 29 | 10 | वाञ्छित | वाञ्छितं |
| 32 | 8 | निर्गच्छत्स | निरगच्छत् स |
| 33 | 2 | श्रष्ठं | श्रेष्ठं |
| 33 | 10 | मद्भक्त्या | सद्भक्त्या |
| 34 | 11 | गरुढ | गरुड |
| 35 | 9 | सर्वज्ञ | सर्वज्ञः |
| 37 | 13 | शक्ता | शक्ताः |
| 37 | 3 | नवकन्यका | तव कन्यका |
| 39 | 3 | तथात्वं | तथा त्वं |
| 40 | 7 | क्वाचित् | क्वचित् |
| 40 | 5 | निममे | निर्ममे |
| 41 | 2 | दाममि | दामभि |

| PAGE | LINE | FOR | READ |
|---|---|---|---|
| 42 | 14 | श्चकलशा | श्च कलशा |
| 42 | 1 | विश्वशो | विश्वेशो |
| 43 | 1 | ग्रहीष्यति | ग्रहिष्यति |
| 44 | 19 | ब्रह्मद्याश्च | ब्रह्माद्याश्च |
| 56 | 14 | विष्णवाद्यैः | विष्ण्वाद्यैः |
| 59 | 3 | विष्णवादिभिः | विष्ण्वादिभिः |
| 61 | 18 | प्रपुल्ल | प्रफुल्ल |
| 61 | 15 | पुल्ल | फुल्ल |
| 63 | 8 | विष्णवादयो | विष्ण्वादयो |
| 65 | 18 | पर्वतो | पर्वताः |
| 66 | 14 | पुरस्कत्य | पुरस्कृत्य |
| 66 | 14 | ह्मिगिरेः | हिमगिरेः |
| 68 | 9 | शिवा ति | शिवा अति |
| 68 | 7 | लौक्रिक | लौकिक |
| 69 | 17 | दादुं | दातुं |
| 71 | 12 | जानति | जानाति |
| 72 | 17 | ना दस्य | नादस्य |
| 79 | 19 | उक्ता | उक्ताः |
| 79 | 6 | देशागमत | देशमगमत् |
| 80 | 11 | शूलवृक् | शूलधृक् |
| 84 | 18 | शुशिना | शुचिना |
| 84 | 10 | देवतैः | दैवतैः |
| 85 | 3 | तथान्येः | तथान्यैः |

| PAGE | LINE | FOR | READ |
|---|---|---|---|
| 86 | 8 | तवाजिर | तवाजिरे |
| 87 | 17 | अद्यव | अद्यैव |
| 88 | 4 | शैलपतिः | शैलपतिः प्राह |
| 88 | 4 | प्र्वतं | पर्वतं |
| 94 | 16 | एकन | एकेन |
| 94 | 11 | अनिन्दित | अनिन्दत |
| 95 | 20 | प्रमदित | प्रमुदित |
| 98 | 7 | शिष्टनां | शिष्टानां |
| 99 | 6 | आक्रमात् | आक्रमत् |
| 101 | 17 | क्राञ्चन | काञ्चन |
| 104 | 5 | मत्रा | मात्रा |
| 111 | 11 | शङ्काशां | सङ्काशां |
| 114 | 18 | दे्व्य | दे्व्यै |
| 128 | 11 | उक्वा | उक्त्वा |
| 129 | 18 | लीलमङ्गल | लीलामङ्गल |
| 129 | 4 | तटाकदीन् | तटाकादीन् |
| 130 | 10 | मन्धराः | मन्थराः |
| 131 | 9 | ” | ” |
| 132 | 20 | स्तदा | तदा |
| 136 | 10 | दवा | देवाः |
| 158 | 10 | मतिं | पतिं |
| 163 | 5 | आनय | आनाय |
| 164 | 3 | द्रष्टुं | द्रष्टुं |

| PAGE | LINE | FOR | READ |
|---|---|---|---|
| 169 | 8 | विभक्ता | विभक्ताः |
| 171 | 6 | रूपवन्ती | रूपवन्ति |
| 172 | 15 | मघूनि | मधूनि |
| 177 | 4 | वरमेत | वरमेतं |
| 178 | 12 | कास्मिन् | कस्मिन् |
| 187 | 5 | स्वेत् | भवेत् |
| 194 | 9 | आरोच्य | आरोप्य |
| 198 | 9 | मागथ | मागध |
| 207 | 13 | खाल्विदं | खल्विदं |
| 207 | 2 | पर्यपृज्छत् | पर्यपृच्छत् |
| 208 | 17 | अभिज्ञातं | अभिज्ञातं |
| 235 | 10 | आतायिभि: | आततायिभिः |
| 237 | 9 | कर्ति | कीर्ति |
| 237 | 8 | चेव | चैव |
| 237 | 5 | कूप्माण्डी | कूष्माण्डी |
| 240 | 11 | शि ो | शिवे |
| 240 | 5 | ब्रह्माणि | ब्रह्माणी |
| 245 | 5 | स्वघेदग्तु | स्वहग्वेतु |
| 253 | 2 | तुष्टवु: | तुष्टुवुः |
| 254 | 1 | रात्री: | रात्रिः |
| 254 | 1 | प्रभ | प्रभा |
| 256 | 13 | पद्माक्षा | पद्माक्षी |
| 258 | 15 | साध्दं | सार्धं |

| PAGE | LINE | FOR | READ |
|---|---|---|---|
| 259 | 6 | सहंती | सहन्ती |
| 263 | 16 | श चकार | च चकार |
| 263 | 4 | ज्ञणं | क्षणं |
| 266 | 2 | राधि काकोपात् | राधिकाकोपात् |
| 266 | 1 | राधा भयात् | राधाभयात् |
| 267 | 2 | लभत् | लभेत् |
| 279 | 17 | दुगमाभिः | दुर्गमाभिः |
| 330 | 21 | अरिन्दमा | अरिन्दम |
| 423 | 6 | | दक्षसुतायै |

---

PRINTED AT THE HIND PRESS (P) LTD., 113. RAMAKRISHNA MATH ROAD, MYLAPORE, MADRAS-28.